गृहीत्वा मुनिरुत्सङ्गे कुरङ्गतरलेक्षणाम् ।
जीवनीं तामनङ्गस्य जगाद जगतीपतिम् ॥ ४४ ॥
उदितेन जगन्नेत्रशतपत्रविकाशिना ।
भवता भाति लोकोऽयं देवेन च विवस्वता ॥ ४५ ॥
अहो नु तव नास्त्येव विभूतिसुलभोद्भवः । 5
साधोरिव गुणद्वेषः संमोहोपचितो मदः ॥ ४६ ॥
लोकनाथस्य ते लोककारुण्यपूर्णचेतसः ।
राजन् मैत्रीजुषा कीर्तिः स्थिरा पारमिता परम् ॥ ४७ ॥
अखेदसरलो दाता निर्व्याजसुकृतो भवान् ।
अत एव विशेषेण माननीयो मनीषिणाम् ॥ ४८ ॥ 10
पद्मोदरसमुद्भूता कन्या कमललोचना ।
होमावशेषपयसा वर्धितेयं मयाश्रमे ॥ ४९ ॥
गृह्यतामग्रमहिषी पत्नीत्वे भवता नृप । D 75
विष्णोः श्रीरिव योग्येयं तवैव पुरुषोत्तम ॥ ५० ॥
यज्ञपुण्यफलं पूर्णं कालेन मम दास्यसि । 15
इत्युक्त्वा विधिना राज्ञे कन्यां दत्वा ययौ मुनिः ॥ ५१ ॥
प्रियां पद्मावतीं राजा रतिं प्राप्येव मन्मथः ।
अरंस्त रुचिरोद्याने सुकृते पुण्यवानिव ॥ ५२ ॥
ततः कालेन सा पुत्रं वंशवल्लीव मौक्तिकम् ।
असूत पद्मचूडाख्यं गुणानां दर्पणं पितुः ॥ ५३ ॥ 20
शक्रादिभिर्लोकपालैरनुलङ्घ्यमहोदयः ।
संस्तूयमानचरितः स्वयं कमलजन्मना ॥ ५४ ॥
यशःसौरभसंभारसंपूरितदिगन्तरः ।
सर्वार्थिसार्थकल्याणकलनाकल्पपादपः ॥ ५५ ॥[1]
स्मृत्वा मुनेर्वचः काले कर्तुं विपुलदक्षिणाम् । 25
अहिंसावसुसंपूर्णामाजहार महीपतिः ॥ ५६ ॥
तस्मिन् यज्ञे समाजग्मुः सर्वकामैरनर्गले ।
मुनयो भार्गवमुखा नृपा दुष्प्रसहादयः ॥ ५७ ॥
वर्तमाने मखे तस्मिन् निःसंख्यवसुवर्षिणि । D 77
रक्षोरूपः समुत्तस्थौ वह्निमध्यात् सुरेश्वरः ॥ ५८ ॥ 30

१ सर्व्वार्थसार्थ°.

उपसृत्य स भूपालं कृशो विकृतविग्रहः ।
क्षुत्पिपासार्दितोऽस्मीति ययाचे पानभोजनम् ॥ ५९ ॥
शासनादथ भूभर्तुस्तस्मै विविधभोजनम् ।
उपनिन्युः परिचिताः पानं च परिचारकाः ॥ ६० ॥
5 ततः किंचिद्विहस्यैव क्षितिपं प्राह राक्षसः ।
नेदमस्मत्प्रियं राजन् वयं हि पिशिताशनाः ॥ ६१ ॥
सद्योहतस्य मांसेन रुधिरेण च भूयसा ।
तृप्तिरुत्पद्यतेऽस्माकं दीयतां यदभीप्सितम् ॥ ६२ ॥
सर्वकामप्रदोऽसीति त्वामहं समुपागतः ।
10 ददामीति प्रतिश्रुत्य न निषेधस्तवोचितः ॥ ६३ ॥
इति रक्षोवचः श्रुत्वा करुणाकुलितो नृपः ।
अहिंसानियमेनाभूदर्थिवैमुख्यदुःखितः ॥ ६४ ॥
सोऽचिन्तयत्तदा दैवाज्जातोऽयं धर्मसंशयः ।
न सहे दुःसहां हिंसां न नैष्फल्यमर्थिनः ॥ ६५ ॥
D 79 15 न च मांसं शरीरेभ्यो लभ्यते वैशसं[1] विना ।
नाहं पिपीलकस्यापि कायक्लेशलवं सहे ॥ ६६ ॥
दत्वाहं सर्वभूतेभ्यः पुण्यामभयदक्षिणाम् ।
कथमस्मै प्रयच्छामि मांसं प्राणिवधोद्भवम् ॥ ६७ ॥
इति संचिन्त्य नृपतिस्तमूचे करुणाकुलः ।
20 स्वशरीरसमुत्कृत्तमसृङ्मांसं ददामि ते ॥ ६८ ॥
इत्युक्ते भूमिपतिना बभूवाकुलितं जगत् ।
न च देहव्ययोत्साहं सचिवास्तस्य सेहिरे ॥ ६९ ॥
प्रणयाद्वार्यमाणोऽपि भूपालैर्मुनिभिस्तथा ।
ददौ स्वदेहमुत्कृत्य तस्मै मांसमसृग्वसाम् ॥ ७० ॥
25 आकण्ठं पीतरक्तेन राक्षसेन क्षितिप्रभोः ।
भक्ष्यमाणेषु मांसेषु क्षणं क्षितिरकम्पत ॥ ७१ ॥
ततः पद्मावती देवी पतिं दृष्ट्वा तथागतम् ।
विलपन्ती निपतिता मोहमूर्च्छाकुलाभवत् ॥ ७२ ॥
मनुजेन्द्रस्य देवेन्द्रस्तद्दृष्ट्वा सत्त्वमूर्जितम् ।
30 रक्षोरूपं परित्यज्य तमुवाच कृताञ्जलिः ॥ ७३ ॥

---

१ वैगमं.

अहो नु कर्मणा राजन् दुष्करेण तवामुना । D 81
रोमाञ्चकञ्चुकाकीर्णः कायः कस्य न जायते ॥ ७४ ॥
अहो पुण्यमसामान्यमहो सत्त्वमनुत्तरम् ।
अहो धैर्यममर्यादं राजन् विरजसस्तव ॥ ७५ ॥
दुःखिताः परदुःखेषु निर्लोभा दुर्लभेषु च । 5
विपक्षेषु क्षमावन्तः सन्तः सुकृतसेतवः ॥ ७६ ॥
समुन्मिषति कोऽप्येष सत्त्वोत्साहो महात्मनाम् ।
त्रैलोक्यं करुणार्द्राणां येन यात्यनुकम्प्यताम्[1] ॥ ७७ ॥
उक्त्वेति दिव्यौषधिभिस्तं कृत्वा स्वस्थविग्रहम् ।
प्रसाद्य लज्जावनतः शक्रः स्वनिलयं ययौ ॥ ७८ ॥ 10
ततः समाप्ते विधिवद्यज्ञे राज्ञां महीपतिः ।
चक्रे मुनिवराणां च पूजां त्रिदशपूजितः ॥ ७९ ॥
स रत्नवर्षैर्यज्ञान्ते कन्याग्रामपुरप्रदः ।
सहितं त्रिदशार्हेण हरिणा हेममालिना ॥ ८० ॥
ददौ राजगजं ब्रह्मरथाख्याय पुरोधसे । 15
योजनानां शतं तूर्णं[2] एकेनाह्ना प्रयाति यः ॥ ८१ ॥
तस्मै समर्पितं दृष्ट्वा राज्ञा भद्रगिरिं गजम् । D 83
अभूद्दुष्प्रसहो राजा तत्स्पृहाकृष्टमानसः ॥ ८२ ॥
प्रयातेष्वथ भूपेषु विस्मितेषु मखश्रिया ।
समर्पिते यज्ञफले भार्गवाय महीभुजा ॥ ८३ ॥ 20
तमुवाच समभ्येत्य स्वस्तिवादपुरःसरम् ।
मरीचिशिष्यो वाह्लीकः प्राप्तपूजासनो मुनिः ॥ ८४ ॥
राजन्नध्ययनस्यान्ते गुरुर्मे गुरुदक्षिणाम् ।
ईहते परिचर्यार्थी सामान्यजनदुर्लभाम् ॥ ८५ ॥
एकस्त्वमेव विधिना निर्मितो दुर्लभप्रदः । 25
बहवो जातु जायन्ते न लोके कल्पपादपाः ॥ ८६ ॥
देवी पद्मावती पुत्रसहिता गुरवे मम ।
तपःकृशाय वृद्धाय दीयतां परिचारिका ॥ ८७ ॥
इत्युक्ते मुनिना राजा दयिताविप्रयोगजाम् ।
रुजं संस्तभ्य मनसा तमूचे धैर्यभूधरः ॥ ८८ ॥ 30

---

१ यात्यनुकम्पताम्. २ तूर्णे.

प्रयच्छामि मुने तुभ्यमीप्सितां गुरुदक्षिणाम्।
सहितां युवराजेन जीविताभ्यधिकां प्रियाम्॥ ८९ ॥
D 85 इत्युक्त्वा ससुतां तस्मै ददौ पद्मावतीं नृपः।
स्वजीविते विनिःस्नेहस्त्यागः सत्त्वमयात्मनाम्॥ ९० ॥
5 आदाय राजदयितां विरहक्लेशकातराम्।
सपुत्रामाश्रमं गत्वा प्रददौ गुरवे मुनिः॥ ९१ ॥
अत्रान्तरे दुष्प्रसहः कुरुराजः क्षितीश्वरम्।
दृप्तो ययाचे दूतेन भूत्यै भद्रगिरिं गजम्॥ ९२ ॥
पुरोहितार्पितं राजा न ददौ द्विरदं यदा।
10 तदा विपुलसैन्येन स्वयं योद्धुं समाययौ॥ ९३ ॥
बलिना कुरुराजेन रुद्धेषु पुरवर्त्मसु।
बभूव भूमिपालस्य सैन्यं रणरसोद्भटम्॥ ९४ ॥
स वीरकुञ्जरहरिः शक्तोऽप्यरिविदारणे।
जनक्षयभयोद्विग्नः कारुण्यात् समचिन्तयत्॥ ९५ ॥
15 अहोऽनुकूलमित्रं मे राजा दुष्प्रसहः परम्।
मातङ्गलोभमोहेन सहसा शत्रुतां गतः॥ ९६ ॥
स्नेहान्ताः सुजनैः स्नेहा निःस्नेहान्ताश्च मध्यमैः।
दुर्जनैर्घोरवैरान्ता भवन्ति प्राणहारिणः॥ ९७ ॥
अहो विभवलोभेन क्षणक्षयिणि जीविते।
20 समुद्यमोऽयमस्माकं परप्राणनिपातने॥ ९८ ॥
D 87 हिंसयापप्रशान्तानां सक्तानां[1] कलिकर्मसु।
रणरक्ताभिषिक्तानां भक्तार्थोऽयं समुद्यमः॥ ९९ ॥
सेवाविक्रीतजीवानां चण्डपिण्डार्थिनामयम्।
कलहो दुःसहः क्रौर्यपिशुनानां शुनामिव॥ १०० ॥
25 अहो विभवलुब्धानां परसंतापशीतलाः।
स्वसुखायैव धावन्ति नृशंसचरिता धियः॥ १०१ ॥
ये युधि सिद्धिसंनद्धा रक्तान्तां भुञ्जते श्रियम्।
कुतः क्रूरतरे तेषां हृदये करुणाकणः॥ १०२ ॥
एष दुष्प्रसहो राजा लुब्धो विभवमोहितः।
30 न वध्यः सापराधोऽपि कारुण्यायतनं मम॥ १०३ ॥

---

1 शक्तानां.

इति चिन्तयतस्तस्य कारुण्यात् काननैषिणः।
प्रत्येकबुद्धाश्चत्वारः स्वयं व्योम्ना समाययुः॥ १०४॥
प्राप्तपूजासनाः श्रुत्वा सर्वज्ञास्तत्समीहितम्।
राज्ञः प्रशमशीलस्य प्रसन्नास्तत्त्वमूचिरे॥ १०५॥
संमोहपटलान्धेषु संसारिषु दयालुता। 5 D 89
शोभते तव भूपाल सत्त्वलोकविवेकिनः॥ १०६॥
क्रियतामीप्सितं राजन् बोधौ बुद्धिर्निधीयताम्।
संप्रति प्रतिरोधेऽस्मिन् वनमेवं[1] विगाह्यताम्॥ १०७॥
स्वैरनिर्झरझङ्कारकीर्णसंतोषशीकराः।
विविक्तकाननोद्देशाः शमिनामेव वल्लभाः॥ १०८॥ 10
इत्युक्त्वानुग्रहधिया विधायास्य वियद्गतिम्।
प्रभाप्रसाधितदिशस्ते तेन सहिता ययुः॥ १०९॥
यातेषु स्वपदं तेषु हिमवत्तटकाननम्।
संप्राप्य पृथिवीपालः प्रयतप्रशमोऽभवत्॥ ११०॥
विवेकविमलास्तस्य धियः सत्त्ववतामिव। 15
बभुः प्रियनिवुः पूर्णनिर्वाण्यो (?) वनभूमयः॥ १११॥
भूधरान्तरिते तस्मिन् सहसा भूपभास्वति।
शुशुचुर्मोहतिमिरप्राप्तशोकप्रजाः प्रजाः॥ ११२॥
ततस्तत्सचिवा जग्मुर्मरीचं मुनिमाश्रमे।
शक्तं राज्यस्य रक्षायै राजपुत्रं ययाचिरे॥ ११३॥ 20
मुनिना निर्विकारेण दत्तमादाय मन्त्रिणः। D 91
राजसूनुं स्वनगरे चक्रुः सैन्यसमुद्यमम्॥ ११४॥
ततः सैन्यसमुत्साह इव राजवरात्मजः।
सुभटाग्रेसरः प्राप कुरुराजं रणाजिरे॥ ११५॥
स तेन हतविध्वस्तभग्नस्यन्दनकुञ्जरः। 25
पलायनपरित्राणः प्रययौ हस्तिनापुरम्॥ ११६॥
बलिना राजपुत्रेण जिते दुष्प्रसहे युधि।
मन्त्रिभिस्तद्भुजन्यस्ता भूमिः शेषधृतिं ययौ॥ ११७॥
राज्ञो दुष्प्रसहस्याथ कालेन कलुषात्मनः।
बभूवावृष्टि[2]दुर्भिक्षमरकोपप्लवः पुरे॥ ११८॥ 30

---

१ वनमवविगाह्यताम्. २ बभूव वृष्टि°.

स विचिन्त्यानुतापार्तस्तीव्रां जनपदापदम् ।
न विवेद परित्राणं विफलस्वस्तिकक्रियः ॥ ११९ ॥
पृष्टा विपत्प्रतीकारं तेनामात्यास्तमूचिरे ।
दुःसहोऽयं महाराज प्रजानां व्यसनोद्भवः ॥ १२० ॥
5 मणिचूडस्य भूभर्तुर्यदि चूडामणिः प्रभो ।
लभ्यते स सुधास्यन्दी तेनेयं तीर्यते विपत् ॥ १२१ ॥
D 93 चारेभ्यः श्रुतमस्माभिः स राजा हिमवत्तटे ।
स्थितः संसारवैमुख्यविवेकविमलाशयः[1] ॥ १२२ ॥
अर्थितः स ददात्येव विश्वचिन्तामणिर्मणिम् ।
10 पुत्रदारशरीरादि नादेयं[2] तस्य किंचन ॥ १२३ ॥
इति मन्त्रिवचः श्रुत्वा तथेत्याधार्य[3] चेतसि ।
स द्विजान् मणियाच्ञायै विससर्ज तदन्तिकम् ॥ १२४ ॥
अस्मिन्नवसरे राजा मणिचूडश्चरन् वने ।
मरीचेराश्रमोपान्तमवाप विपुलं मुनेः ॥ १२५ ॥
15 देवी पद्मावती तत्र फलमूलधृतव्रता ।
व्रजन्ती विजने भीता विपिने मुनिशासनात् ॥ १२६ ॥
शबरैर्मृगयायातैर्दृष्टां कष्टदशां श्रिता ।
जिघृक्षुभिः कम्पमाना चुक्रोश करुणस्वरम् ॥ १२७ ॥
आकर्ण्य करुणाक्रन्दं कुररीकूजितोपमम् ।
20 हा राजन् मणिचूडेति त्रायस्वेति सुदुःसहम् ॥ १२८ ॥
सहसाभिद्रुतः कान्तां ददर्श नृपतिर्निजाम् ।
राहुसंत्रासितस्येन्दोर्द्युतिं निपतितामिव ॥ १२९ ॥
D 95 वीतरागाङ्कवसनां निरञ्जनपरिग्रहाम् ।
वदन्तीमिव संभोगसंयोगानामनित्यताम् ॥ १३० ॥
25 तां राजहंससुगतां विहारस्तनमण्डलाम् ।
अश्रुकाषायनयनां विलोक्य करुणावनीम् ॥ १३१ ॥
संसारचरिताश्चर्यविचारेष्वपि कर्कशम् ।
कृपाकृपाणीनिर्लूनमिवासीद्भूपतेर्मनः ॥ १३२ ॥
एकाकीनं वने देवी विगतच्छत्रचामरम् ।
30 दृष्ट्वा नाथमनाथेव लोकनाथं तथागतम् ॥ १३३ ॥

---

१ संसारवैमुख्यः विवेक°. २ न देयं. ३ तथेत्यत्रधार्य्य.

तद्वियोगविषाक्रान्ता तद्दर्शनरसाकुला ।
शोकहर्षसमाकीर्णा बभूव भृशविह्वला ॥ १३४ ॥

सा नीता शबरा राज्ञा शापभीताः प्रदुद्रुवुः ।
न नामाभ्युदये भानोर्दृष्टं सप्रतिभं तमः ॥ १३५ ॥

अत्रान्तरे शमद्वेषी सर्वभूताशयाशयः ।　　　　5
मारः पुरुषरूपेण समेत्य नृपमब्रवीत् ॥ १३६ ॥

राजन् राजीवनयनां प्रियां प्रणयिणीमिमाम् ।
न त्यक्तुमर्हस्यजने वने वनजलोचन ॥ १३७ ॥

इयं हि ते मनोवृत्तिरिव[1] निःसुखतां गता ।　　　　D 97
वर्जिता राज्यभोगेन राजराज न राजते ॥ १३८ ॥　　　　10

एतदाकर्ण्य नृपतिस्तं विज्ञाय मनोभवम् ।
अन्तरायं विवेकस्य प्रत्यभाषत सस्मितः ॥ १३९ ॥

जानामि त्वामहं काममकामं शमसंयमे ।
संतोषवतां को नाम भवता न विमोहितः ॥ १४० ॥

इतिवादिनि भूपाले सहसान्तरिते स्मरे ।　　　　15
बभूव विक्लवा देवी तथा विरहवह्निना ॥ १४१ ॥

दुःखितां तामार्तदुःखां पतिभोगवियोगिनीम् ।
उवाचाश्वासयन् राजा जायां जितमनोभवः ॥ १४२ ॥

देवि धर्मक्रियायुक्ता न शोकं कर्तुमर्हसि ।
दुःखावसानी विरसः सर्वोऽयं भोगविभ्रमः ॥ १४३ ॥　　　　20

देहिनां दयितासङ्गास्तरङ्गतरलायुषाम् ।
लोलपद्मपलाशाग्रस्खलज्जललवाकुलाः ॥ १४४ ॥

इमा मुहूर्तनर्तक्यः कालमेघतडिल्लताः ।
संसारसर्परसना विलासचपलाः श्रियः ॥ १४५ ॥

भोगक्षणेनैव[2] वियोगरोगो　　　　25　　　　D 99
　　विभूतयः स्वप्नविवाहतुल्याः ।
वाताहता दीपशिखा सुखश्री-
　　रुन्मत्तनृत्यं भववृत्तमेतत् ॥ १४६ ॥

---

१ मनोवृत्तेरिव न सुखतां.　२ भोगक्षणो नैव.

सर्वोपजीव्या करुणा न लक्ष्मीः
धर्मः प्रकाशः सततं न दीपाः ।
यशांसि रम्याणि न यौवनानि
स्थिराणि पुण्यानि न जीवितानि ॥ १४७ ॥

5 सत्यव्रतस्तामिति सान्त्वयित्वा
विसृज्य जायां निलये[1] महर्षेः ।
चचार संसारपराङ्मुखानां
संतोषपुण्येषु तपोवनेषु ॥ १४८ ॥

तदागतास्ते त्वरया विसृष्टाः[2]
10 पञ्च द्विजा दुष्प्रसहेन राज्ञा ।
तमर्थिनामेकमकालबन्धुं
विशुद्धसत्त्वं ददृशुर्वनान्ते ॥ १४९ ॥

D 101 ते स्वस्तिवादं शनकैर्विधाय
विशीर्[3]स्तधैर्या इव साध्वसेन ।
15 तमूचिरे सूचिततीव्रतापाः
दीर्घोष्णनिश्वाससमीरणेन ॥ १५० ॥

राजन् पुरे दुष्प्रसहस्य राज्ञः
क्रूरोपसर्गैर्हतशान्तवर्गः ।
जनः कृतः कृत्तसमस्तकामः
20 प्रकाममार्तस्वनमात्रशेषः ॥ १५१ ॥

अशेषदोषप्रशमैकहेतुः
त्रैलोक्यरक्षाप्रथितप्रभावः ।
चूडामणिर्देव भवद्वितीर्णः
करोति तस्योपनिपातशान्तिम् ॥ १५२ ॥

25 दयायुषश्चन्दनपल्लवार्द्राः
स्वच्छाशयाश्चन्द्रमणिप्रकाशाः ।
संतापकाले शरणं जनानां
भवद्विधा एव भवे भवन्ति ॥ १५३ ॥

D 103 इत्यर्थितस्तैरविलुप्तसत्त्वः
30 संपूर्यमाणः करुणारसेन ।
उवाच संचिन्त्य जनोपतापं
संक्रान्तमन्तः श्रुतिवर्त्मनेव ॥ १५४ ॥

---

१ निलयं. २ विसृष्टाः. ३ विश्वस्त°.

अहो स राजा सहते कथं नु
देवोपघातेन निपीडितानाम् ।
विदारितान्तःकरणं प्रजानां
वियोगदुःखोद्भवमार्तनादम् ॥ १५५ ॥
अयं मणिर्मस्तकमूलजन्मा 5
निष्कृत्य तूर्णं प्रतिगृह्यतां मे ।
धन्योऽस्मि यद्यर्थिजनस्य दुःख-
क्षये क्षणं[2] कारणतां व्रजामि ॥ १५६ ॥
इत्युक्तमात्रे वसुधाधिपेन
धराधराम्भोधिमहाधरित्री । 10
चिरं चकम्पे चकितेव तस्य
शिरस्तटोत्पाटनतीव्रदुःखात् ॥ १५७ ॥
ततः कृपाकोमलचित्तवृत्तेः[3] D 105
सुतीक्ष्णशस्त्रैर्वचसा नृपस्य ।
सुतीक्ष्णशस्त्रादपि तीक्ष्णचित्तः 15
स्वयं शिरः पाटयितुं प्रवृत्तः ॥ १५८ ॥
तद्दुष्करं कर्म नरेश्वरस्य
व्योम्नि विमानैर्नलिनासनाद्याः ।
सुराः सविद्याधरसिद्धसाध्याः
समाययुर्द्रष्टुमलुप्तसत्त्वम् ॥ १५९ ॥ 20
विपाट्यमाने शिरसि प्रसह्य
रत्नप्रभाविभ्रममादधानैः ।
स रक्तपूरैरभिषिक्तकायः
सेहे व्यथामर्थिसुखे प्रवृत्तः ॥ १६० ॥
विलोक्य तं सत्त्वनिबद्धधैर्यं 25
तीव्रव्यथावेगनिमीलिताक्षम् ।
ययुर्विरामं न नृशंसवृत्ते-[4]
र्विप्राः क्षणं राक्षसतामवाप्ताः ॥ १६१ ॥
विचार्य राजा स्वशरीरदुःखं D 107
संसारिणां क्लेशमयं शरीरम् । 30

---

१ न. २ क्षण°. ३ कृपाकोमलचित्तवृत्तः. ४ नृशंसवृत्तः.

एवंविधैर्दुःखसहस्रलक्षै-
राक्रान्तमित्यार्ततरो बभूव ॥ १६२ ॥

सोऽचिन्तयद्देहनिबद्धरत्न-
दानेन यत्पुण्यफलं मयाप्तम्।
5 तेनोग्रदुःखं कलयामि मा भू-
दपुण्यपाके नरके नराणाम् ॥ १६३ ॥

समुद्धृते रक्तवसावसिक्ते
तस्मिन्मणौ निश्चलतालुमूलात्।
मूर्च्छाकुलोऽपि प्रययौ सहर्षं[1]
10 संपूरणेनार्थिमनोरथस्य[2] ॥ १६४ ॥

स कम्पमानाङ्गुलिपल्लवेन
दत्वा स्वहस्तेन मणिं द्विजेभ्यः।
निमीलयन् संतमसेन लोकं
पपात तिग्मांशुरिवातिरक्तः ॥ १६५ ॥

D 109 15 अलुप्तसत्त्वे पतिते पृथिव्यां
तस्मिन् सुराणां सह पुष्पवर्षैः।
मणिं समादाय ययुर्द्विजास्ते
तूर्णं पुरं दुष्प्रसहस्य राज्ञः ॥ १६६ ॥

स तेन सद्यः शमितोपसर्गः
20 स्वर्गोचितासादितभोगवर्गः।
तद्बोधिसत्त्वस्य समस्तसत्त्व-
संतारणार्हं प्रशशंस सत्त्वम् ॥ १६७ ॥

अत्रान्तरे किंचिदवाप्तसंज्ञं
नरेश्वरं विश्रुतरत्नदानम्।
25 समाययुर्भार्गवगौतमाद्या
मरीचिमुख्या मुनयो वनेभ्यः ॥ १६८ ॥

मरीचिमेवानुगता च देवी
पद्मावती वीक्ष्य परिक्षतं तम्।
संमोहवेगाभिहता पपात
30 क्षणं क्षितौ बाललतेव लूना ॥ १६९ ॥

---

१ सहर्षः. २ °मनोरथेन.

दिगन्तसंचारिणि चारणानां
नभश्चराणां नृपसाधुवादे ।
सराजपुत्राः सह मन्त्रिमुख्यैः
प्रजाः प्रजानाथमथोपजग्मुः ॥ १७० ॥

वीक्ष्य क्षितीशं क्षतजोक्षिताङ्ग- 5
मक्षीणसत्त्वं पतितं पृथिव्याम् ।
पृथुव्यथाक्लेशजुषं जनाना-
मभूदभूतार्थविकल्पजल्पः ॥ १७१ ॥

कुठारिकैः कैश्चिदहो दयार्द्रः
सर्वार्थिसेव्यः सरलः सुवृत्तः । 10
दुरात्मभिः स्वार्थलवाभियुक्तैः
छायातरुः कष्टमयं निकृत्तः ॥ १७२ ॥

अहो परार्थोज्झितजीवितोऽयं
परां चमत्कारदशां प्रयातः ।
ससौरभच्छिन्नतनुर्गतात्मा 15
भवत्युदारः सहकार एव ॥ १७३ ॥



लुब्धस्य न स्वः स्वजनोऽपि जन्तोः
न कामकामस्य धनेऽनुरोधः ।
सर्वात्मना सत्त्वहितोद्यतस्य
देहोऽपि न स्नेहपदं दयालोः ॥ १७४ ॥ 20

येषां कृते दैन्यमयं प्रयाति
सर्वात्मना चार्थिजनोऽर्थिभावम् ।
त एव दीनोद्धरणव्रतानां
प्राणाः परित्राणपणे तृणानि ॥ १७५ ॥

इति प्रवादे विविधानुभावे 25
विजृम्भमाणे मुनिमण्डलस्य ।
भूपालमभ्येत्य सबाष्पचक्षु-
र्मुनिर्मरीचिः प्रणयादुवाच ॥ १७६ ॥

अहो नु निष्कारणबन्धुभाव-
मालम्ब्य राजन् दयया जनस्य । 30
प्रजापरित्राणविधानभूमि-
स्तनुस्त्वयेयं तृणवद्वितीर्णा ॥ १७७ ॥

क्षयः प्रवृत्तो निरपेक्षवृत्ते-
स्तवार्थिबन्धोर्निजजीवितेऽपि ।
यदेष कामं कमलानिकायः
कायस्त्वयापायपदे नियुक्तः ॥ १७८ ॥

अप्यस्ति राजन् सुकृतव्रतेऽस्मिन्
फलस्पृहा प्राणपणेऽपि काचित् ।
अस्यार्थिहेतोस्तव तालुभेद-
खेदाद्विकारं भजते न चेतः ॥ १७९ ॥

इत्यद्भुताविष्कृतमानसेन
मुनीन्द्रमध्ये मुनिना स पृष्टः ।
उवाच संस्तभ्य रुजं प्रयत्ना-
द्रक्ताभिषिक्तं वदनं प्रमृज्य ॥ १८० ॥

फलस्पृहा नास्ति मुने ममान्या
किं त्वेक एव प्रचुरोऽभिलाषः ।
यद्घोरसंसारनिमग्नजन्तु-
संतारणायैव भवे भवेयम् ॥ १८१ ॥

अर्थिप्रिये देहविदारणेऽस्मिन्
नैवास्ति मे कोऽपि विकारलेशः ।
यद्येष सत्यः समयो मयोक्त-
स्तदस्तु मे स्वस्थमिदं शरीरम् ॥ १८२ ॥

इत्युक्तमात्रे सहजानुभावे
सत्त्वोचिते सत्यधनेन राज्ञा ।
अभूद्वपुः सत्यबलेन तस्य
रूढव्रणं तत्क्षणजातरत्नम् ॥ १८३ ॥

ततः सुरैः शक्रविरिञ्चिमुख्य-
र्जातप्रहर्षैर्मुनिभिश्च सर्वैः ।
अभ्यर्थितोऽपि क्षितिपालनाय
भोगाभिलाषी न बभूव भूपः ॥ १८४ ॥

अवाप्तसंज्ञा मुनिना प्रयुक्ता
पद्मावती राजसुतेन सार्धम् ।
पतिं ययाचे विरहोपशान्त्यै
सिंहासनाक्रान्तिसुखं प्रजानाम् ॥ १८५ ॥

D 119

ततस्तमभ्येत्य कृपाकुलास्ते
प्रत्येकबुद्धा जगतो हिताय ।
देहप्रभापूरितदिग्विभागा
बभाषिरे हर्षमिवोद्गिरन्तः ॥ १८६ ॥

चिरादवाप्ते विरहावसाने 5
पुनः परित्यागदशामसह्याम् ।
न राजपुत्रः सहते न देवी
दुःखानुबन्धो ह्ययमक्रुन्निपातः ॥ १८७ ॥

स्वमर्थिने यः प्रददाति देह-
मापन्नदुःखप्रशमैकहेतुः । 10
कथं स कुर्यात् स्वजनेऽप्युपेक्षां
धर्मोऽप्ययं यस्य परार्थ एव ॥ १८८ ॥

इत्युक्तमाकर्ण्य नरेश्वरस्तै-
स्तथेति निश्चित्य धिया कथंचित् ।
व्योम्ना विमानैः स्वपुरीमवाप्य 15
भेजे निजं राज्यपदं सपुत्रः ॥ १८९ ॥

D 121

इति स विपुलसत्त्वः सत्यवान् बोधिसत्त्वः
सुचिरविहितराज्यः सौगतं धाम भेजे ।
जिनपुरमणिचैत्यच्छत्ररत्नप्रदीप-
प्रकटितविविधश्रीर्लक्षणाभ्यस्तबोधिः ॥ १९० ॥ 20

इत्याह भगवान् बुद्धः स्ववृत्तान्तनिदर्शने ।
दानोपदेशे भिक्षूणां सम्यक्संबोधिसिद्धये ॥ १९१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मणिचूडावदानं नाम तृतीयः पल्लवः ॥

# ४ मान्धात्रवदानम् ।

D 123

शोभन्ते भुवनेषु भव्यमनसां यन्नाककान्ताकर-
प्रौढोदञ्चितचारुचामरसितच्छत्रस्मिताः संपदः ।
यच्चोत्सर्पति तर्पितश्रुति यशः कर्पूरपूरोज्ज्वलं
5 स्वल्पं दानकणस्य तत् फलमहो दानं निदानं श्रियः ॥ १ ॥

अभूदुपोषधो नाम भूभृद्यस्य विभावतः ।
विबुधाभिमता कीर्तिः सुधा दुग्धोदधेरिव ॥ २ ॥
वसुधामवतो यस्य वसुधामवतः पुरः ।
ननाम प्रणतौ कस्य न नाम नृपतेः शिरः ॥ ३ ॥

10 शुद्धा धीरिव धर्मेण दानेनेव दयालुता ।
विभूतिर्विनयेनेव भूषिता येन भूरभूत् ॥ ४ ॥
गुणिनः प्रांशुवंशस्य बभूवेन्दुद्युतेः स्थितिः ।
यस्य सर्वातपत्रस्य मूर्ध्नि सर्वमहीभृताम् ॥ ५ ॥

D 125

यस्येश्वरशिरःस्थायि शुभ्रं गङ्गाजलोज्ज्वलम् ।
15 भ्रमत्यदभ्रं लोकेषु भुवनाभरणं यशः ॥ ६ ॥
कर्तुः क्रतुसहस्राणां सहस्राक्षाधिकश्रियः ।
यस्य षष्टिसहस्राणि कलत्रं सुदृशामभूत् ॥ ७ ॥
कदाचिन्मुनिरक्षायै रक्षःक्षयकृतक्षणः ।
विचचाराश्रमारुह्य स तपोवनभूमिषु ॥ ८ ॥
20 तत्र राजर्षिभिः कैश्चित्पुत्रेष्टिकलशं धृतम् ।
दूराध्वश्रमसंतप्तः स पयःपूर्णमापपौ ॥ ९ ॥
विजनासादितं पीत्वा स मन्त्रकलशात् पयः ।
राजधानीं समासाद्य गर्भं लेभे विभुर्भुवः ॥ १० ॥
स्वप्नमायेन्द्रजालादि यस्याः कौतुकविप्रुषः ।
25 जयत्यद्भुतसंभारभूमिः सा भवितव्यता ॥ ११ ॥
विधेर्विविधवैचित्र्यचित्रकर्मविधायिनः ।
आश्चर्यरेखाविन्यासं कः परिच्छेत्तुमीश्वरः ॥ १२ ॥
कालेन तस्य मूर्धानं भित्त्वा बालोंऽशुमानिव ।
रूढव्रणस्य सहसा दिव्यद्युतिरजायत ॥ १३ ॥

D 127

30 तं राजजाया जगृहुर्जगत्साम्राज्यलक्षणम् ।
वात्सल्यप्रस्नुतक्षीराः पुण्यं मूर्तिमिवाश्रितम् ॥ १४ ॥

मां धारयिष्यति शिशुः श्लाघ्योऽयं जननीपदे ।
इति तासां मिथो वाक्यैर्मान्धाताभून्नृपात्मजः ॥ १५ ॥
तस्य प्रवर्धमानस्य बालक्रीडाविलासिनः ।
षडिन्द्रः प्रययौ कालः पुण्यक्रीडाक्षयायुषः ॥ १६ ॥
नवयौवनमारूढः सर्वविद्यासु पारगः । 5
स याते पितरि स्वर्गं भेजे राज्यं क्रमागतम् ॥ १७ ॥
यक्षो दिवौकसो नाम सुकृतेर्दासतां गतः ।
अभिषेकोपकरणं दिव्यं तस्योपनीतवान् ॥ १८ ॥
स स्वर्णैर्बद्धमुकुटः कल्पितोष्णीषशेखरः ।
शरदभ्रावतंसस्य मेरोः शोभामवाप्तवान् ॥ १९ ॥ 10
सप्त रत्नानि तस्यार्थं प्रादुर्भूतानि तत्क्षणे ।
चक्राश्वमणिहस्तिस्त्रीगृहसेनाग्रगाण्यपि ॥ २० ॥
बभूव चास्य पुत्राणां तुल्यरूपबलौजसाम् ।
सहस्रं विजितारातेर्भुजानामिव भूभुजः ॥ २१ ॥
वसुंधरां समस्ताब्धिवेलाकलितमेखलाम् । 15 D 129
निखिलां विदधे दोष्णि·शेषविश्रान्तिनिर्वृताम् ॥ २२ ॥
भुवनत्राणसंनद्धः प्रत्यग्रकमलाश्रयः ।
चक्रवर्ती स सुकृतेर्विष्णोः कर इवाबभौ ॥ २३ ॥
त्रिजगज्जाह्नवी कीर्तिः प्रभावाभरणाः श्रियः ।
सोऽयं सुकृतवल्लीनां प्रथमः कुसुमोद्गमः ॥ २४ ॥ 20
स कदाचिद्वनान्तेषु विकाशिकुसुमश्रियः ।
रुचिरं सचिवैः सार्धं विचचार विलोकयन् ॥ २५ ॥
ददर्श तत्र निष्पक्षान् विहगान् पादचारिणः ।
व्योममार्गगतिं स्मृत्वा प्रयातान् कृशतामिव ॥ २६ ॥
पक्षहीनानगतिकान् वृत्तिक्षीणान्निरम्बरान् । 25
दरिद्रानिव तान् वीक्ष्य प्रोवाच कृपया नृपः ॥ २७ ॥
अहो वराकैर्विहगैः किमेतैः कुकृतं कृतम् ।
यदेते पक्षविकलाः कृच्छ्रचरणचारिणः ॥ २८ ॥
इत्युक्ते भूमिपतिना करुणाकुलितात्मना ।
पुरःस्थितो महामात्यः सत्यसेनस्तमब्रवीत् ॥ २९ ॥ 30
श्रुतमेतन्मया देव कथ्यमानं वनेचरैः । D 131
कारणं पक्षपतने यदभूत् पक्षिणामिह ॥ ३० ॥

सन्ति पञ्च शतान्यत्र पुण्यधाम्नि तपोवने ।
तपःस्वाध्यायसक्तानां मुनीनां दीप्ततेजसाम् ॥ ३१ ॥
तेषामध्ययनध्यानजपविघ्नविधायिनः ।
एते कोलाहलं चक्रुः खगास्तरुवने सदा ॥ ३२ ॥
5 तस्मै विहगसंघाय कर्णापायकृते परम् ।
अतिसंवर्धमानाय चुकोप मुनिमण्डलम् ॥ ३३ ॥
तदुद्भूतमहाशापतापप्लोषेण सर्वतः ।
क्षणेन पक्षिणां पक्षा व्यशीर्यन्त कृतागसाम् ॥ ३४ ॥
त एते विहगाः पक्षरहिताः कृच्छ्रवर्तिनः ।
10 त्वद्विपक्षा इव वने श्रान्ताश्चरणचारिणः ॥ ३५ ॥
महामात्येन कथितं निशम्यैतन्महीपतिः ।
उवाच करुणाक्रान्तस्तप्तः शापेन पक्षिणाम् ॥ ३६ ॥
अहो तेजः परिणतं शान्तानामपि कानने ।
अङ्गाराणां मुनीनां च दहत्येवानिवारितम् ॥ ३७ ॥
D 133 15 मिथ्यातपस्विभिः किं तैः स्वसुखाय न यैः कृतः ।
मनसः कोपतप्तस्य परिषेकः क्षमाम्बुभिः ॥ ३८ ॥
प्रसन्ना धीर्मनो मैत्रं दया दानं दमः क्षमा ।
येषां तेषां तपः श्लाघ्यं शेषाणां कायशोषणम् ॥ ३९ ॥
किं तपोभिः सकोपानां विप्लुतानां वनेन किम् ।
20 विभवैः किं सलोभानां दुर्वृत्तानां श्रुतेन किम् ॥ ४० ॥
एवं कलुषचित्तास्ते तीव्रमन्युपरायणाः ।
दुःसहा एव मुनयः प्रयान्तु विषयान्मम ॥ ४१ ॥
इत्युक्त्वा प्राहिणोत्तेभ्यः संदेशं पुरुषैर्नृपः ।
यावती मद्वशा भूमिस्तावती त्यज्यतामिति ॥ ४२ ॥
25 विहंगपक्षपातेन कुपितस्य महीपतेः ।
संदेशं मुनयः श्रुत्वा विलक्षाः समचिन्तयन् ॥ ४३ ॥
चतुःसमुद्रपरिखामेखलायाः क्षितेः पतिः ।
नरेन्द्रोऽयं क्व गच्छामः को देशोऽस्य वशे न यः ॥ ४४ ॥
इति संचिन्त्य मुनयः पार्श्वं कनकभूभृतः ।
30 सुरसिद्धसमाकीर्णं जम्बूखण्डान्तिकं ययुः ॥ ४५ ॥
D 135 अथ तस्य महीभर्तुः प्रभावेण महीयसा ।
अभूदकृष्टशस्या भूर्द्याश्च रत्नाम्बरप्रसूः ॥ ४६ ॥

पाकशासनवैलक्ष्यकरणात्तस्य शासनात् ।
सप्ताहं हेम ववृषुर्मेघाः संघातवर्षिणः ॥ ४७ ॥
स प्रभावेण महता सह सैन्यैर्नभोगतिः ।
चक्रे पूर्वविदेहाख्यं द्वीपं दिव्यजनं वशे ॥ ४८ ॥
बभूवुरग्रे सैन्यानि स्फीतशौर्यबलौजसाम ।                5
भटानां व्योमगमने तस्याष्टादशकोटयः ॥ ४९ ॥
गोदानीयं ततो द्वीपमथोत्तरकुरूनपि ।
पार्श्वानि स सुमेरोश्च शशासाहतशासनः ॥ ५० ॥
सुखं विहरतस्तस्य मेरोः कनकसानुषु ।
बहुशक्रो ययौ कालश्चतुर्द्वीपमहीपतेः ॥ ५१ ॥                10
स कदाचित् सुरान् द्रष्टुं व्योम्ना गच्छन् सुरोपमः ।
चकार नीलजलदैर्व्याप्ता इव गर्जितैर्दिशः ॥ ५२ ॥
अथ तेषां निरस्तानां मेरुपार्श्वे तपस्यताम् ।
मुनीनामपतन् मूर्ध्नि तद्गजाश्वशकृद्दिवः ॥ ५३ ॥
ततस्ते क्रोधसंतप्तदृशा व्योमावलोकिनः ।                15    D 137
चक्रुः पिङ्गप्रभावल्लीकलापकपिला दिशः ॥ ५४ ॥
कोपात्किमेतदित्युक्त्वा शापाग्निविसिसृक्षया ।
अभ्येत्य देवदूतस्तान् प्रहर्षाकुलितोऽवदत् ॥ ५५ ॥
एष निःशेषभूपालमौलिविश्रान्तशासनः ।
पाकशासनतुल्यश्रीर्मान्धाता पृथिवीपतिः ॥ ५६ ॥                20
नभसा नरदेवोऽयं सह सैन्यैः प्रसर्पति ।
यस्य कीर्तनधन्येयं वाणी पुण्याभिमानिनी ॥ ५७ ॥
न दृष्टो यस्य निर्दिष्टसर्वलोकसुखश्रियः ।
मोहः संविन्मयस्येव विभवप्रभवो मदः ॥ ५८ ॥
कौबेरं धनदव्यक्त्या कौमारं शक्तिमत्तया ।                25
ऐश्वरं वृषसंयोगाद्वैष्णवं श्रीसमागमात् ॥ ५९ ॥
प्रतापप्रसरात् सौरमैन्दवं जननन्दनात् ।
ऐन्द्रं दत्तबलच्छदाद्दिव्यं रूपं बिभर्त्ययम् ॥ ६० ॥
बलिः प्रयातः पातालं दधीचोऽप्यस्थिशेषताम् ।
अस्य त्यागेन जलधिः क्षोभमद्यापि नोज्झति ॥ ६१ ॥                30
श्रुत्वेति देवदूतस्य वचनं मुनिमध्यगः ।                D 139
ससर्ज दुर्मुखो नाम मुनिः शापजलं दिवि ॥ ६२ ॥

प्रहसन्नथ तं प्राह सेनानां परिणायकः ।
महर्षे संहर रुषं मा कृथास्तपसः क्षयम् ॥ ६३ ॥
वैफल्यलज्जां शापोऽयं यास्यत्यग्रे महीपतेः ।
नैते बत खगा येषां यूयं पक्षक्षयक्षमाः ॥ ६४ ॥
5 इत्युक्ते सैन्यपतिना शापस्तब्धामनीकिनीम् ।
दृष्ट्वाग्रे विस्मयादूचे किमेतदिति भूपतिः ॥ ६५ ॥
संरब्धोऽथ समभ्येत्य सेनापतिरुवाच तम् ।
तेषां देव महर्षीणां शापात् सैन्यं न सर्पति ॥ ६६ ॥
इदं च चक्ररत्नं ते व्योम्नि शापविघूर्णितम् ।
10 धत्ते जलदसंरुद्धतिग्मदीधितितुल्यताम् ॥ ६७ ॥
एतदाकर्ण्य नृपतिर्दृष्ट्वा चाग्रे तथैव तत् ।
दृशैव विदधे शापं विफलोच्चण्डविप्लवम् ॥ ६८ ॥
देहक्षयं महर्षीणां परिरक्षन् कृपाकुलः ।
जटा न्यपातयद् भूमौ स लीलालसशासनः ॥ ६९ ॥
D 141 15 अजितक्रोधमोहानां भारभूता वृथा वयम् ।
इतीव लज्जया तेषां लीनाः क्षितितले जटाः ॥ ७० ॥
अथ मेरुशिरः प्राप्य नृपः सुरनिकेतनम् ।
पुरं सुदर्शनं नाम ददर्श प्रियदर्शनम् ॥ ७१ ॥
नागास्तत्र कृतारक्षाः प्रख्यातोदकनिःसृताः ।
20 करोटपाणयो यक्षाः सुरा मालाधराभिधाः ॥ ७२ ॥
सदामत्तास्तथा देवाः क्रोधोत्तम्भितसैनिकाः ।
महाराजकायिकाख्यास्त्रिदशा बलवत्तराः ॥ ७३ ॥
महाराजाश्च चत्वारः संनद्धकवचायुधाः ।
जित्वा राज्ञा प्रभावेण निजसेनाग्रगाः कृताः ॥ ७४ ॥
25 ततः कल्पद्रुमोदारकोविदारमनोहरम् ।
ददर्श पारिजाताख्यं संश्रयं त्रिदिवौकसाम् ॥ ७५ ॥
मेरोर्मूर्ध्नि ततः शुभ्रप्रभां मालामिवामलाम् ।
सुधर्माख्यां सभां प्राप स्वभासोद्भासिताम्बराम् ॥ ७६ ॥
हेमविद्रुमवैदूर्यस्तम्भसंभारभास्वरः ।
30 प्रासादो वैजयन्ताख्यः प्रख्यातो यत्र राजते ॥ ७७ ॥
D 143 यत्राब्जैर्वदनैर्भृङ्गैरलकैस्तुल्यतां गताः ।
पद्मिन्यः सुरनारीणां पद्मिनीनां सुराङ्गनाः ॥ ७८ ॥

बिम्बितैस्त्रिदशैर्यत्र मणिभूस्तम्भभित्तिषु ।
सुरलोको बिभर्त्येकोऽप्यनेकसुरलोकताम् ॥ ७९ ॥
रत्नतोरणहर्म्यांशुनिवहैर्यत्र चित्रिताः ।
व्याप्ता विभान्ति ककुभः शक्रायुधशतैरिव ॥ ८० ॥
यत्र बालानिलालोलकल्पपादपपल्लवैः । 5
नृत्यद्धस्ता इवाभान्ति नन्दिन्यो नन्दनश्रियः ॥ ८१ ॥
यत्र चैत्ररथं नाम देवोद्यानं मनोरमम् ।
धत्ते नित्योत्सवं प्रेमिकामं कामवसन्तयोः ॥ ८२ ॥
सर्वकामं सर्वसुखं सर्वर्तुकुसुमोज्ज्वलम् ।
सर्वातिशयितं दृष्ट्वा देवानां सदनं नृपः ॥ ८३ ॥ 10
मुहूर्तविस्मयास्पन्दसानन्दस्निग्धलोचनः ।
अचिन्तयत् सुकृतिनामिमास्ताः फलभूमयः ॥ ८४ ॥
ऐरावणं सुरपतेर्लोलालिवलयाकुलम् ।
ददर्श तत्र सामोदं साकारमिव नन्दनम् ॥ ८५ ॥
पुरंदरस्ततो ज्ञात्वा प्राप्तं भूमिपुरंदरम् । 15 D 145
प्रत्युद्ययौ प्रमुदितः सह सर्वैर्मरुद्गणैः ॥ ८६ ॥
पूजितः सुरराजेन रत्नराजिविराजिताम् ।
राजराजः सभाभूमिं भेजे विरजसां वरः ॥ ८७ ॥
त्रिदशेषूपविष्टेषु रत्नपर्यङ्कपङ्क्तिषु ।
उपाविशन्नृपः श्रीमानासनार्धे शतक्रतोः ॥ ८८ ॥ 20
एकासनजुषोस्तत्र सुरेन्द्रमनुजेन्द्रयोः ।
रूपं गुणगणोदारं निर्विशेषमदृश्यत ॥ ८९ ॥
ततः सर्वसुरोत्सृष्टस्पष्टलोचनषट्पदैः ।
पीयमानमुखाम्भोजं व्याजहार हरिर्नृपम् ॥ ९० ॥
अहो उदयः श्लाध्यस्ते तेजसा तेजसां निधे । 25
भवता भूषिता भूमिर्द्यौश्च देवेन भास्वता ॥ ९१ ॥
अभ्युन्नतप्रभावोऽयं लसत्सितयशोंशुकः ।
भ्राजते ते त्रिभुवने साम्राज्यविजयध्वजः ॥ ९२ ॥
त्वत्कथामृतपानस्य त्वद्दर्शनरसस्य च ।
प्रेर्यते श्रोत्रनेत्रेण सुखाख्याने सरस्वती ॥ ९३ ॥ 30
स्थिरीकृतस्त्वयैवायं सुकृताप्तविभूतिना । D 147
कर्मणां फलवादस्य निश्चयश्छिन्नसंशयः ॥ ९४ ॥

अत एवेन्द्रियग्रामे चक्षुरेव स्पृहास्पदम् ।
पुण्यैः पुण्योचिताचारा दृश्यन्ते यद्भवद्विधाः ॥ ९५ ॥
इत्युक्ते त्रिदशेन्द्रेण मान्धाता यशसां निधिः ।
त्वत्प्रसादप्रभावोऽयमित्युवाच नताननः ॥ ९६ ॥
5 इत्येवं पूज्यमानस्य तस्य नित्यादरैः सुरैः ।
षडिन्द्रः प्रणयौ कालस्त्रिदिवे वसतः सतः ॥ ९७ ॥
तत्पराक्रमविध्वस्तसमस्तासुरमण्डलः ।
बभूव सुरराजस्य निरपायोदयो जयः ॥ ९८ ॥
दीप्तदानवसंग्रामे तस्य शौर्यमहातरोः ।
10 विश्रान्तिं भेजिरे देवा भुजच्छायोपजीविनः ॥ ९९ ॥
तस्य पुण्यपणक्रीतं भुञ्जानस्याक्षयं सुखम् ।
कालप्रवाहे महति प्रययुः षट् पुरंदराः १०० ॥
सत्कर्मफलभोगस्य लाञ्छनं विमलं मनः ।
कालुष्याज्जायते तस्य प्रत्यासन्नः परिक्षयः ॥ १०१ ॥
D 149 15 अथ कालेन कालुष्यकलितस्य मनोरथः ।
अभूल्लोभाभिभूतस्य भूपतेरभिमानिनः ॥ १०२ ॥
त्रिदशानामियं लक्ष्मीर्मद्बाहुबलपालिता ।
तदिमां न सहे तावदर्धासनविडम्बनाम् ॥ १०३ ॥
अहमेकः सुरपतिः प्रभावान्न भवामि किम् ।
20 अयं मम भुजः सर्वजगद्भारभरक्षमः ॥ १०४ ॥
च्यावयित्वा सुराधीशं स्वर्गसाम्राज्यसंपदम् ।
एकातपत्रतिलकां स्वयंग्राहोचितां भजे ॥ १०५ ॥
इति चिन्तयतस्तस्य शक्रद्रोहाभिलाषिणः ।
शुभ्रप्रभा प्रभावश्रीर्मालेव म्लानतां ययौ ॥ १०६ ॥
25 घनोदयसमुत्सिक्ता सौजन्यतटपातिनी ।
लोलं कलुषयत्येव मानसं श्रीतरङ्गिणी ॥ १०७ ॥
प्रमादो विपदां दूतो दुःसहो महतामपि ।
कुशलोन्मूलनायैव किल्बिषाकुलिता मतिः ॥ १०८ ॥
पापसंकल्पमात्रेण क्षितौ क्षितिपतिः क्षणात् ।
30 पपात विस्रस्तफलश्छिन्नमूल इव द्रुमः ॥ १०९ ॥
* D 151 हन्ति विद्यामनभ्यासः श्रियं हन्ति मदोदयः ।
विद्वेषः साधुतां हन्ति हन्ति लोभः समुन्नतिम् ॥ ११० ॥

अहो बत महोत्कर्षशृङ्गारोहो महोदयः ।
विभवोद्भवमत्तानां सहसैव पतत्यधः ॥ १११ ॥

तेन सर्वविभुर्नाम पूजितः पूर्वजन्मनि ।
तत्फलादाप्तवान् राज्यं स्पृहणीयं मरुत्पतेः ॥ ११२ ॥

सुराधिपाधिकः कोऽपि प्रभावो विस्मयावहः । 5
अनल्पपिण्डस्तस्याभूत् पात्रदानांशसंभवः ॥ ११३ ॥

बन्धुमत्यभिधानायां नगर्यामुषितः शुचिः ।
वणिगुत्करिको नाम सोऽभवत् पूर्वजन्मनि ॥ ११४ ॥

विपश्यी नाम भिक्षार्थं सम्यक्संबुद्धतां गतः ।
विवेश तद्गृहं सर्वसत्त्वसंतारणोद्यतः ॥ ११५ ॥ 10

पात्रे तस्य च चिक्षेप मुद्गमुष्टिं प्रसन्नधीः ।
फलानि तत्र चत्वारि पेतुः शेषाणि भूतले ॥ ११६ ॥

तेन दानप्रभावेण मान्धाता पृथिवीपतिः ।
सर्वद्वीपपतिर्भूत्वा शक्रार्धासनमाप्तवान् ॥ ११७ ॥

मुद्गशेषश्च्युतो यस्माद् भूतौ तस्यान्यचेतसः । 15 D 153
तदसौ फलपर्यन्ते पतितस्त्रिदशालयात् ॥ ११८ ॥

लुठति विकलकल्पा यत्र संकल्पमाला
स्फुरति न च कदाचित् स्वप्नमायान्तरे या ।
भवति विभवभोगाभोगिनी भाग्यभाजा-
मतुलफलततिः सा दानकल्पद्रुमाणाम् ॥ ११९ ॥ 20

इत्याह भगवान् बुद्धः प्रीत्या दानफलश्रियम् ।
निजजन्मान्तराख्याने भिक्षूणामनुशासने ॥ १२० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मान्धात्रवदानं नाम चतुर्थः पल्लवः ॥

# ५ चन्द्रप्रभावदानम् ।

D 155 दुग्धाब्धिर्विबुधार्थनातिविधुरः क्षुब्धश्चकम्पे चिरं
कम्पन्ते च निसर्गतः किल फलोत्सर्गेषु कल्पद्रुमाः ।
एकः कोऽपि स जायते तनुशतैरभ्यस्तदानस्थिति-
5 निष्कम्पः पुलकोत्करं वहति यः कायं प्रदानेष्वपि ॥ १ ॥

अस्ति कैलासहासिन्यामुत्तरस्यामनुत्तरा ।
दिशि भद्रशिला नाम भुवनाभरणं पुरी ॥ २ ॥
यस्यां सितयशःपुष्पाः सफलाः सर्वसंपदः ।
दानोद्यानलताः प्रीत्यै बभूवुः पुरवासिनाम् ॥ ३ ॥
10 यत्र त्रिपुरजिन्नेत्रशिखित्रस्तो मनोभवः ।
अबलाभिश्चलक्रीडभ्रूभङ्गैरेव रक्ष्यते ॥ ४ ॥
D 157 मुक्ताजालोज्ज्वला यत्र भाति हेमगृहावली ।
मेरोः शिखरमालेव विस्फुरत्स्फीततारका ॥ ५ ॥
तस्यां चन्द्रप्रभः श्रीमानभूद् भूमिभृतां वरः ।
15 कैलास इव यः कान्त्या चकार दिनचन्द्रिकाम् ॥ ६ ॥
यस्य देहप्रभापूरैः पूर्णेन्दुद्युतिहारिभिः ।
निशासु दीपकाभासु नाभूत् स्नेहगुणक्षयः ॥ ७ ॥
स्मरज्वरं भजन्तेऽस्य दर्शनेनैव तारकाः ।
इति च्छत्रछलादस्य छादितं खमिवेन्दुना ॥ ८ ॥
20 प्रदिशत्येष सततं श्रियं सत्कोशसंश्रयाम् ।
इति तद्दर्शनेनैव संकोचं प्राप पद्मिनी ॥ ९ ॥
सेनाहंकारमुत्सृज्य त्यागशुभ्रश्रिया श्रियः ।
निर्दिष्टाश्छत्रमुकुटप्रकटाः पुरवासिनाम् ॥ १० ॥
शुशुभे विभवस्तस्य पुण्यालंकरणोन्नतेः ।
25 आरोहति परां कोटीं नम्रस्य धनुषो गुणः ॥ ११ ॥
चत्वारिंशत्सहस्राणि वत्सराणां शतानि च ।
बभूव देहिनामायुस्तस्य काले कलिद्विपः ॥ १२ ॥
D 159 तस्य षष्टिसहस्राणि पुरीणां पूर्णसंपदाम् ।
बभूवुर्लोकपालस्य लोकपालाधिकश्रियः ॥ १३ ॥
30 यज्वानः कीर्तितिलकास्तस्य पुण्यविभूषणाः ।
यज्ञधूमलताभङ्गैर्बभुर्लोलालकाः श्रियः ॥ १४ ॥

तस्य संपत्कुमुदिनीविकासेन सदोदितः।
अभून्मन्त्री महाचन्द्रश्चन्द्रलोक इवोज्ज्वलः॥ १५॥
येन निश्चललक्ष्येण प्रभोः प्रज्ञापताकया।
राज्याब्धिकर्णधारेण पारमुत्तरितं यशः॥ १६॥
महीधराभिधश्चासौ बभूवामात्यकुञ्जरः। 5
भूमिभारसहस्तस्य दिङ्नाग इव पञ्चमः॥ १७॥
मन्त्रणाभिन्नमन्त्रस्य यस्य नीतिबृहस्पतेः।
त्याजिताः प्रतिसामन्ताः शौर्यं विपमिवाहयः॥ १८॥
तेनामात्येन स नृपः स च राज्ञा विभूषितः।
गुणः सत्पुरुषेणेव गुणेनेव च सज्जनः॥ १९॥ 10
कृतज्ञः सरलः स्वामी सद्भृत्यो भक्तिनिर्भरः।
सुकृतप्रभवेणैव भाग्ययोगेन लभ्यते॥ २०॥
इयमेव चिरश्रान्तिविश्रान्तिः सर्वसंपदाम्। D 161
यद्गुणज्ञतया वेत्ति स्वामिसत्पुरुषान्तरम्॥ २१॥
तौ कदाचिद्ददृशतुः स्वप्नमन्ये च मन्त्रिणः। 15
क्षयो यस्य फलं दानव्यसनेन महीपतेः॥ २२॥
तौ दृष्ट्वा दुर्निमित्तानि प्रादुर्भूतानि शङ्कितौ।
व्यग्रौ बभूवतुर्नित्यं शान्तिस्वस्तिककर्मसु॥ २३॥
निमित्तदर्शनोद्विग्नास्तपोवनगता अपि।
विश्वामित्रप्रभृतयः स्वामीत्यूचुर्महर्षयः॥ २४॥ 20
अत्रान्तरे ब्रह्मबन्धुः प्राग्जन्मब्रह्मराक्षसः।
रौद्राक्षो नाम मात्सर्यक्रौर्यदौर्जन्यदुःसहः॥ २५॥
श्रुत्वा दानोद्भवां कीर्तिं राज्ञः सर्वगुणोज्ज्वलाम्।
निर्गुणः स गुणद्वेषी संतप्तः समचिन्तयत्॥ २६॥
अहो बतास्य नृपतेर्गीयते गगने यशः। 25
अनिशं सिद्धगन्धर्वगीर्वाणललनागणैः॥ २७॥
सदा विशन्ति मे कर्णे तद्गुणस्तुतिसूचयः।
किं करोमि प्रकृत्यैव सहे नान्यगुणोन्नतिम्॥ २८॥
तद्गत्वा दानशीलस्य तस्य दानार्जितं यशः। D 163
करोम्येष शिरोयाच्ञाप्रतिषेधेन खण्डितम्॥ २९॥ 30
यशस्त्याज्यते दानोत्थं शिरश्चेन्न प्रदास्यति।
अथ दास्यति विद्वेषप्रशान्तिर्मे भविष्यति॥ ३०॥

इति संचिन्त्य सुचिरं स क्रौर्यकठिनः शठः ।
गन्धमादनपादान्तवासी भद्रशिलां ययौ ॥ ३१ ॥
इन्द्रजालप्रयोगज्ञः स कृत्वा प्रशमोचितम् ।
वेषं कलुषसंकल्पः पुरीं प्राप महीपतेः ॥ ३२ ॥
5 अस्मिन् भववने नित्यं गुणदोषसमाकुले ।
कल्पवृक्षाः प्रजायन्ते जायन्ते च विपद्द्रुमाः ॥ ३३ ॥
अशेषनाशपिशुनैर्घोरसंत्रासकारिभिः ।
दुर्निमित्तैरिव खलैः खेदः कस्य न दीयते ॥ ३४ ॥
गुणिद्वेषः प्रकृत्यैव प्रकाशपरिपन्थिनः ।
10 दोषाश्रयस्य को भेदः खलस्य तिमिरस्य च ॥ ३५ ॥
स्वच्छन्दघाती साधूनां विद्वेषविपदुःसहः ।
दीर्घपक्षः खलव्यालकरालः केन निर्मितः ॥ ३६ ॥
D 165 तस्मिन् प्रविष्टे नगरं रूपिणी पुरदेवता ।
उवाचाभ्येत्य भूपालं संत्रासतरलेक्षणा ॥ ३७ ॥
15 शिरोयाचक एष त्वां ब्रह्मबन्धुरुपागतः ।
वध्योऽसौ जीवितोच्छेदी जगतो जीवितस्य ते ॥ ३८ ॥
निरुद्धो नगरद्वारि स मया मलिनाशयः ।
मम तद्दर्शनत्रस्तं धृतिं न लभते मनः ॥ ३९ ॥
इति ब्रुवाणां भूपालः प्रोवाच पुरदेवताम् ।
20 अर्थिसंरोधसंजातलज्जया नमिताननः ॥ ४० ॥
देवि याच्ञाभियातोऽसौ प्रविशत्वनिवारितः ।
दीर्घोच्छ्वासं सहे नाहमाशावैफल्यमर्थिनः ॥ ४१ ॥
याच्ञा प्रणयिनामर्थे पुण्यप्राप्तस्तनुव्ययः ।
युगसंख्यामपि स्थित्वा विपद्यन्ते हि देहिनः ॥ ४२ ॥
25 एतदेव सुजातानां पूज्यं जगति जीवितम् ।
यदेषामग्रतो याति नार्थी भग्नमनोरथः ॥ ४३ ॥
क्रियतामानुकूल्यं मे भवत्या कुशलोचितम् ।
आशाविघाते संतापस्तस्य तूर्णं निवार्यताम् ॥ ४४ ॥
D 167 इति भूमिभृतः श्रुत्वा वचो निश्चलनिश्चयम् ।
30 जगामादर्शनं देवी चिन्तासंतापमानसा ॥ ४५ ॥
अथाययौ स कुटिलः खलः क्रकचचेष्टितः ।
दारुणः सरलस्येव च्छेदाय स्वयमुद्यतः ॥ ४६ ॥

तस्मिन्नृपगृहं प्राप्ते विवृतद्वारमर्थिनाम् ।
भूर्भूपतिक्षयभयाच्चकम्पे सधराधरा ॥ ४७ ॥
नरेन्द्रचन्द्रमासाद्य स राहुरिव दुर्मुखः ।
समभ्यधाद्विधाय प्रागशिवार्थामिवाशिषम् ॥ ४८ ॥
स्वस्ति राजन् द्विजन्मा हि विजने सिद्धिसाधकः । 5
प्राप्तस्त्वामीप्सितप्राप्त्यै सर्वार्थिसुरपादपम् ॥ ४९ ॥
दृष्टिर्वृष्टिरिवामृतस्य महती सौजन्यमित्रं मनः
क्षान्तिः क्रोधरजःप्रमार्जननदी दुःखार्तमाता मतिः ।
लक्ष्मीर्दानजलाभिषेकविमला सत्योपयुक्तं वचः
नित्यं यस्य स एक एव हि भवान् जातो जगद्बान्धवः ॥ ५० ॥ 10
सिद्धये कथितं कैश्चिच्चक्रवर्तिशिरो मम ।
दीयतां तत् त्वदन्यो वा दातुं शक्नोति कः परः ॥ ५१ ॥
सन्ति स्पष्टार्थदाश्चिन्तामणिकल्पद्रुमादयः । D. 169
दुर्लभार्थप्रदातारो विरलास्तु भवद्विधाः ॥ ५२ ॥
इत्युक्ते तेन नृपतिर्निष्कम्पविपुलाशयः । 15
अर्थिसंदर्शनानन्दनिर्भरस्तमभाषत ॥ ५३ ॥
धन्योऽहं यस्य मे ब्रह्मन्नर्थिनामर्थसिद्धये ।
निर्विकल्पोपकरणं व्ययं याति सुजीवितम् ॥ ५४ ॥
कदा प्राणाः परार्थे मे प्रयान्तीति मनोरथः ।
किमेतानि न पुण्यानि प्रार्थ्यन्ते ते यदि त्वया ॥ ५५ ॥ 20
आह्नोपकरणसिद्ध्यै श्लाघ्यं मे गृह्यतां शिरः ।
तत्तदेव स्थिरं लोके यद्यदर्थिसमर्पितम् ॥ ५६ ॥
इत्युक्ते हर्षयुक्तेन भूभुजा सत्त्वशालिना ।
तमूचतुर्महामात्यौ महाचन्द्रमहीधरौ ॥ ५७ ॥
निजजीवितरक्षैव धर्मस्ते प्रथमः प्रभो । 25
त्वयि जीवति जीवन्ति सर्वे जगति जन्तवः ॥ ५८ ॥
न दातुमर्हसि शिरः सर्वाधारं हि ते वपुः ।
दीयतां ब्राह्मणायास्मै हेमरत्नमयं शिरः ॥ ५९ ॥
सर्वार्थैरर्थिसार्थानां पूर्यन्ते यैर्मनोरथाः । D. 171
तेषां संरक्षणेनैव सर्वं भवति रक्षितम् ॥ ६० ॥ 30
संकल्पोऽयं द्विजस्यास्य क्रूरः कलुषचेतसः ।
मूलच्छेदोपजीव्यो हि न कल्पतरुरर्थिनाम् ॥ ६१ ॥

हेमरत्नशिरः प्राप्य यात्वेष शिरसास्य किम् ।
चिन्तामणिर्विनिष्प्रेक्ष्यो भुज्यते न बुभुक्षितैः ॥ ६२ ॥
इत्युक्ते मन्त्रिमुख्याभ्यां हेमरत्नमयं शिरः ।
सिद्धो नैवोपयोग्यं तन्ममेति ब्राह्मणोऽब्रवीत् ॥ ६३ ॥
5 अथोन्मुमोच नृपतिर्मुकुटं मौक्तिकांशुभिः ।
शिरोविरहदुःखेन साश्रुधारमिवाभितः ॥ ६४ ॥
मुकुटानि क्षणे तस्मिन्निपेतुः पुरवासिनाम् ।
दिग्दाहोन्मुखतुल्याभिरुल्काभिः सह भूतले ॥ ६५ ॥
राज्ञा प्रदाने शिरसः सर्वथा परिकल्पिते ।
10 तौ चक्रतुस्तनुत्यागं मन्त्रिणौ द्रष्टुमक्षमौ ॥ ६६ ॥
रत्नगर्भमथोद्यानं प्रविश्य पृथिवीपतिः ।
उत्फुल्लचम्पकस्याधः शिरश्छेत्तुं समुद्ययौ ॥ ६७ ॥
D 173 उद्यानदेवता दृष्ट्वा तं शिरश्छेत्तुमुद्यतम् ।
मा कृथाः साहसं राजन्नित्युवाच शुचाकुला ॥ ६८ ॥
15 कम्पमानाः प्रलापिन्यस्तं मत्तालिकुलस्वनैः ।
न्यवारयन्नवलता लोलपल्लवपाणिभिः ॥ ६९ ॥
सोऽपि निश्चलसंकल्पः प्रसाद्योद्यानदेवताम् ।
विमलां बोधिमालम्ब्य बभूव प्रणिधानवान् ॥ ७० ॥
अस्मिन् रत्नमयोद्याने पुण्यराशिसमुन्नतम् ।
20 स्तूपमस्तु प्रशास्तुस्तु सत्त्वसंतारणोचितम् ॥ ७१ ॥
यत्किंचिदर्जितं पुण्यं संकल्पेन मयामुना ।
भवन्तु तेन संसारे निःसंसाराः शरीरिणः ॥ ७२ ॥
ध्यात्वेति चम्पकतरोः शाखायां नृपतिः शिरः ।
बद्ध्वा कचकलापेन छित्त्वा प्रादाद्द्विजन्मने ॥ ७३ ॥
25 अथ नरपतेः सत्त्वोत्साहस्फुटप्रणिधानतः
किमपि विमलैः पुण्यालोकैर्दिगन्तविसारिभिः ।
विगलितमहामोहौघान्तः श्रितः परिनिर्वृतिं
प्रविरतभवाभ्यासायासः क्षणादभवज्जनः ॥ ७४ ॥
D 175 इति प्राग्जन्मवृत्तान्तकथया भगवान् जिनः ।
30 भिक्षूणां विदधे शुद्धदानसद्धर्मदेशनाम् ॥ ७५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
चन्द्रप्रभावदानं नाम पञ्चमः पल्लवः ॥

# ६ बदरद्वीपयात्रावदानम् ।

D 177

दानोद्यतानां पृथुवीर्यभाजां
शुद्धात्मनां सत्त्वमहोदधीनाम् ।
अहो महोत्साहवतां परार्थे
भवन्त्यचिन्त्यानि समाहितानि ॥ १ ॥ 5

हर्म्यारोहणहेलया यदचलाः स्वभ्रैः सहाभ्रंलिहा
यद्वा गोष्पदलीलया जलभरक्षोभोद्धताः सिन्धवः ।
लक्ष्यन्ते भवनस्थलीकलनया ये चाटवीनां तटा-
स्तद्वीर्यस्य महात्मनां विलसतः सत्त्वोर्जितं स्फूर्जितम् ॥ २ ॥

पुरा हि भगवान् बुद्धः श्रावस्त्यां पुरवासिनाम् । 10
उपदेशप्रकाशेन जहाराज्ञानजं तमः ॥ ३ ॥
भिक्षुसंघैः परिवृतः स कदाचिद्वणिग्जनैः । D 179
कृतानुयात्रो मगधात् स्वयं चारिकया ययौ ॥ ४ ॥
महार्थसार्थानुगतं व्रजन्तं वनवर्त्मना ।
तं दृष्ट्वा तस्करगणः सालाटव्यामचिन्तयत् ॥ ५ ॥ 15
एष प्रयातु भगवान् पुरः सत्त्वहिते रतः ।
पश्चात् सार्थं ग्रहीष्यामः पूर्णं द्रविणराशिभिः ॥ ६ ॥
भगवानथ सर्वज्ञस्तेषां ज्ञात्वा समीहितम् ।
किमेतदिति तानूचे निर्विकारस्मिताननः ॥ ७ ॥
ते तमूचुः परित्यज्य क्रौर्यं मधुरया गिरा । 20
तत्प्रसादस्मितालोकैर्विनष्टतिमिरा इव ॥ ८ ॥
भगवन् जीविकास्माकं निन्द्येयं कर्मनिर्मिता ।
न भृतिर्न कृषिर्नान्यरक्षणं न प्रतिग्रहः ॥ ९ ॥
सहजं क्रौर्यमस्माकं निसर्गकलुषात्मनाम् ।
क्रियते किं स्वभावस्य देव तीक्ष्णा हि कर्णिका ॥ १० ॥ 25
तस्मान्न वृत्तिलोपो नः कर्तुमर्हसि गम्यताम् ।
याते तु त्वयि सार्थस्य वयं सर्वार्थहारिणः ॥ ११ ॥
इति तेषां वचः श्रुत्वा करुणापूर्णमानसः । D 181
दोलालोलायितमतिर्बभूव भगवान् क्षणम् ॥ १२ ॥
ततः सार्थधनं सर्वं परिसंख्याय तत्समम् । 30
स ददौ चौरचक्राय तत्क्षणात्तनिधानतः ॥ १३ ॥

तद्विधेन क्रमेणैव पुनः पथि गतागतैः ।
षट्कृत्वः प्रददौ तेभ्यः सोऽर्थं सार्थस्य मुक्तये ॥ १४ ॥
पुनश्चोपगते तस्मिन् वर्त्मना तेन सानुगे ।
बभूव बुद्धिश्चौराणां तद्भोजननिमन्त्रणे ॥ १५ ॥
5 दृशा दिशन्ति वैमल्यं शुभं संभाषणेन च ।
व्रजन्ति संगमाभ्यासैः सन्तः सन्मार्गसेतुताम् ॥ १६ ॥
तत्रातिर्यग्दृशा सर्वं सर्वाकुशलसंक्षयात् ।
तेषां समाहितं शुद्धं विदधे भगवान् जिनः ॥ १७ ॥
येषां संग्रहवस्तूनि चत्वारि नियतात्मनाम् ।
10 अर्थचर्या समानार्थभावस्त्यागः प्रियं वचः ॥ १८ ॥
D 183 येषां ब्रह्मविहाराश्च चत्वारः सत्त्वशालिनाम् ।
करुणा मुदितोपेक्षा मैत्री चेति परिग्रहः ॥ १९ ॥
येषां कुशलमूलानि सक्तानि त्रीणि चेतसि ।
अलोभश्चापरिद्वेषोऽप्यमोहश्च महात्मनाम् ॥ २० ॥
15 दानशीलक्षमावीर्यध्यानप्रज्ञाजुषां सदा ।
उपायप्रणिधिज्ञानबलैराश्रितचेतसाम् ॥ २१ ॥
परित्राणैकवीराणां सदैवाद्वयवादिनाम् ।
विद्यात्रयप्रदीप्तानां चतुर्वैमल्यशालिनाम् ॥ २२ ॥
पञ्चस्कन्धविमुक्तानां षडायतनभेदिनाम् ।
20 सप्तबोध्यङ्गयुक्तानामार्याष्टाङ्गोपदेशिनाम् ॥ २३ ॥
नवसंयोगहीनानां तेषां दशबलात्मनाम् ।
किं वस्त्वविदितं लोके जिनानां जनचेष्टितम् ॥ २४ ॥
ततस्तेष्वतिकारुण्याच्चरणालीनमूर्धसु ।
तथेत्युवाच भगवांस्तद्भोज्योपनिमन्त्रणे ॥ २५ ॥
25 तैस्तत्संदर्शनक्षीणकिल्बिषैः सममर्पितम् ।
भिक्षुसंघैर्वृतो भोज्यं विधिवत् सर्वमाददे ॥ २६ ॥
ततस्तत्प्रणिधानेन ज्ञानालोकशलाकया ।
ते समुन्मीलितदृशः प्रकाशं ददृशुः पदम् ॥ २७ ॥
D 185 ते सद्यस्तीव्रवैराग्यपरिपक्वाः प्रसादिनः ।
30 प्रव्रज्यायोगमासज्य जग्मुर्जगति पूज्यताम् ॥ २८ ॥
तत्तेषां कुशलं दृष्ट्वा सहसोपनतं पुरः ।
बभाषे भगवान् पृष्टः किमेतदिति भिक्षुभिः ॥ २९ ॥

एतैर्ममायं संबन्धः सार्थरक्षणनिष्क्रयैः ।
द्वीपयात्रागतस्यासीदन्यस्मिन्नपि जन्मनि ॥ ३० ॥
अस्ति विस्तीर्णमार्गस्य स्वर्गवर्गावधिर्विधेः ।
पुरी वाराणसी नाम कौशलोत्कर्षहर्षभूः ॥ ३१ ॥
यस्याममलकल्लोलवाहिनी सुरवाहिनी । 5
सदा दयेव हृदयं प्रसादयति देहिनाम् ॥ ३२ ॥
अहिंसेव सतां सेव्या विद्येव विदुषां मता ।
क्षमेव सर्वभूतानां या विश्रम्भसुखस्थितिः ॥ ३३ ॥
ब्रह्मकल्पे नृपे तस्या विकसत्कमलाश्रये ।
ब्रह्मदत्ताभिधे लोकं त्रैलोक्यमिव रक्षति ॥ ३४ ॥ 10
प्रियसेनाभिधानोऽभूत् तत्र वैश्रवणोपमः ।
सार्थवाहोऽर्थसार्थानां स्थानमब्धिरिवाम्भसाम् ॥ ३५ ॥
तस्यासीत् सुप्रियो नाम सौजन्यनिलयः सुतः । D 187
प्रययौ यं समाश्रित्य गुणसार्थः कृतार्थताम् ॥ ३६ ॥
दानशीलक्षमावीर्यध्यानप्रज्ञासमन्वितः । 15
धात्रा विलोभनायैव यः कृतः सुकृतश्रियः ॥ ३७ ॥
तं सर्वविद्या विशदाः कलाश्च विपुलाशयम् ।
विविशुः सरसोदारा महोदधिमिवापगाः ॥ ३८ ॥
गुणालंकृतचारित्रं लक्षणालंकृताकृतिम् ।
पुरुषोत्तमलुब्धेव यं श्लाघ्यं श्रीरशिश्रियत् ॥ ३९ ॥ 20
कालेन सुकृतक्रीतं पितरि त्रिदिवं गते ।
चक्रे स्कन्धतटे तस्य व्यवहारभरः स्थितिम् ॥ ४० ॥
सोऽचिन्तयदियं लक्ष्मीर्विपुलात्मक्रमागता ।
तथापि मन्ये पर्याप्ता न सर्वार्थिमनोरथे ॥ ४१ ॥
किं तया सुमहत्यापि श्रिया सत्पुरुषस्थया । 25
पूर्वागतार्थिभुक्तेव या शेषार्थिषु निष्फला ॥ ४२ ॥
रत्नाकरस्य वैपुल्यं निष्फलं वेधसा कृतम् ।
अद्यापि पूरितो येन नैकोऽप्यर्थी स वाडवः ॥ ४३ ॥
अथवा पृथुसंकल्पः केनार्थी परिपूर्यते । D 189
जगामाब्धिरगस्त्यस्य चुलुकाचमनीयताम् ॥ ४४ ॥ 30
किं करोम्यतितापोऽयं श्रीरेका बहवोऽर्थिनः ।
न तदासाद्यते वित्तं यत् सर्वार्थिभरक्षमम् ॥ ४५ ॥

पञ्च षट् पूरिता एवं नान्ये श्रीकौस्तुकादिभिः ।
इतीवाद्यापि तप्तोऽन्तर्ज्वलदौर्वानलोऽम्बुधिः ॥ ४६ ॥
तस्मात् करोमि यत्नेन निःसंख्यद्रविणार्जनम् ।
न सहे दुःखनिःश्वासं विमुखस्य मुखेऽर्थिनः ॥ ४७ ॥
5 इति संचिन्त्य स चिरं सार्थेन महता वृतः ।
रत्नद्वीपपुरं गत्वा विदधे रत्नसंग्रहम् ॥ ४८ ॥
ततः प्रतीपमायान्तं कृतार्थं तं वनेचराः ।
सार्थार्थहरणोन्मुक्ता ददृशुर्दस्यवः पथि ॥ ४९ ॥
सार्थार्थहरणे दृष्ट्वा स तेषां साहसोद्यमम् ।
10 निजसर्वस्वदानेन संररक्षानुयायिनम् ॥ ५० ॥
पुनः क्रमेण तेनैव रत्नद्वीपगतागतिः ।
सार्थत्राणाय चौराणां षट्कृत्वः प्रददौ धनम् ॥ ५१ ॥
D 191 तथैव त्वां पुण्यविपन्वानिसंप्राप्तस्तथैव तान्(?) ।
ददर्श चौरान् सार्थार्थहरणे अधिकादरान् ॥ ५२ ॥
15 सोऽचिन्तयदहो वित्तैर्महद्भिः परिपूरिताः ।
मयैते न निवर्तन्ते परार्थहरणोद्यमात् ॥ ५३ ॥
जगत् संपूरयाम्यर्थैरित्युक्त्वापि मयासकृत् ।
अहो नु दस्यवो नैते वराकाः परिपूरिताः ॥ ५४ ॥
उचितोत्साहहीनस्य व्याहतोत्तरवादिनः ।
20 विकत्थनप्रतिज्ञस्य धिङ्मे जन्म कुजन्मनः ॥ ५५ ॥
इति चिन्तयतस्तस्य तप्तस्यानुशयाग्निना ।
विजने प्रययौ रात्रिः संवत्सरशतोपमा ॥ ५६ ॥
तं शोकपङ्कसंमग्नं गजेन्द्रमिव निश्चलम् ।
दीर्घोच्छ्वासं महेशाख्या स्वप्ने प्रोवाच देवता ॥ ५७ ॥
25 सुमते मा कृथाः शोकं शरीरोच्छोषणं वृथा ।
सत्संकल्पाभिरूढस्य भविष्यति तवेप्सितम् ॥ ५८ ॥
D 193 न तदस्ति जगत्यस्मिन् स्वप्नसंकल्पदुर्लभम् ।
यन्न सिध्यति यत्नेन धीराणां व्यवसायिनाम् ॥ ५९ ॥
सा काप्यनुपमा शक्तिरेकस्यापि द्विजन्मनः ।
30 यदाज्ञास्पन्दितेनैव विन्ध्यः क्ष्मासमतां ययौ ॥ ६० ॥

---

1 The line is not intelligible.

विषमं समतां याति दूरमायाति चान्तिकम् ।
सलिलं स्थलतामेति कार्यकाले महात्मनाम् ॥ ६१ ॥

परार्थोऽयं तवारम्भः फलत्येव न संशयम् ।
न भवन्ति विसंवादसंदिग्धाः सत्त्ववृत्तयः ॥ ६२ ॥

रत्नानि बदरद्वीपे सन्ति त्रिदशसेविते । 5
येषामेकप्रभावोऽपि त्रिजगत्पूरणक्षमः ॥ ६३ ॥

मर्त्यभूमिमतिक्रम्य सा हि भूमिर्महीयसी ।
आसाद्यते पुण्यमयी नासत्त्वैर्नाकृतात्मभिः ॥ ६४ ॥

विषादस्त्यज्यतां पुत्र स्थिरा बुद्धिर्विधीयताम् ।
बदरद्वीपयात्रायामुत्साहः परिगृह्यताम् ॥ ६५ ॥ 10

श्रूयतामेष तत्प्राप्त्यै दिङ्मात्रानुक्रमक्रमः ।
स्फीतसत्त्वप्रभावस्त्वं संसारोत्तरणक्षमः ॥ ६६ ॥

अस्ति पश्चिमदिग्भागे समुल्लङ्घ्य महीयसाम् । D 195
शतानि सप्त द्वीपानां तथा सप्त महाचलान् ॥ ६७ ॥

सप्तापगाश्चानुलोमप्रतिलोमाभिधोऽम्बुधिः । 15
अनुकूलानिलैर्यस्मिन् पारमाप्नोति पुण्यवान् ॥ ६८ ॥

ततस्तत्तुल्यनामाद्रिर्वातैस्तिमिरमोहकृत् ।
यत्राक्ष्णोर्दिशति स्वास्थ्यममोघाख्या महौषधिः ॥ ६९ ॥

अथावर्ताभिधोऽम्भोधिर्वैरम्भैर्यत्र वायुभिः ।
मज्जनोन्मज्जनैर्जन्तुः सप्तावर्तेषु तार्यते ॥ ७० ॥ 20

आवर्ताख्यस्ततः शैलः शङ्खनाभो निशाचरः ।
घोरः प्राणहरो यत्र त्रिदशत्रासकृत् स्थितः ॥ ७१ ॥

कृष्णसर्पावृता यत्र शङ्खनाभिर्महौषधिः ।
त्रायते पुण्यसंपन्नं नेत्रे शिरसि चार्पिता ॥ ७२ ॥

अथ नीलोदनामाब्धी रक्ताक्षो यत्र राक्षसः । 25
[1]मक्र्याभिभूतां बुद्धविद्याविद्वान् वशे (?) ॥ ७३ ॥

अथ नीलोदनामाद्रिर्नीलग्रीवः क्षपाचरः ।
प्रदीप्तनेत्रो यत्रास्ते रक्षसां पञ्चभिः शतैः ॥ ७४ ॥

तत्रौषधिममोघाख्यां रक्षत्याशीविषः सदा । D 197
दृष्टिनिःश्वाससंस्पर्शदंष्ट्रोत्सृजद्विषानलः ॥ ७५ ॥ 30

---

[1] The line is corrupt.

उपोषधव्रतवता मैत्रेण करुणात्मना ।
लभ्यते सा समुत्सार्य कृष्णसर्पं महौषधिः ॥ ७६ ॥
तं रक्षःशकटं शैलं निष्फलश्लक्ष्णकन्दरम् ।
तामञ्जने शिखायां च कृत्वा तरति पुण्यवान् ॥ ७७ ॥
5 अथ वैरम्भनामाद्रिः पारे यस्योत्तरा तटे ।
घोरा ताम्राटवी नाम महाशालवनान्तरा ॥ ७८ ॥
महानजगरस्तत्र ताम्राक्षो नाम दुःसहः ।
आस्त यस्योग्रगन्धेन वायुनैव न जीव्यते ॥ ७९ ॥
षण्मासान् स्वपतो यस्य लाला व्याप्नोति योजनम् ।
10 क्षुत्संतप्तस्य षण्मासानल्पीभवति जाग्रतः ॥ ८० ॥
वेणुगुल्मशिलाबद्धां गुहामुत्पाट्य मेदिनीम् ।
प्राप्यौषधीं दिवारात्रं ज्वलन्तीमञ्जनोचिताम् ॥ ८१ ॥
तस्मादजगराद् घोरादन्यतो वा महौजसः ।
अवैराख्यां बुद्धविद्यां जपतो न भवेद्भयम् ॥ ८२ ॥
D 199 15 ततः सप्त महाशैला वेणुकण्टकसंकटाः ।
ताम्रपट्टाङ्कपादेन तीर्यन्ते वीर्यशालिना ॥ ८३ ॥
ततश्च शाल्मलीवनं सप्त क्षारतरङ्गिणीः ।
उत्तीर्यासाद्यते प्राज्ञुस्त्रिशङ्कुर्नाम पर्वतः ॥ ८४ ॥
तत्र त्रिशङ्कवो नाम कण्टका वज्रभेदिनः ।
20 पादयोर्न विशन्त्येव ताम्रपट्टावनद्धयोः ॥ ८५ ॥
त्रिशङ्कुर्नाम तटिनी तत्रायःशङ्कुपर्वतः ।
उपस्कीलनदी तत्र ततो द्विधा द्विधा सरित् ॥ ८६ ॥
अथाष्टादशवक्राख्यः पर्वतो निरवग्रहः ।
तत्तुल्यसंज्ञाथ नदी श्लक्ष्णो नाम गिरिस्ततः ॥ ८७ ॥
25 अथाद्रिधूमनेत्राख्यो धूमनिर्दिग्धदिक्तटः ।
दृष्टिस्पर्शविषैर्व्याप्तः क्रूराशीविषमण्डलैः ॥ ८८ ॥
तन्मूर्ध्नि पल्वलस्यान्तः शिलाबद्धा महागुहा ।
ज्योतीरसो मणिर्यस्यां जीवनी च महौषधिः ॥ ८९ ॥
भित्त्वा गुहां तदभ्यक्तशिरःपादकरोदरः ।
30 व्रजन्मन्त्रबलोपेतः क्रूरसर्पैर्न बाध्यते ॥ ९० ॥
D 201 अथोग्रसत्त्वसंकीर्णाः सप्ताशीविषपर्वताः ।
नद्यश्च तद्विधा यासामपारवारिसंपदः ॥ ९१ ॥

एतदुत्तीर्य निखिलं पुण्यैः परहितोद्यतः ।
आरोहति सुधाशैलं शृङ्गैरालिङ्गिताम्बरम् ॥ ९२ ॥
ततस्तस्यापरे पार्श्वे कल्पवृक्षोपशोभितम् ।
पुरं रोहितकं नाम दृश्यते स्वर्गसंनिभम् ॥ ९३ ॥
अस्ति तत्र मघो नाम मघवानिव विश्रुतः ।　　5
सार्थवाहो महासत्त्वः सर्वसत्त्वहिते रतः ॥ ९४ ॥
बदरद्वीपयात्रायामुद्यतस्यानवद्यधीः ।
मार्गोपदेशं देशज्ञः स ते सर्वं करिष्यति ॥ ९५ ॥
इत्युक्त्वोत्साह्य बहुशः सुभद्रैरिव सुप्रियम् ।
वचोभिरुचितैर्देवी सहसान्तरधीयत ॥ ९६ ॥　　10
प्रबुद्धः सुप्रियः सर्वं तत्तथेति विचिन्तयन् ।
प्रतस्थे सत्त्वमारुह्य निजोत्साहपुरःसरः ॥ ९७ ॥
स व्रजन् विजितायासस्तेन निर्दिष्टवर्त्मना ।
पुण्यैर्द्वादशभिर्वर्षैः प्राप रोहितकं पुरम् ॥ ९८ ॥
अत्रान्तरे कर्मयोगात् तत्र सार्थपतिर्मघः ।　　15　　D 203
व्याधिना दुश्चिकित्स्येन बभूवास्वस्थविग्रहः ॥ ९९ ॥
अलब्धान्तःप्रवेशोऽथ गृहे राजगृहोपमे ।
तस्य व्यलम्बत द्वारं सुप्रियः कार्यसिद्धये ॥ १०० ॥
ततो वैद्यापदेशेन स प्रवेशमवाप्तवान् ।
उपयोगकथाप्रज्ञा न कस्यादरभूमयः ॥ १०१ ॥　　20
आयुर्वेदविधानज्ञः स तस्यारिष्टलक्षणैः ।
षण्मासशेषमेवायुर्ज्ञात्वा चिन्तान्तरोऽभवत् ॥ १०२ ॥
तस्य प्रियहितप्रायो भैषज्यपरिचर्यया ।
अत्यल्पेनैव कालेन सुप्रियः प्रियतां ययौ ॥ १०३ ॥
भैषज्ययुक्तिस्तत्प्रीत्या तस्य वल्लभतां ययौ ।　　25
प्रियोपनीतं यत्किंचित् तत्सर्वं मनसः प्रियम् ॥ १०४ ॥
प्रियोपचारैस्तस्याथ व्याधिराद्रावमाययौ ।
आधिः शाम्यति सत्सङ्गात् ततो व्याधिर्विशीर्यते ॥ १०५ ॥
ततः संजातविश्रम्भः सुप्रियः प्रणयान्मघम् ।
चक्रे विदितवृत्तान्तं पश्चान्निजकथाक्षणे ॥ १०६ ॥　　30
बदरद्वीपयात्रायां तस्योत्साहं महात्मनः ।　　　　D 205
परार्थे निश्चलं ज्ञात्वा तमूचे विस्मयान्मघः ॥ १०७ ॥

अहो बतास्मिन् संसारे निःसारे साररूपिणः ।
जायन्ते मणयः केचित् परचिन्तापरायणाः ॥ १०८ ॥
नवं वयः प्रिया मूर्तिः परार्थप्रवणं मनः ।
पुण्योचितस्तथैवायं स्थाने गुणसमागमः ॥ १०९ ॥
5 इयतीं भूमिमुल्लङ्घ्य परार्थे त्वमुपागतः ।
करोमि तव साहाय्यं किं त्वहं भृशमातुरः ॥ ११० ॥
निबद्धावधयः प्राणाः प्रयान्त्येव शरीरिणाम् ।
ते व्रजन्तु ममान्तेऽपि त्वत्समाहितहेतुताम् ॥ १११ ॥
एवमेव व्ययो यस्तु व्ययः स परिगण्यते ।
10 परार्थे जीवितस्यापि व्ययो लाभशतैः समः ॥ ११२ ॥
न मया बदरद्वीपं दृष्टं किं तु श्रुतं मया ।
महाब्धौ दिक्समुद्देशं तैस्तैर्जानामि लक्षणैः ॥ ११३ ॥
इत्युक्त्वा भूपतिं सुहृद्बन्धुवाक्येऽप्यनादरः ।
स मङ्गलप्रवहणं सुप्रियेण सहादधे ॥ ११४ ॥
D 207 15 ततः प्रवहणारूढौ तौ योजनशतान्यपि ।
पवनस्यानुलोम्येन जग्मतुर्विपुलाशयौ ॥ ११५ ॥
स्थाने स्थाने जलं दृष्ट्वा नानावर्णं महोदधेः ।
किमेतदिति पप्रच्छ सुप्रियः कौतुकान्मघम् ॥ ११६ ॥
जले लोहाचलाः पञ्च सन्त्यस्य पयसां निधेः ।
20 ताम्ररूप्यमयाश्चान्ये हेमरत्नमयाः परे ॥ ११७ ॥
तेषां छायाविशेषेण नानावर्णः पदे पदे ।
दृश्यतेऽब्धिरयं दीप्तः प्राप्तान्तरोद्गतौषधिः ॥ ११८ ॥
इत्युक्त्वा व्याधिनाक्रान्तः प्राप्तकालावधिर्मघः ।
प्राणान्मुमोच सत्कीर्तिविन्यस्तस्थिरजीवितः ॥ ११९ ॥
25 वज्रलेपादपि दृढं यथा सत्त्वं महात्मनाम् ।
तथा यदि भवेदायुः किमसाध्यं भवे भवेत् ॥ १२० ॥
कूलावाप्तप्रवहणः सुप्रियस्तद्वियोगजम् ।
शुचं संस्तभ्य विदधे सुहृदस्तनुसत्क्रियाम् ॥ १२१ ॥
एतदेवोन्नतं लक्ष्म सत्त्वोत्साहमहात्मनाम् ।
30 विच्छिन्नालम्बने काले यत्कर्तव्यदृढं मनः ॥ १२२ ॥
D 209 पुनः प्रवहणारूढः स समुत्तीर्य वारिधिम् ।
रत्नपर्वतपार्श्वेन विवेश विकटाटवीम् ॥ १२३ ॥

न वियोगैर्न चोद्वेगैर्नाभियोगैर्द्विषामपि ।
न रोगैः क्लेशभोगैर्वा हीयते महतां मतिः ॥ १२४ ॥
स तत्राक्रान्तगगनं निरुद्धाशेषदिक्तटम् ।
दुरारोहं ददर्शाग्रे मूर्तं विघ्नमिवाचलम् ॥ १२५ ॥
उपायहीनस्तं दृष्ट्वा गिरिं मूर्खमिवोद्धतम् । 5
अधः पल्लवशय्यायां सुप्तः सोऽचिन्तयत् क्षणम् ॥ १२६ ॥
अहो बत कियान् कालः प्रयातः प्रस्थितस्य मे ।
बदरद्वीपनामापि न नाम श्रूयते क्वचित् ॥ १२७ ॥
व्यवसायसहायो मे योऽभूत्पुण्यपणैः परम् ।
भग्नप्लव इवाकाले सोऽपि कर्मोर्मिविप्लवैः ॥ १२८ ॥ 10
नष्टोपायेऽप्युपायेऽस्मिन् व्यवसायान्महीयसः ।
न नाम विनिवर्तेऽहं सिद्धिर्निधनमस्तु वा ॥ १२९ ॥
तदेकं जन्मयात्रासु पूज्यं जन्म जगत्त्रये ।
यस्मिन् परोपकाराय जायते जीवितव्ययः ॥ १३० ॥
इति चिन्ताकुलं तत्र तं ज्ञात्वा सत्यसागरम् । 15 D 211
नीलो नाम समभ्येत्य यक्षः प्राहाचलाश्रयः ॥ १३१ ॥
पूर्वेण योजनं गत्वा त्रीणि शृङ्गाणि भूभृतः ।
वेत्रसोपाननिश्रेण्या समारुह्याथ गम्यताम् ॥ १३२ ॥
इति यक्षोपदेशेन स विलङ्घ्य महाचलम् ।
ददर्शाग्रे समुत्तुङ्गशृङ्गं स्फटिकभूधरम् ॥ १३३ ॥ 20
तस्मिन्नेकशिलाश्लक्ष्णे दुर्गमे पक्षिणामपि ।
मुहूर्तमभवत्तस्य निर्व्यापारो मनोरथः ॥ १३४ ॥
अभ्युन्नतं निरालम्बं खसंकल्पमिवाचलम् ।
स तं विचार्य सुचिरं चित्रन्यस्त इवाभवत् ॥ १३५ ॥
अथ चन्द्रप्रभो नाम यक्षः शैलगुहाशयः । 25
अभ्येत्य सत्त्वसंपन्नं तमभाषत विस्मितः ॥ १३६ ॥
क्रोशमात्रमितो गत्वा पूर्वेणापूर्वविभ्रमम् ।
दृश्यते चन्दनवनं बालानिलचलल्लतम् ॥ १३७ ॥
तत्रास्ते प्रसरा नाम गुहालीना महौषधिः ।
लभ्यते देहरक्षायै समुत्तोल्य महाशिलाम् ॥ १३८ ॥ 30
तत्प्रभावकृतालोकं सोपानैः स्फटिकाचलम् । D 213
सहसैव समारुह्य गम्यतामीप्सिताप्तये ॥ १३९ ॥

तत्क्षणात् कृतकार्येव सा प्रयाति महौषधिः ।
न खेदस्तत्कृते कार्यस्तडिल्लोलाः प्रियाप्तयः ॥ १४० ॥
इति यक्षोपदिष्टेन विधानेन स भूधरम् ।
समुत्क्रम्य ददर्शाग्रे नगरं हेममन्दिरम् ॥ १४१ ॥
5 मेरुकूटैरिवाकीर्णं प्रकाशैरिव निर्मितम् ।
सर्वाश्चर्यैरिव कृतं तद् दृष्ट्वा विस्मितोऽभवत् ॥ १४२ ॥
महाहेमकपाटाभ्यां रुद्धद्वारं विलोक्य तत् ।
निर्जनं वारसंचारं वनान्ते निषसाद सः ॥ १४३ ॥
अत्रान्तरे दिनस्यान्ते व्योमानन्तपथाध्वगः ।
10 अवापास्ताचलोपान्तं परिश्रान्त इवांशुमान् ॥ १४४ ॥
अस्तं गते सहस्रांशौ रजनीरमणी शनैः ।
तारापतिमिवान्वेष्टुं प्रससाराभिसारिका ॥ १४५ ॥
अथ प्रकाशविभवैः सर्वाशापूरणोन्मुखः ।
बोधिसत्त्व इव स्वच्छः सुधादीधितिरुद्ययौ ॥ १४६ ॥
D 215　15 स्फीता तमःसमूहस्य निःशेषप्रशमोचिता ।
मानसोल्लासिनी ज्योत्स्ना सत्त्ववृत्तिरिवाबभौ ॥ १४७ ॥
तमोमोहं जहारेन्दुर्दिशां दिनवियोगजम् ।
परोपकारे हि परो दूरारोहो महात्मनाम् ॥ १४८ ॥
सुप्रियश्चन्द्रकिरणैः पूर्यमाणतनुः क्षणम् ।
20 निद्रां कार्यसमुद्रोर्मिक्षोभमुद्रामवाप्तवान् ॥ १४९ ॥
क्षपायां क्षीयमाणायां गुणदाक्षिण्यसादरा ।
जगाद देवता स्वप्ने महेशाख्या समेत्य तम् ॥ १५० ॥
अहो बत महासत्त्व सत्तत्त्वाभिनिवेशिना ।
परार्थे विपुलः क्लेशः कृतः सुकृतिना त्वया ॥ १५१ ॥
25 अल्पशेषे प्रयासेऽस्मिन् नोद्वेगं कर्तुमर्हसि ।
अपर्युषितसत्त्वानां स्वाधीनाः सर्वसिद्धयः ॥ १५२ ॥
हैमं यदेतन्नगरं त्रीणि चान्यान्यतः परम् ।
सन्ति रत्नपुराण्यत्र विचित्राण्युत्तरोत्तरम् ॥ १५३ ॥
तेभ्यो निर्यान्ति किन्नर्यश्चतस्रोऽष्टौ च षोडश ।
30 द्वात्रिंशच्च क्रमेणैव त्वया द्वारि विघट्टिते ॥ १५४ ॥
D 217 जितेन्द्रियस्य भवतस्तत्प्रमादमवेदिनः ।
किमन्यदचिरेणैव वाञ्छितार्तिर्भविष्यति ॥ १५५ ॥

इत्युक्तः सादरं देव्या प्रतिबुद्धोऽथ सुप्रियः ।
जघान नगरद्वारं त्रिः समभ्येत्य पाणिना ॥ १५६ ॥
ततश्चतस्रः किन्नर्यो निर्ययुस्तरलेक्षणाः ।
आश्चर्यतरुमञ्जर्य इव लीलानिलाकुलाः ॥ १५७ ॥
मानसोल्लासकारिण्यो नयनामृतवृष्टयः ।　　　　5
वदनेन्दुसमुद्योतैर्दिवापि कृतचन्द्रिकाः ॥ १५८ ॥
ताः संपूज्य स्मरोदारं सुप्रियं प्रियदर्शनाः ।
तस्याभिलाषप्रणयैरातिथ्यमिव चक्रिरे ॥ १५९ ॥
चन्द्रकान्तसमासीनं कृतासनपरिग्रहाः ।
जीवनौषधयो जाताः स्मरस्येव सविग्रहाः ॥ १६० ॥　　　　10
तास्तमूचुः समुन्मीलद्विलासहसितत्विषः ।
ददत्य इव कर्पूरं प्रेमोपायनतां पुरः ॥ १६१ ॥
अहो धन्या वयं यासां सद्गुणालंकृताकृतिः ।
स्वयमेवाभिगम्योऽपि भवानद्यागतो गृहम् ॥ १६२ ॥
विद्वेषः कस्य पीयूषे चन्दने कस्य वारुचिः ।　　　　15　　D 219
इन्दौ मन्दादरः को वा साधुः कस्य न संमतः ॥ १६३ ॥
स्त्रीणां यद्यपि सौभाग्यभङ्गाय प्रणयः स्वयम् ।
क्रमस्त्वद्दर्शनेनैव तथापि मुखरीकृताः ॥ १६४ ॥
इदं च किन्नरपुरं वयं च प्रणयार्पिताः ।
रत्नं च सौभाषणिकं साधो स्वाधीनमेव ते ॥ १६५ ॥　　　　20
इति तासां वचः श्रुत्वा सुप्रियः प्रणयोचितम् ।
उवाच सत्त्वधवलां दिशन् दशनचन्द्रिकाम् ॥ १६६ ॥
बहुमानास्पदं कस्य नेदं संभाषणामृतम् ।
आत्मनोऽप्यादरस्थानं भवतीभिः कृतादरः ॥ १६७ ॥
श्लाघ्यं दर्शनमेवेदं तत्राप्ययमनुग्रहः ।　　　　25
मुक्तालतास्तापहराः किं पुनश्चन्दनोक्षिताः ॥ १६८ ॥
एवंविधानां स्वच्छानामैन्दवीनामिव त्विषाम्[1] ।
आकृतीनां समुचिता रुचिरा लोकवृत्तयः ॥ १६९ ॥
औचित्यचारुचरितं प्रसादविशदं मनः ।
वात्सल्यपेशला वाणी न कस्यादरभूमयः ॥ १७० ॥　　　　30

---

1 वाभिषां and वामूषां for °मिव त्विषाम्.

D 221

गृहीतोऽस्माभिराचारः पूजापरिकरोचितः।
आत्मार्पणं कुलान्तं वः परायत्ता हि योषितः॥ १७१॥
कन्याभावादपक्रान्ता यूयं परपरिग्रहाः।
विश्रम्भेण भगिन्यो मे जनन्यः स्नेहगौरवात्॥ १७२॥
5 परवित्तं विषं येषां जनन्यश्चान्ययोषितः।
परहिंसात्महिंसैव पक्षास्तेषां निरत्ययाः॥ १७३॥
पैशुन्यासत्यपारुष्यभिन्नवादोज्झितं वचः।
सदैव वदने येषां तेषां सर्वाशिषा दिशः॥ १७४॥
अभिध्यारहितं चेतो व्यापारपरिवर्जितम्।
10 मिथ्यादृष्टिविहीनं च येषां ते सत्पथं श्रिताः॥ १७५॥
दशाकुशलमार्गेभ्यो निर्गतानां निसर्गतः।
एते कुशलवर्गस्य मार्गाः स्वर्गे निरर्गलाः॥ १७६॥

धीरेव धन्यं धनमुन्नतानां
विद्यैव चक्षुर्विजितेन्द्रियाणाम्।
15 दयैव पुण्यं पुरुषोत्तमानां
आत्मैव तीर्थं शुचिमानसानाम्॥ १७७॥

D 223

एवंविधोऽयं गुणसंनिवेशः
शीलेन वैमल्यमुपैति पुंसाम्।
सद्रत्नमुक्तानिकरातिरिक्तं
20 शीलं सतामाभरणं वदन्ति॥ १७८॥

इत्युक्तमाकर्ण्य गुणानुरूपं
सत्त्वार्थिना तेन जितेन्द्रियेण।
तुष्टास्तमूचुर्भुवि चन्द्रलोकं
ताः कौतुकायैव मुखैः सृजन्त्यः॥ १७९॥

25 मणेरिवानर्घगुणोज्ज्वलस्य
दृष्टैव साधोरुचिता रुचिस्ते।
ययैव मौलौ हृदये श्रुतौ च
सद्भिः सदैवाभरणीकृतोऽसि॥ १८०॥

मणिर्महार्हः प्रथितप्रभावः
30 प्रगृह्यतामात्मसमस्त्वयायम्।
ध्वजार्पितो वर्षति योजनानां
सहस्रमेवार्थिसमीहितं यः॥ १८१॥

D 225

उक्त्वेति रत्नप्रवरं तरुण्य-
　स्तस्मै ददुर्मूर्तमिव प्रसादम् ।
आदाय तं च प्रणयोपचारं
　सोऽपि द्वितीयं पुरमाप रौप्यम् ॥ १८२ ॥

तत्रादरात्तद्द्विगुणाभिरेव　　　　　　　　　　5
　स पूजितः किन्नरकामिनीभिः ।
क्रमेण तेनैव विशुद्धबुद्धि-
　र्लेभे मणिं तद्द्विगुणप्रभावम् ॥ १८३ ॥

*　*　*　*
　*　*　*　*　　　　　　　　　　10
*　*　*　*
　*　*　*　* ॥ १८४ ॥

प्राप्तश्च तं रत्नमयं चतुर्थं
　पुरं ततः सर्वपुराधिकश्रि ।
सोऽभ्यर्थितस्तद्द्विगुणाभिरग्रे　　　　　　　　15
　गुणाधिकः किन्नरसुन्दरीभिः ॥ १८५ ॥

D 227

तथैव सद्धर्मकथाप्रसङ्गै-
　स्तास्तोषितास्तेन सुसंयतेन ।
उत्फुल्लनीलोत्पलदामदीर्घ-
　कटाक्षविक्षिप्तकरास्तमूचुः ॥ १८६ ॥　　　　　20

भ्रातास्ति नः किन्नरराजवंश-
　रत्नाकरेन्दुर्बदराभिधानः ।
तस्यास्पदं द्वीपमिदं महार्हं
　स्वनामचिह्नं प्रथितं समृद्ध्या ॥ १८७ ॥

रत्नं चेदं नियमविधिना पोषधाख्यव्रतेन　　　　25
　न्यस्तं भास्वत्किरणनिकरं पुण्यभाजां ध्वजाग्रे ।
जम्बुद्वीपे किल जनगणाभीप्सितार्थान् प्रयत्नात्
　वर्षत्येव स्थिरपरहितव्याप्तये गृह्यतां तत् ॥ १८८ ॥

इत्युत्पाद्यामरतरुफलं सादरं सुन्दरीभिः
　प्रेमोद्दामप्रणयसुभगं दत्तमासाद्य रत्नम् ।　　　　30
बालाहाख्यं विजितपवनं तं प्रकृष्टं तुरङ्गं
　सोऽप्यारुह्य स्वनगरमगाल्लब्धमार्गोपदेशः ॥ १८९ ॥

D 229

तस्मिन् काले विपुलकुशलैः स्वर्गमार्गं प्रयाते
वाराणस्यां विशदयशसि क्ष्मापतौ ब्रह्मदत्ते ।
श्रीमान् सर्वप्रणयिफलदः सुप्रियः पौरमुख्यै-
र्लोकत्राणे विनिहितमतिर्धर्मराज्येऽभिषिक्तः ॥ १९० ॥

5 ततः शिरःस्नानविधिक्रमेण
तत्पश्चदश्यां ध्वजमूर्ध्नि रत्नम् ।
स पोषधोपोषित एव धृत्वा
चकार विश्वं परिपूर्णकामम् ॥ १९१ ॥

कृत्वा यात्रां परहितफलां वत्सराणां शतेन
10 स्थित्वा राज्ये महति निखिलं पूरयित्वा च लोकम् ।
पुत्रं धृत्वा नरपतिपदे प्राप्य सर्वोपशान्तिं
तत्त्वज्ञोऽसौ किमपि परमं ब्रह्मभावं जगाम ॥ १९२ ॥

स्युरेते दस्यवः सर्वे पूर्वं ये पूरिता मया ।
रत्नद्वीपाभिगमने तस्मिन् सुप्रियजन्मनि ॥ १९३ ॥

15 इति शास्ता स्ववृत्तान्तकथया विदधे विभुः ।
दानवीर्योपदेशेन भिक्षूणामनुशासनम् ॥ १९४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
बदरद्वीपयात्रावदानं नाम षष्ठः पल्लवः ॥



## ७ मुक्तालतावदानम् ।

D 231

कुशलप्रणिधानशुद्धधाम्नां
विमलालोकविवेकबोधकानाम् ।
परिकीर्तनमात्रमेव येषां
भवमोहापहतेस्त एव धन्याः ॥ १ ॥ 5

पुरा पर्षत्सहस्राणां न्यग्रोधोपवनस्थितिः ।
कपिलाख्ये पुरे चक्रे भगवान् धर्मदेशनाम् ॥ २ ॥

अमन्दानन्दसंदोहस्यन्दि चन्दनशीतलम् ।
तस्य वागमृतं धन्याः कृताञ्जलिपुटाः पपुः ॥ ३ ॥

राजा शुद्धोदनस्तत्र धर्मश्रवणसंगमे । 10
पुण्योपदेशसलिलैर्लेभे वैमल्यनिर्वृतिम् ॥ ४ ॥

अथ तत्र महानामा शाक्यराजकुलोद्भवः ।
धर्मोपदेशमाकर्ण्य प्राप्तः स्वगृहमब्रवीत् ॥ ५ ॥

अहो नु भगवान् बुद्धो धर्मः संघश्च सिद्धये । D 233
बुद्धोत्पादोऽयमस्माकं निर्वाणाय महाफलः ॥ ६ ॥ 15

उपदेशविशेषाप्तनिर्वृतेस्तस्य तद्वचः ।
श्रुत्वा शशिप्रभा पत्नी प्रणयात्तमभाषत ॥ ७ ॥

अनुग्राह्या भगवतः पुरुषाः पुण्यभागिनः ।
निन्द्यास्तदुपदेशानामनर्हा योषितो वयम् ॥ ८ ॥

इति जायावचः श्रुत्वा स जगाद जगद्गुरोः । 20
भद्रे भगवतो नास्ति भेदः कारुण्यदर्शने ॥ ९ ॥

समा सर्वत्र भा भानोः समा वृष्टिः पयोमुचः ।
समा भगवतो दृष्टिः सर्वसत्त्वानुकम्पिनः ॥ १० ॥

महाप्रजापतेर्वाक्यादपराह्णक्षणं तपः ।
शुद्धोदनः करोत्येव राजा भगवतोऽन्तिके ॥ ११ ॥ 25

इति पत्युः प्रियगिरा वृता शाक्याङ्गनागणैः ।
याचने तद्भगवतः सा पुण्योपवनं ययौ ॥ १२ ॥

सा सत्त्वकुसुमं तत्र तं ददर्श महाफलम् ।
प्रशमामृतसंसिक्तं करुणाकल्पपादपम् ॥ १३ ॥

D 235

लतेव पवनानम्रा तं दूरात् प्रणनाम सा।
लोभेनेव परित्यक्ता च्युतकर्णोत्पलच्छलात् ॥ १४ ॥
विलोक्य काञ्चनरुचिं रत्नभूषणभूषिताम्।
आनन्दनामा भिक्षुस्तामुवाच प्रहितोद्यतः ॥ १५ ॥
5 वेषः प्रशमशून्योऽयं मातर्मुनितपोवने।
दर्पोत्सिक्तो न युक्तस्ते विरक्तानामिदं पदम् ॥ १६ ॥
गुणसंयमसिक्तानि मुखराभरणान्यहो।
नेहास्मद्ग्रहणं युक्तमितीवोपदिशन्ति ते ॥ १७ ॥
इत्युक्ता तेन सा तन्वी वैलज्ज्यविनताननां।
10 उन्मुच्याभरणं सर्वं प्राहिणोन्निजमन्दिरम् ॥ १८ ॥
उपविष्टेषु सर्वेषु निर्दिष्टकुशलस्ततः।
अनित्यतैवं भगवानुपदेशं प्रचक्रमे ॥ १९ ॥
महामोहप्रभावोऽयं येन नित्यमनित्यताम्।
नित्यतामिव मन्यन्ते मूढा जगति जन्तवः ॥ २० ॥
15 असत्ये रमते लोकः सत्यप्रत्ययमोहितः।
न वेत्ति सर्वभावानामभावानुभवां स्थितिम् ॥ २१ ॥

D 237

केचिद् व्याकरणैः परे श्रुतिपथैस्तर्कप्रवादैः परे
केचित्तन्त्रपरिग्रहैर्बहुविधैरन्यैः कलाकौशलैः।
संसक्ताः पुनरुक्तजन्मशरणौ याताः सहैव क्षयं
20 तत्राप्यक्षयलीलया क्षणपदं मुग्धैर्निबद्धा धृतिः ॥ २२ ॥
विषयविषमापायः कायः प्रपञ्च[म]याशया
खरतरमरुस्फाराकारो मोहभवो भवः।
हितभूमि(?) तथाकार्यं कार्यं विवेकिनां तथा
निरवधिरयं दृष्ट्वा व्याधिर्यथा[हि] निवर्तते ॥ २३ ॥
25 इत्याद्यनित्यसंस्कारसंयुक्तं युक्तमुद्यते।
धर्मोपदेशकुशलं वक्तुं भगवति स्वयम् ॥ २४ ॥
एका शाक्यवधूस्तत्र रूपसौभाग्यगर्विता।
स्थिता शैशवतारुण्यसंधौ वयसि दुःसहे ॥ २५ ॥
मुक्ताहारं स्तनतटे लोलापाङ्गैर्मुहुर्मुहुः।
D 239 30 आलुलोके यशःस्फारसारं रतिपतेरिव ॥ २६ ॥
हारावलोकिनीं दृष्ट्वा तामनेकाग्रहादसौ।
अचिन्तयद्विरक्तेव महत्पत्नी शशिप्रभा ॥ २७ ॥

इयं धर्मोपदेशेऽपि चपला हारमीक्षते।
भावानां न शृणोत्येव मूढा क्षणिकतामिमाम्॥ २८॥
स्वं हारं दर्शयित्वास्या हारोत्साहं हराम्यहम्।
अधिकालोकनेनैव दर्पः शाम्यति देहिनाम्॥ २९॥
इति संचिन्त्य सा दासीं रोहिकाख्यामभाषत। 5
रोहिके गच्छ मे हारं गृहात् सत्वरमाहर॥ ३०॥
इत्युक्ता सा तया तत्र प्रवृत्ते धर्मसंश्रवे।
अकालगमनोद्विग्ना निःश्वस्याचिन्तयत् क्षणम्॥ ३१॥
अहो बतान्तरायोऽयं संजातः कुशले मम।
नास्मिन् श्रोतुं लभे धर्मं यत्परायत्तजीविता॥ ३२॥ 10
पुण्यसौरभसंभारात् कीर्णकारुण्यकेसरात्।
मुखपद्माद् भगवतो धन्यः प्राप्नोति वाङ्मधु॥ ३३॥
अहो स्वाच्छन्द्यविच्छेदस्तनुभङ्गः सुखक्षयः।
सेवा जगति जन्तूनां दुःखे दुःखपरंपरा॥ ३४॥
सेवाप्रयाससंप्राप्तं धनमानकणोदयम्। 15 D 241
तप्तमत्युष्णनिःश्वासैरहो कृच्छ्रेण पीयते॥ ३५॥
मानग्लानिर्गुणग्लानिरोजःपूजशमः श्रमः।
प्रथमं सेवकस्यैतत् फलमीश्वरदर्शने॥ ३६॥
लौही बन्धनशृङ्खला चरणयोर्हेलावमानावनी
स्वव्यापारनिषेधनित्यनियती निद्रासुखद्रोहिणी। 20
आशास्यस्य विशालजालसरणिः सत्सङ्गभोगाशनिः
मुग्धानां मृगतृष्णिकामरुमही सेवा शरीरक्षयः॥ ३७॥
इति संचिन्त्य सुचिरं सा जगाम तदाज्ञया।
सेवाविक्रीतकायानां स्वेच्छाविहरणं कुतः॥ ३८॥
व्रजन्तीं तां परप्रेष्यां कृपणां करुणाकुलः। 25
निरीक्ष्य भगवान् दिव्यचक्षुषाचिन्तयत् क्षणम्॥ ३९॥
अस्मिन् जन्मनि शेषोऽस्या संपूर्णो जीवितावधिः।
इयं वराकी संसारादुद्धर्तव्या स्वयं मया॥ ४०॥
अथ तां कर्मयोगेन व्रजन्तीं सहसा पथि।
वत्सवात्सल्यविवशा शृङ्गाभ्यामाजघान गौः॥ ४१॥ 30
सा प्रदध्यौ भगवतः प्रसादात् तन्मयस्मृतिः। D 243
जन्मान्तराधिवासेन बुद्धालम्बनमानसा॥ ४२॥

अहो कर्मोर्मिभिः शीर्णे संसारमकराकरे ।
जन्मावर्तेषु जन्तूनां मज्जनोन्मज्जनक्रमः ॥ ४३ ॥

पुंसां ललाटविपुलोपलपट्टिकासु
निःशर्मकर्मघटितप्रकटाङ्कटङ्कैः ।
5 न्यस्तानि जन्ममरणप्रसराक्षराणि
नैतानि पाणिपरिमार्जनया चलन्ति ॥ ४४ ॥

इयं कर्मायत्ता प्रचुरचित्रवैचित्रचरचना
नराणां मायूरच्छदपटलतुल्या परिणतिः ।
यया गर्भारम्भे क्रमनिपतने वृद्धिसमये
10 क्षये वा नान्यत् प्राभजत तनुलेखाच्छविरपि ॥ ४५ ॥

संचिन्त्याथ पुरः प्रवृत्तसुदशासन्नावसन्नस्थितिं
प्राप्तेवासमदासभावकलनावैलक्ष्यनिःस्पन्दताम् ।
आधाय प्रणिधानधाम्नि धवले सद्धर्मशुद्धां धियं
संसारे विचिकित्स्य एव मलिनं तत्याज सा जीवितम् ॥ ४६ ॥

D 245 15 ततः सा सिंहलद्वीपे समीपे स्वर्गसंपदाम् ।
चन्द्रलेखेव दुग्धाब्धौ दिव्यद्युतिरजायत ॥ ४७ ॥

आधानजन्मनस्तस्य मुक्तावर्षे दिवश्च्युते ।
साभून्मुक्तालता नाम सिंहलाधिपतेः सुता ॥ ४८ ॥

सा पुण्यमिव लावण्यं वहन्ती वृद्धिमागता ।
20 लेभे विवेकेनाज्ञानां संतोपमिव यौवनम् ॥ ४९ ॥

ततः कदाचिद्वणिजः श्रावस्तीपुरवासिनः ।
मकराकरमुत्तीर्य सिंहलद्वीपमाययुः ॥ ५० ॥

ते तत्र रात्रिपर्यन्ते विश्रान्तिसुखमाजगुः ।
धर्मार्थगाथासंनद्धप्रबुद्धबुद्धभाषितम् ॥ ५१ ॥

25 तदन्तःपुरहर्म्यस्था श्रुत्वैव श्रवणामृतम् ।
किमेतदिति पप्रच्छ तानानाय्य नृपात्मजा ॥ ५२ ॥

ते तामूचुः प्रमुदितामिदं बुद्धस्य भाषितम् ।
स्वभावार्हं भगवतः सर्वसत्त्वानुकम्पिनः ॥ ५३ ॥

बुद्धाभिधानं श्रुत्वैव पुलकालंकृताकृतिः ।
30 सा बभूव समुद्भूतसंविद्भव्यानुभावभूः ॥ ५४ ॥

D 247 उन्मुखी सा मयूरीव शब्दैरेव पयोमुचः ।
क एष भगवान् बुद्ध इति पप्रच्छ तान् पुनः ॥ ५५ ॥

ततस्ते निखिलं तस्यै श्रद्धासंवर्धितादराः ।
न्यवेदयन् पुण्यमयीं भगवच्चरितस्थितिम् ॥ ५६ ॥
अथ सा तत्कथावाप्तप्राग्जन्मकुशलोदया ।
विज्ञप्तिलेखं प्रददौ तेषां भगवतः कृते ॥ ५७ ॥
कालेन सिन्धुमुत्तीर्य संप्राप्तास्ते निजां पुरीम् ।                    5
प्रणम्यावेद्य तद्वृत्तं ददुर्लेखं महात्मने ॥ ५८ ॥
भगवानपि सर्वज्ञः पूर्वमेव विभाव्य तत् ।
मुक्तालतायाः कृपया स्वयं लेखमवाचयत् ॥ ५९ ॥
अहो स्मरणमेव ते किमपि पुण्यपण्यं सतां
भवातिभवभैषजं व्यसनतापतृष्णापहम् ।                    10
भवन्मयकथाक्रमोपनतसंविदास्वादभूः
स एष भगवन् महानमृतसंविभागो मम ॥ ६० ॥
इति संक्षिप्तलेखार्थं विभाव्य भगवान् स्वयम् ।
ईषत्स्मितत्विषा सत्त्वप्रकाशमदिशद्दिशाम् ॥ ६१ ॥
ततश्चित्रकराशक्यां प्रभावैरनुपूरिताम् ।                    15    D 249
भगवान् प्राहिणोत् तस्यै न्यस्तां स्वप्रतिमां पटे ॥ ६२ ॥
पुनः प्रवहणारूढा वणिजस्ते तदाज्ञया ।
अवाप्य सिंहलद्वीपं तस्यै पटमदर्शयन् ॥ ६३ ॥
हेमसिंहासनन्यस्ते पटे दृष्ट्वा तथागतम् ।
जनस्तन्मयताध्यानादेकीभावमिवाययौ ॥ ६४ ॥                    20
अधस्ताल्लिखितं तस्मिन् पुण्यप्राप्तमदृश्यत ।
तिस्रः शरण्या गतयः पञ्च शिक्षापदानि च ॥ ६५ ॥
सप्रतीत्यसमुत्पादः सानुलोमविपर्ययः ।
आर्याष्टाङ्गस्तथा मार्गः परमामृतनिर्भरः ॥ ६६ ॥
स्वयं भगवता न्यस्तं तस्योपरि सुभाषितम् ।                    25
शोभते भावनालीनं भ्राजिष्णु कनकाक्षरम् ॥ ६७ ॥
विषमविषयालोलव्यालावलीवलयाकुलात्
तरुणतिमिरान्निष्क्रम्यास्मात् प्रमोहमयाद्गृहात् ।
जननमरणक्लेशावेशप्रवृत्तपृथुव्यथा
व्रजत शरणं बौद्धं धर्मं न चात्र भवाद्भयम् ॥ ६८ ॥                    30
D 251
जिनप्रतिकृतिं पुण्यां पश्यन्ती पार्थिवात्मजा ।
अनादिकालोपचितां मुमोचाज्ञानवासनाम् ॥ ६९ ॥

प्रांशुं कवत(?)काञ्चनकान्तकायं
सुस्कन्धमाजानुभुजाभिरामम् ।
ध्यानावधानार्थनिमीलिताक्षं
लावण्यधारायिततुङ्गनासम् ॥ ७० ॥
5 स्वभावभव्यं प्रविभासमानं
प्रलम्बनिर्भूषणकर्णपाशम् ।
बालप्रवालारुणवल्कलाङ्कं
संसक्तसंध्याभ्रमिवामराद्रिम् ॥ ७१ ॥
त्विषा दिशां शीलमित्रादिशन्तं
10 आनन्ददानोद्यतवक्त्रचन्द्रम् ।
क्षमागुणं क्षामिव शिक्षयन्तं
पुण्योचिता सा सुभगं विलोक्य ॥ ७२ ॥
प्रणामपर्यन्तकपोलचुम्बि-
कर्णोत्पलानां परिवर्तनेन ।
15 निरस्य निःसारशरीरतृप्तिं
सत्यानुभावं परमं प्रपेदे ॥ ७३ ॥
D 253 स्रोतःसमापत्तिफलप्रकाशं
सासाद्य तत्र क्षणलब्धबोधिः ।
विचिन्तयन्ती सुगतप्रभावं
20 समभ्यधाद्विस्मयहर्षभूमिः ॥ ७४ ॥
अहो महामोहतमोहरेण
दूरस्थितेनापि तथागतेन ।
प्रसह्य भास्वद्वपुषार्पितेयं
विकासलक्ष्मीः कुशलाम्बुजस्य ॥ ७५ ॥
25 तीर्णो भवः सत्प्रणिधानमात्तं
प्रसन्नमन्तःकरणं क्षणेन ।
अहो नु तृष्णापरितापशान्त्यै
समुच्छलन्तीव शमामृतौघाः ॥ ७६ ॥
इत्युक्त्वा सा भगवते मुक्तारत्नान्युपायनम् ।
30 वितीर्य संघपूजायां विससर्ज वणिग्जनम् ॥ ७७ ॥
ते महोदधिमुत्तीर्य प्राप्ता भगवतोऽन्तिकम् ।
तन्मुक्तारत्ननिकरं प्रणम्यास्मै न्यवेदयन् ॥ ७८ ॥

वणिग्भिः कथितां श्रुत्वा तत्कथां तत्र भिक्षुणा ।
आनन्दनाम्ना पृष्टोऽथ बभाषे भगवान् जिनः ॥ ७९ ॥
यासौ पुरा रोहिताख्या दासी शाक्यगृहेऽभवत् । D 255
सैव मुक्तालता जाता सत्कर्मप्रणिधानतः ॥ ८० ॥
अभून्महाधनो नाम वाराणस्यां वणिक् पुरा । 5
तस्य रत्नवती नाम पत्नी पुण्योचिताभवत् ॥ ८१ ॥
सा पत्यौ पञ्चतां याते निःपुत्रा स्तूपशेखरे ।
पूजां कृत्वा महाहारं भक्तियुक्ता न्यवेदयत् ॥ ८२ ॥
तेन पुण्यविपाकेन सिंहलाधिपतेः सुता ।
जाता मुक्तालता सैव प्राप्ता च परिनिर्वृतिम् ॥ ८३ ॥ 10
सैव जन्मनि चान्यस्मिन्नैश्वर्यमदमोहिता ।
पूजाधिक्षेपदक्षाभूद्दासी तेनातिवत्सरम् ॥ ८४ ॥
जन्मभूमौ जनेनाप्तं यद्यत्कर्म शुभाशुभम् ।
तस्य तस्य स तद्रूपं भुङ्क्ते परिणतं फलम् ॥ ८५ ॥
निखिलकुशलमूला कीर्तिपुष्पोज्ज्वलश्रीः 15
शुभफलभरसूतिर्धर्मवल्ली नराणाम् ।
भवति च विषवल्ली किल्बिषक्लेशमूल-
भ्रमनिपतनमोहानन्तसंतापहेतुः ॥ ८६ ॥
संतप्तेऽस्मिन् खरतरमरुस्फारसंसारमार्गे D 257
पापं पापं त्यजत जनताः सक्ततीव्रानुतापम् । 20
पुण्यं पुण्यं कुरुत सततं पुण्यपीयूषसिक्ताः
पुण्यच्छायातरुतलभुवः शीतलाः पुण्यभाजाम् ॥ ८७ ॥
इति सत्प्रणिधानस्य फलं कथयता स्वयम् ।
भिक्षूणामुपदेशोऽयं भक्त्यै भगवता कृतः ॥ ८८ ॥ 25

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मुक्तालतावदानं नाम सप्तमः पल्लवः ॥

# ८ श्रीगुप्तावदानम् ।

D 259

कृतापकारेऽपि कृपाकुलानि
क्रूरेऽप्यलं पल्लवकोमलानि ।
द्वेषोष्मतप्तेऽप्यतिशीतलानि
भवन्ति चित्तानि सदाशयानाम् ॥ १ ॥ 5

पुरा सुरपुरोदारे पुरे राजगृहाभिधे ।
श्रीगुप्ताख्यो गृहपतिर्बभूव धनदोपमः ॥ २ ॥

दृप्तः सुजनविद्वेषी गुणेषु विरतादरः ।
सदा धनमदाध्मातः स जहास मतिं सताम् ॥ ३ ॥

कठिनेष्वतिवक्रेषु शून्येषु मुखरेषु च । 10
शङ्खेष्विव खलेष्वेव लक्ष्मीर्दाक्षिण्यमाश्रिता ॥ ४ ॥

तं कदाचित् गुरुर्ज्ञातिपुत्रः क्षपणकः खलः ।
मिथः स्वैरकथासक्तः पुण्यद्वेषादभापत ॥ ५ ॥

य एष गृध्रकूटाख्ये गिरौ भिक्षुशतैर्वृतः ।
सर्वज्ञकीर्तिः सुगतस्त्रिजगत्पूज्यतां गतः ॥ ६ ॥ D 261 15

नैवास्य प्रतिभां कांचिद् भव्यामुपलभामहे ।
नीतः किं तूल्रतिं मूर्खैर्भगवान् भगवानिति ॥ ७ ॥

अविचार्यव सततं परोक्तमनुभाषते ।
गतानुगतिकः प्रायः प्रसिद्धसरणौ जनः ॥ ८ ॥

व्रतादिनियमस्तस्य दम्भ एव विभाव्यते । 20
अश्नाति मौनकृत् मत्स्यानेकपादव्रतो बकः ॥ ९ ॥

तस्मात् तस्योपहासाय क्रियतां कापि वञ्चना ।
मायामोहितो धूर्तानां परोऽपि परितुष्यति ॥ १० ॥

इति तेनोक्तमाकर्ण्य श्रीगुप्तः कर्ममोहितः ।
पतितुं पापश्वभ्रेषु युक्त्या तदुपदिष्टया ॥ ११ ॥ 25

प्रदीप्तखदिराङ्गारपूर्णां गूढां खदां गृहे ।
कृत्वा सविषमन्नं च ययौ भगवतोऽन्तिकम् ॥ १२ ॥

तेन मिथ्याविहितया भक्त्या भोक्तुं निमन्त्रितः ।
विज्ञाय सर्वं सर्वज्ञस्तथेति प्राह सस्मितः ॥ १३ ॥

विषाग्नियोगकुपितां पत्नीं सद्धर्मवादिनीम् । D 263 30
गृहे बबन्ध श्रीगुप्तः शङ्कितो मन्त्रविश्रवात् ॥ १४ ॥

अथ विज्ञातवृत्तोऽपि भगवान् स्वयमाययौ ।
वन्द्यमानो जगद्वन्द्यैश्चतुर्मुखमुखैः सुरैः ॥ १५ ॥

श्रीगुप्तस्य तमारम्भं विवेद नगरे जनः ।
दिक्षु धावति पापानां सुगुप्तमपि पातकम् ॥ १६ ॥

ततः कश्चित् समभ्येत्य भगवन्तमुपासकः । 5
उवाच चरणालीनश्चिन्तयन् दहनं विषम् ॥ १७ ॥

मिथ्यानम्रः प्रियालापी गूढवह्निविषान्नदः ।
परिहार्यः प्रयत्नेन भगवन्नेष दुर्जनः ॥ १८ ॥

कुर्यादनार्ये नाश्वासि कार्यं माधुर्यमाश्रिते ।
अम्रच्छेदी विगीर्णो हि मधुदिग्धमुखः क्षुरः ॥ १९ ॥ 10

नान्यस्तुतिं गुणद्वेषी सहते गुणिनां खलः ।
सन्तस्तुष्यन्ति येनैव तेन कुप्यन्ति दुर्जनाः ॥ २० ॥

त्वयि लोकत्रये नेत्रशतपत्रविकाशिनि ।
अस्य राहोः पदं प्राप्ते नान्धीभवति किं जगत् ॥ २१ ॥

तच्छ्रुत्वा भगवानूचे किंचित् स्मितसितांशुभिः । 15 D 265
तन्निकारोग्रतिमिरं दूरात् परिहरन्निव ॥ २२ ॥

न ममाङ्गं स्पृशत्यग्निः प्रभवत्यपि वा विषम् ।
परद्वेषदरिद्राणां दोषोऽपि निरुपद्रवः ॥ २३ ॥

अरोषशीतलं चेतः सिक्तं यस्य शमामृतैः ।
किं करोत्यनलस्तस्य विषं वा विषयद्विषः ॥ २४ ॥ 20

विषायते तु पीयूषं कुसुमं कुलिशायते ।
द्वेषदोषोत्तरस्यैव चन्दनं दहनायते ॥ २५ ॥

तिर्यग्योनिगतस्यापि बोधिसत्त्वपदस्थितेः ।
कारुण्यमैत्रीयुक्तस्य नाग्निर्दहति विग्रहम् ॥ २६ ॥

पुरा कलिङ्गनृपतिः खण्डद्वीपाभिधावनीम् । 25
ददाह मृगसंघानां संक्षेपे स समुद्यतः ॥ २७ ॥

कानने ज्वलिते तस्मिन्नेकस्तित्तिरिशावकः ।
मैत्र्या बोधिं समालम्ब्य दहनप्रशमं व्यधात् ॥ २८ ॥

तस्मादद्रोहमनसां न भयं विद्यते क्वचित् ।
श्रूयतां सत्त्वसंपत्तेरिदमन्यच्च कौतुकम् ॥ २९ ॥ 30

7

अवृष्टिविषमे काले मुनेः कस्यचिदाश्रमे ।
मनुष्यसदृशालापः शशकः सुचिरं स्थितः ॥ ३० ॥

क्षुत्क्षामं मुनिमालोक्य फलमूलपरिक्षयात् ।
उवाचाचलसंकल्पस्तद्व्यथाव्यथिताशयः ॥ ३१ ॥

5 भगवन् मम मांसानां संप्रति प्राणवर्तनम् ।
क्रियतां रक्षणीयं तत् शरीरं धर्मसाधनम् ॥ ३२ ॥

इत्युक्त्वा दावशेषाग्नौ चिक्षेप शशकस्तनुम् ।
वार्यमाणोऽपि यत्नेन प्रणयान्मुनिना मुहुः ॥ ३३ ॥

तस्य सत्त्वप्रभावेण ज्वलज्ज्वालाकुलोऽनलः ।
10 प्रययौ मञ्जुशिञ्जानभ्रमराम्भोजखण्डताम् ॥ ३४ ॥

सोऽपि दिव्यवपुस्तत्र कमले महति स्थितः ।
प्रणम्यमानो मुनिभिर्विदधे धर्मदेशनाम् ॥ ३५ ॥

इति बोधिप्रवृत्तानां न वह्नेर्न विषाद्भयम् ।
भगवान् कथयित्वेति श्रीगुप्तभवनं ययौ ॥ ३६ ॥

15 तत्र तेन प्रविश्यैव निक्षिप्ते दक्षिणे पदे ।
9 बभूवाग्निखदा मञ्जुगुञ्जद्भृङ्गसरोजिनी ॥ ३७ ॥

दृष्ट्वोपविष्टं श्रीगुप्तस्तं सरोरुहविस्तरे ।
तद्दृष्टिनष्टकालुष्यः प्रोवाच चरणानतः ॥ ३८ ॥

भगवन् मम पापस्य क्षन्तव्योऽयं व्यतिक्रमः ।
20 मोहान्धपतिते रुच्यं कारुण्यमधिकं सताम् ॥ ३९ ॥

ममाकल्याणमित्रेण योऽयं पापपथे कृतः ।
उपदेशः प्रमोहेण तत्र त्राणं भवत्स्मृतिः ॥ ४० ॥

विषदिग्धरसं सर्वं भोज्यं ते कल्पितं मया ।
अहो ममैव संक्रान्तं पश्चात्तापमयं विषम् ॥ ४१ ॥

25 इति ब्रुवाणं श्रीगुप्तं साश्रुनेत्रं कृपानिधिः ।
दृष्ट्वा बभाषे भगवान् भिक्षुसंघस्य शृण्वतः ॥ ४२ ॥

विषादं मा कृथाः साधो न वयं विमुखास्त्वयि ।
घोरवैरविषत्यागान्नैवास्मांस्तपते विषम् ॥ ४३ ॥

वाराणस्यां पुरा श्रीमान् ब्रह्मदत्तोऽभवन्नृपः ।
30 अभूदनुपमा नाम तस्य प्राणसमाश्रया ॥ ४४ ॥

सुवर्णभाससंज्ञस्य तत्पुरान्तवनस्थितेः ।
एवं मयूरराजस्य सा कदाचिदथाशृणोत् ॥ ४५ ॥ D 271

सा तस्य शब्दमाकर्ण्य वेणुवीणास्वनोपमम् ।
किमेतदिति पप्रच्छ नरनाथं सकौतुका ॥ ४६ ॥

राजोवाच वनान्तेऽस्मिन्नस्ति रत्नच्छदः शिखी । 5
मधुरं योजनव्यापि यस्यैतत् कण्ठकूजितम् ॥ ४७ ॥

इति ब्रुवाणो नृपतिस्तत्संदर्शनमर्थितः ।
प्रेमप्रयत्नैः प्रेयस्या प्रहसन् पुनरब्रवीत् ॥ ४८ ॥

दर्शनं दुर्लभं मुग्धे तद्विधाद्भुतरूपिणः ।
तथापि यदि निर्बन्धः क्रियते तत्परिश्रमः ॥ ४९ ॥ 10

इत्युक्त्वा नृपतिस्तस्य ग्रहणे जालजीविनः ।
व्यसृजत् तस्य संप्राप्त्यै विधाय वधसंविदम् ॥ ५० ॥

वशीकृतो न वेत्त्येव मोहादक्षिपरीक्षया ।
अनुरागाहतः स्त्रीभिरकर्माण्यपि कार्यते ॥ ५१ ॥

प्राप्तानां प्रणयात् पत्न्याः प्रौढायाः पादपीठताम् । 15
ईर्ष्ययैव विनश्यन्ति धीधृतिस्मृतिकीर्तयः ॥ ५२ ॥

ततः शाकुनिकैर्न्यस्ताः पाशबन्धाः पदे पदे । D 273
प्रभावाद्बर्हिराजस्य व्यशीर्यन्तैव संततम् ॥ ५३ ॥

दुःखितान् यत्नवैफल्याद्भीतान् नृपतिशासनात् ।
मयूरराजस्तान् दृष्ट्वा करुणाकुलतां ययौ ॥ ५४ ॥ 20

सोऽचिन्तयदहो भीताः क्ष्मापतेः क्रूरशासनात् ।
मद्बन्धने विसंवादाद्वराका जालजीविनः ॥ ५५ ॥

इति संचिन्त्य कृपया स्पष्टवाग्भिर्विसृज्य तान् ।
नृपमानाय्य तद्वेश्म तेनैव सहितो ययौ ॥ ५६ ॥

स तत्रान्तःपुरे नित्यं सभार्येण महीभुजा । 25
पूज्यमानः परिचयादुवास विहितादरः ॥ ५७ ॥

स्निग्धश्यामाम्बुदत्विषा सुनीलमणिवेश्मसु ।
चित्रपत्ररुचा चक्रे संसक्तेन्द्रायुधभ्रमम् ॥ ५८ ॥

अथ दिग्जययात्रायां कदाचिद्वसुधाधिपः ।
ययौ तदुपचाराय देवीमादिश्य सादरः ॥ ५९ ॥ 30

ततश्चानुपमा देवी पत्यौ याते प्रमादिनी।
रूपयौवनदर्पान्धा नालुलोके कुलस्थितिम्॥ ६० ॥
तरुणं प्रेक्ष्य रागिण्यास्तस्याः कन्दर्पविप्लवे।
भूयः प्रलम्भभीतेव लज्जा दूरतरं ययौ॥ ६१ ॥
D 275 5 मलिनः कुटिलस्तीक्ष्णः कर्णसंस्पर्शनोचितः।
चपलश्चपलाक्षीणां सुदृशां सदृशः क्रमः॥ ६२ ॥
विविधोन्मादकारिण्यः संसारमकराकरे।
चरन्ति प्राणहारिण्यः कालकूटच्छदाः स्त्रियः॥ ६३ ॥
कुसुमात् सुकुमारस्य क्रूरस्य क्रकचादपि।
10 को जानाति परिच्छेदं स्त्रीणां चित्रस्य चेतसः॥ ६४ ॥
प्रचरन्तीं प्रियां कण्ठे कृत्वा ये यान्ति निर्वृतिम्।
शीतलां विमलां स्निग्धां खड्गधारां पिबन्ति ते॥ ६५ ॥
साचिन्तयत् स्थितः शल्यमयमन्तःपुरे मम।
मयूरराजः शीलज्ञः पुरुषालापवेष्टितः॥ ६६ ॥
15 कथयिष्यत्यवश्यं मे वृत्तमेष महीपतेः।
निन्द्यं कर्म कृतं तावदधुना किं करोम्यहम्॥ ६७ ॥
आस्तां परिज्ञाततत्त्वो मर्मज्ञोऽसौ विदग्धधीः।
जाता मे कृतपापायाः शङ्का निश्चेतनेष्वपि॥ ६८ ॥
इति संचिन्त्य सा तस्य सविषं भोजनं ददौ।
20 रागमत्ताः खलायत्ताः किं किं कुर्वन्ति न स्त्रियः॥ ६९ ॥
D 277 तयोपाचर्यमाणस्य सविषैः पानभोजनैः।
विवृद्धा बर्हिराजस्य रुरुचे रुचिरा रुचिः॥ ७० ॥
स्वस्थमालोक्य तं देवी रहस्योद्भेदशङ्किता।
शनैः शोकामयग्रस्ता त्रस्ता तत्याज जीवितम्॥ ७१ ॥
25 एवं तस्य विषेणापि नैव ग्लानिरजायत।
महतां चित्तवैमल्यं निर्विषं कुरुते विषम्॥ ७२ ॥
रागो विषं विषं मोहो द्वेषश्च विषमं विषम्।
बुद्धो धर्मस्तथा संघः सत्यं च परमामृतम्॥ ७३ ॥

घोरं विषं सृजति मोहमहाम्बुराशिः
30 घोरं विषं सृजति रागमहोरगश्च।
घोरं विषं सृजति वैरवनावनिश्च
जन्मक्रमोऽस्ति विषमस्य विषस्य नान्यः॥ ७४ ॥

अधर्मकामः कृतवानेवमेवान्यजन्मनि ।
श्रीगुप्तोऽग्निखदां सापि तस्याभूत्सहधर्मिणी ॥ ७५ ॥

इत्युक्त्वा भगवान् सम्यक्करुणालोकनाम्बुभिः ।
चकार वीतरजसं श्रीगुप्तं शासनोन्मुखम् ॥ ७६ ॥

कलितकुशलः श्रीगुप्तोऽथ प्रकाशपदाप्तये
शरणगमनान्येव त्रीणि स्मरन् विमलस्मृतिः ।
जिनपरिचयात् पुण्यं लेभे सतां हि विलोकनं
भवति महते कल्याणाय प्रमोदसुखाय च ॥ ७७ ॥ 5 D 27

श्रीगुप्तस्य निकारकिल्बिषजुषोऽप्यज्ञानमोहापहः
कृत्वावश्यमनुग्रहेण भगवान् कारुण्यपुण्योद्यतः ।
भिक्षूणां भवसंक्षयाय विदधे निर्वैरताशासनं
येनैते न भवन्ति बन्धभवने भूयो भवग्रन्थये ॥ ७८ ॥ 10

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
श्रीगुप्तावदानं नाम अष्टमः पल्लवः ॥



# ९ ज्योतिष्कावदानम् ।

D 281 धन्यानामशिवं बिभर्ति शुभतां भव्यस्वभावोद्भवं
मूर्खाणां कुशलं प्रयात्यहिततामित्येष लक्ष्यः क्रमः ।
निशीथतिमिरान्ध्यमौषधिवनस्यात्यन्तकान्तिप्रदं
5 एतच्चौलुककूलदृष्टहतये सर्वत्र मैत्रं महः ॥ १ ॥

पुरा राजगृहाभिख्ये बिम्बिसारस्य भूपतेः ।
अभूत् पौरः सुभद्राख्यः परिपूर्णगृहस्थितेः ॥ २ ॥

मौर्ख्यान्मोहप्रपन्नस्य सर्वदर्शनविद्विषः ।
तस्य क्षपणकेष्वेव बभूवाभ्यधिकादरः ॥ ३ ॥

10 तस्य सत्यवती नाम जायाभिजनशालिनी ।
गर्भमाधत्त पूर्णेन्दुबिम्बं पौरंदरीव दिक् ॥ ४ ॥

कलन्दकनिवासाख्यो वेणुकाननसंश्रयः ।
D 283 कदाचित् भगवान् बुद्धः प्राप्तः पिण्डाय तद्गृहम् ॥ ५ ॥

पूजां सभार्यः कृत्वास्मै तं स पप्रच्छ सादरः ।
15 गर्भस्थितमपत्यं यत् किंरूपं तद्भविष्यति ॥ ६ ॥

सोऽवदत् संपदं भुक्त्वा पुत्रस्ते दिव्यमानुषीम् ।
प्रव्रज्यया शासने मे संयुक्तो मुक्तिमेष्यति ॥ ७ ॥

याते भगवति स्पष्टमित्यादिश्य निजाश्रयम् ।
अभ्याययौ गृहपतेर्भूरिकः क्षपणो गृहम् ॥ ८ ॥

20 भगवद्भाषितं तत्तु सुभद्रेण निवेदितम् ।
श्रुत्वा क्षपणकः क्षिप्रमभूद्द्वेषविषाकुलः ॥ ९ ॥

गणयित्वा स सुचिरं ग्रहज्ञानकृतश्रमः ।
यदेवोक्तं भगवता प्रश्नेऽपश्यत्तथाविधम् ॥ १० ॥

सोऽचिन्तयदहो सत्यमुक्तं तेन न संशयः ।
25 तत्प्रभावोपमादाय किं स्वसत्यं वदाम्यहम् ॥ ११ ॥

तस्य सर्वज्ञतां वेत्ति सुभद्रो यदि मद्गिरा ।
तदेष क्षपणश्रद्धां त्यक्ष्यति श्रमणादरात् ॥ १२ ॥

D 285 इति संचिन्त्य सामर्षः स सुभद्रमभाषत ।
असत्यमेतत् कथितं तेन सर्वज्ञमानिना ॥ १३ ॥

मनुष्यः कथमाप्नोति देवार्हां दिव्यसंपदम्।
प्रव्रज्या किं तु सत्येव कथं तेनास्य चिन्तिता ॥ १४ ॥
क्षीणः क्षुदुपसंतप्तो यस्य नास्त्यन्यतो गतिः।
तस्य तस्य सुभिक्षार्हं शरणं श्रमणव्रतम् ॥ १५ ॥
पश्याम्यहं गृहपते प्रमाणं यदि मद्वचः।
प्रत्युतायं शिशुर्जातः कुलं संतापयिष्यति ॥ १६ ॥
इत्युदीर्य क्षपणके याते गृहपतिश्चिरम्।
विचार्य विदधे तां तां युक्तिं गर्भनिपातने ॥ १७ ॥
यदा द्रव्यप्रयोगेऽपि नैव गर्भः परिच्युतः।
तदास्य पत्नीमवधीदेकान्ते हठमर्दनैः ॥ १८ ॥
ततः शीतवनं तस्यां श्मशानं तेन पापिना।
प्रापितायां क्षपणकास्तद्वार्तानन्दिता जगुः ॥ १९ ॥
अहो बताहो सर्वज्ञः शिशोः सत्यं तदुक्तवान्।
सेयं सूनावजातेऽस्य जननी पञ्चतां गता ॥ २० ॥
इयं सा श्रीः शिशोर्दिव्या सोक्ता दिव्यमनुष्यता।
इयं च सास्य प्रव्रज्या यत् कुक्षौ निधनं गतः ॥ २१ ॥
इति तेषां प्रवादेन सोपहासेन सर्वतः।
श्मशानदर्शनायैव बभूव जनसंगमः ॥ २२ ॥
अत्रान्तरे दिव्यदृशा भगवान् भूतभावनः।
सर्वं विज्ञाय तद्बुद्धः प्रदध्यौ सस्मितः क्षणम् ॥ २३ ॥
अहो मोहानुबन्धेन दूरस्थैरपि देहिनाम्।
आलोकश्छाद्यते मूर्खैर्मेघैरिव विकारिभिः ॥ २४ ॥
शुभं क्षपयता तेन क्षपणेन स मुग्धधीः।
अहो गृहपतिः पापादकार्यमपि कारितः ॥ २५ ॥
इति संचिन्त्य भगवान् स्वयं भिक्षुगणैर्वृतः।
ययौ शीतवनं क्षिप्रं श्मशानं करुणाकुलः ॥ २६ ॥
श्मशानचारिकां ज्ञात्वा राजा भगवतः स्वयम्।
बिम्बिसारः सहामात्यैस्तामेव भुवमाययौ ॥ २७ ॥
ततः सुभद्रजायायां प्रक्षिप्तायां चितानले।
कुक्षिं भित्त्वाम्बुजासीनः शिशुः सूर्य इवोद्ययौ ॥ २८ ॥
ज्वालितानलमध्यस्थं तं कश्चिन्नाग्रहीद्यदा।
तदा जनसमूहस्य हाहाकारो महानभूत् ॥ २९ ॥

ततस्तं संभ्रमावृद्धगतिः सुगतशासनात् ।
कुमारभृत्यो जग्राह जीवकाख्यः कुमारकम् ॥ ३० ॥
जिनावलोकनेनैव बालकग्रहणक्षणे ।
अभूच्चितानलस्तस्य हरिचन्दनशीतलः ॥ ३१ ॥
5 जीवन्तं ज्वलनान्मुक्तं रुचिरं वीक्ष्य दारकम् ।
वैलक्ष्येण क्षपणकाः क्षणं तस्थुर्मृता इव ॥ ३२ ॥
ततः सुभद्रं भगवान् सर्वभूतहिते रतः ।
बभाषे विस्मयोद्भ्रान्तं पुत्रोऽयं गृह्यतामिति ॥ ३३ ॥
स तु दोलाकुलमतिः किं करोमीति संशयात् ।
10 क्षपणानां मुखान्येव शिक्षायै क्षणमैक्षत ॥ ३४ ॥
ते तमूचुर्न बालोऽयं ग्राह्यः श्मशानवह्निजः ।
यत्रायं तिष्ठति व्यक्तं न भवत्येव तद्गृहम् ॥ ३५ ॥
इति तेषां गिरा मूर्खः स जग्राह न तं यदा ।
तदा क्षितिपतिर्बालमाददे जिनशासनात् ॥ ३६ ॥
D 291 15 ज्योतिर्मध्यादवाप्तस्य ज्योतिष्कसदृशत्विषः ।
ज्योतिष्क इति नामास्य चकार भगवान् स्वयम् ॥ ३७ ॥
तस्य प्रवर्धमानस्य भूपालभवने शिशोः ।
देशान्तरगतः काले मातुलः समुपाययौ ॥ ३८ ॥
स विदित्वा स्वसुर्वृत्तं निधनं पुत्रजन्मनि ।
20 कोपात् सुभद्रमभ्येत्य कम्पमानः समभ्यधात् ॥ ३९ ॥
मूर्ख क्षपणभक्तेन तद्गिरा हतयोषिता ।
त्वया त्यक्तस्वपुत्रेण किं नाम सुकृतं कृतम् ॥ ४० ॥
निश्चेतनाः स्वभावेन परमन्नसमुत्थिताः ।
हसन्तोऽपि विनिघ्नन्ति वेताला इव दुर्जनाः ॥ ४१ ॥
25 अधुनैव न गृह्णासि यदि राजगृहात् सुतम् ।
तत्ते स्त्रीवधमुद्घुष्य कारयाम्यर्थनिग्रहम् ॥ ४२ ॥
इत्युक्तस्तेन तद्गीत्या स भूपतिगृहात् सुतम् ।
आनिनाय चिरान्मुक्तमकामेन महीभुजा ॥ ४३ ॥
ततः सुभद्रे कालेन कालस्य वशमागते ।
30 अभून्निधिर्विभूतीनां ज्योतिष्कोऽर्क इव त्विषाम् ॥ ४४ ॥
D 293 अर्थिकल्पद्रुमः प्राप्य संपदं दिव्यमानुषीम् ।
स बुद्धधर्मसंघेषु शरण्येष्वकरोन्मतिम् ॥ ४५ ॥

तद्भक्त्युपनतं दिव्यरत्नसंचयमद्भुतम् ।
प्रददौ भिक्षुसंघेभ्यः पुण्यरत्नार्जनोद्यतः ॥ ४६ ॥
तस्य देवनिकायेभ्यः साश्चर्या विविधर्द्धयः ।
स्वयमेवाययुर्वेश्म महोदधिमिवापगाः ॥ ४७ ॥
तृणे रत्ने च समधीर्भगवानपि तद्गृहे । 5
चक्रे तदनुरोधेन रत्नपात्रपरिग्रहम् ॥ ४८ ॥
स दिव्यवस्त्रयुगलं यशसामुपमाक्षमम् ।
प्राप पुण्यपणक्रीतं निजं गृहमिवामलम् ॥ ४९ ॥
कदाचिदथ तद्वस्त्रं स्नानार्द्रं न्यस्तमातपे ।
समीरणेनापहृतं न्यपतन्मूर्ध्नि भूपतेः ॥ ५० ॥ 10
विलोक्यापूर्वरुचिरं ज्योतिष्कस्य तदंशुकम् ।
दिव्यश्रीविस्मितो राजा तृणं मेने निजश्रियम् ॥ ५१ ॥
भोक्तुं निमन्त्रितः प्राप्य तस्य रत्नमयं गृहम् ।
नृपतिः स्वर्गमज्ञासीत् ज्योतिष्कभवनस्थितः ॥ ५२ ॥
अथ कालेन भूपालः पुत्रेणाजातशत्रुणा । 15 D 295
छद्मना राज्यलुब्धेन धर्मशीलो निपातितः ॥ ५३ ॥
अतीते सद्गुणे राज्ञि तस्मिन् कृतयुगोपमे ।
अधर्म इव स प्राप राज्यं राजवरात्मजः ॥ ५४ ॥
स भूभृद्दुर्लभां दृष्ट्वा ज्योतिष्कस्य गृहे श्रियम् ।
तमुवाच समभ्येत्य मत्पित्रा त्वं विवर्धितः ॥ ५५ ॥ 20
भ्राता तवाहं धर्मेण विभवार्धं प्रयच्छ मे ।
न चेद्भागधनद्रोहात् कलिरेव प्रजायते ॥ ५६ ॥
इत्युक्तस्तेन कौटिल्यात् ज्योतिष्कः क्रूरकारिणा ।
रत्नपूर्णं गृहं तस्मै दत्वा प्रायात् परं गृहम् ॥ ५७ ॥
सा दिव्यरत्नरुचिरस्फीता लोकोपकारिणी । 25
ज्योतिष्कमेवानुययौ श्रीः प्रभेव दिवाकरम् ॥ ५८ ॥
पुनस्त्यक्तापि सा संपत् सप्तकृत्वः प्रभावती ।
ज्योतिष्कमस्पृष्टनृपा साध्वी पतिमिवाययौ ॥ ५९ ॥
सर्वस्वाहरणोद्युक्तं दस्युचौरादियुक्तिभिः ।
ज्योतिष्कः कुपितं ज्ञात्वा निर्विण्णः समचिन्तयत् ॥ ६० ॥ 30
अपुण्यपरिपाकेण प्रजानां जनकोपमः । D 297
संयातः स्मृतिशेषत्वं राजा वात्सल्यपेशलः ॥ ६१ ॥

कोऽन्यस्तत्सदृशो यस्मिन् निर्व्याजसरले प्रजाः ।
पितरीव कृताश्वासाः सुखं रात्रिषु शेरते ॥ ६२ ॥
धनिनस्तृणवत्प्राप्याः प्राप्यन्ते रत्नवद्बुधाः ।
अमृतादपि दुष्प्राप्यः सौजन्यसरलो जनः ॥ ६३ ॥
5 निर्व्याजवैदग्ध्यजुषाममुग्धसरलात्मनाम् ।
अनुद्धतोन्नतानां च विरलं जन्म तादृशाम् ॥ ६४ ॥
अधुना द्वेषदुर्वृत्तः प्रवृत्तनिकृतिर्नृपः ।
पापपाकेन लोकानामकाले कलिरागतः ॥ ६५ ॥
मित्रे जगति यातेऽस्तं तस्मिन् भास्वति भूपतौ ।
10 दोषोदयः प्रवृद्धोऽयमन्धकाराय तत्सुतः ॥ ६६ ॥
नूनं सतामतीतानां निष्कारणसुहृत् खलः ।
यद्वृत्तपरभागेण यशस्तेषां प्रकाशते ॥ ६७ ॥
तस्मादियं परित्याज्या नृपत्यधिष्ठिता मही ।
कालें कलौ क्षितीशे च जनानां जीवितं कुतः ॥ ६८ ॥
D 299 15 वरपरिचयोदारा दाराः सतां गुणिनां गुणाः
कुलमविकलं भव्या भूतिर्यशः शशिसंनिभम् ।
स्थितिसमुचितं वृत्तं वित्तमनिमित्तमनापदं
गुणवति नृपे सर्वं भवत्यपांशुलं प्रजाकुलम् ॥ ६९ ॥
धर्मद्रुमस्य धनमूलसमुद्गतस्य
20 निर्दोषकामकुसुमप्रवरोज्ज्वलस्य ।
लोकः सुखानि किल पुण्यफलानि भुङ्क्ते
हतो न चेत् कुनृपतेर्विनिपातवातैः ॥ ७० ॥
कलिः कालः पतिर्बालस्तत्प्रतापश्चितानलः ।
अकालविप्लवोत्तालखलवेतालसंकुलः ॥ ७१ ॥
25 प्रीतिर्विषण्णा खिन्ना धीः सुखश्रीर्गतयौवना ।
अधुना विभवाभोगे भोगयोगे न मे रुचिः ॥ ७२ ॥
धनं भूमिर्गृहं दाराः सुता भृत्याः परिच्छदाः ।
अहो निरवधिः पुंसामाधिव्याधिपरिग्रहः ॥ ७३ ॥
यथा यथा विवर्धन्ते ग्रीष्मोष्मविषमाः श्रियः ।
30 तथा तथा ज्वलत्येव तृष्णातापः शरीरिणाम् ॥ ७४ ॥
D 301 प्रवृद्धैरपि वित्तौघै राजन्योपार्जितैर्नृणाम् ।
लवणाब्धेरिव जलैर्वैतृष्णा नैव जायते ॥ ७५ ॥

नास्ति नास्तीत्यसंतोषाद् य एव धनिनां जपः ।
पुनर्भवे भवेत् को वा स एव प्रशमो यदि ॥ ७६ ॥

किं वित्तैर्दुर्निमित्तैः कलिकलहमोहलोभानुवृत्तैः
किं भोगैर्विप्रयोगैर्व्यसनशतपतनाभ्याससंसक्तरोगैः ।
किं वा मिथ्याभिमानैर्नरपतिसदनप्राप्तसेवावमानैः 5
अस्मिन् वैराग्यमेव क्षयसमयभये भोग्यमारोग्ययोग्यम् ॥ ७७ ॥

अतिक्रान्ते काले स्वजनसुहृदालोकविमले
समापन्ने मोहप्रबल[तर]कालुष्यमलिने ।
सुखाश्वासः पुंसां प्रशमसलिलस्नातमनसां
परित्यक्तायासे विजनवनवासे परिचयः ॥ ७८ ॥ 10

इति संचिन्त्य स चिरं परं वैराग्यमाययौ ।
दुःखं मोहाय मूर्खाणां विवेकाय च धीमताम् ॥ ७९ ॥ D 303

स दत्वा सर्वमर्थिभ्यः प्रययौ सुगताश्रमम् ।
श्रीशृङ्खलाकृष्टमतिर्न हि सत्यसुखोन्मुखः ॥ ८० ॥

यदैव राजहंसेन स्मर्यते शुचि मानसम् । 15
तदैवास्मै वसुमती सरसीव न रोचते ॥ ८१ ॥

याते दुःसहमोहधूममलिने भोगानुरागानले
संतोषामृतनिर्झरेण मनसि प्राप्ते शनैः शीतताम् ।
नैताः पानमदोत्तरङ्गविचलद्वाराङ्गनाभङ्गुर-
भ्रूभङ्गक्षणसंगमाः शमवतां कुर्वन्ति विघ्नं श्रियः ॥ ८२ ॥ 20

सर्वज्ञशासनविनष्टभवाध्वकष्टः
प्रव्रज्यया विमलमेव पदं प्रविष्टः ।
संप्राप्य सर्वसमतामसमप्रकाशः
निर्लक्ष्यमोक्षगमनाय मुनिर्बभूव ॥ ८३ ॥

तां बोधिसिद्धिमालोक्य ज्योतिष्कस्य सविस्मयैः । 25
भिक्षुभिर्भगवान् पृष्टः प्राग्वृत्तान्तमभाषत ॥ ८४ ॥

जन्मक्षेत्रशतोप्तानां बीजानामिव कर्मणाम् ।
भुज्यते फलसंपत्तिरविसंवादिनी जनैः ॥ ८५ ॥

राज्ञो बन्धुमतः पुर्यां बन्धुमत्यां महायशाः । D 305
अभूदनङ्गनो नाम श्रीमान् गृहपतिः पुरा ॥ ८६ ॥ 30

शास्ताथ सम्यक्संबुद्धो विपश्यी नाम तां पुरीम्।
जनचारिकया प्राप्तः कदाचित् सुकृतैः सताम्॥ ८७॥
द्वाषष्टिभिः स भिक्षूणां सहस्रैः परिवारितः।
श्रद्धयानङ्गनेनैत्य प्रणम्योपनिमन्त्रितः॥ ८८॥
5 सर्वोपकरणैस्तेन त्रैमासं परिचारितः।
यथा तथैव राज्ञापि प्रणिपत्य निमन्त्रितः॥ ८९॥
भोगैः स्पर्धानुबन्धेन स ताभ्यामधिवासितः।
अनङ्गनेन पौरार्हैर्भूपालार्हैश्च भूभुजा॥ ९०॥
गजध्वजमणिच्छत्रचामरोदारया श्रिया।
10 तं दृष्ट्वा पूजितं राज्ञा चिन्तार्तोऽभूदनङ्गनः॥ ९१॥
तस्य सत्त्वावदातस्य पक्षपाती शतक्रतुः।
चकार दिव्यया लक्ष्म्या साहाय्यं जिनपूजने॥ ९२॥
स तया दिव्यया भूत्या भगवन्तमपूजयत्।
यदग्रे चक्रवर्तिश्रीर्लज्जाभाजनतां ययौ॥ ९३॥

D 307 15 रत्नैर्न्यक्षतचन्द्रसूर्यभानराकंकीरणैरावणाभै(?)-
रम्लानाम्बरगन्धमाल्यशबलैः कल्पद्रुमाणां फलैः।
भक्तिप्रह्वशचीविलासचलनाहेलोच्छसच्चामरं
तेनाभ्यर्चितमाकलय्य सुगतं लज्जानतोऽभून्नृपः[1]॥ ९४॥

इति बहुतरं भक्त्या शास्तुः फलं तदनङ्गनः
20 शुभपरिणतेः पुण्योदारः पुरा समवाप्तवान्।
विमलमनसस्तस्यैवासौ क्षणप्रणिधानतः
पर इव रविर्ज्योतिष्कोऽभूत् स एव पदाश्रितः॥ ९५॥

इत्याह विमलज्ञानप्रकाशितजगत्त्रयः।
प्रणिधानोपदेशाय भिक्षूणां भगवान् जिनः॥ ९६॥

25 इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
ज्योतिष्कावदानं नाम नवमः पल्लवः॥

---

[1] The line was lost in orig. & replaced by Hedar Lochava.

## १० सुन्दरीनन्दावदानम् ।

D 309

ते केऽपि सत्त्वहितसंनिहितानुकम्पा
भव्या भवन्ति भुवने भवभीतिभाजाम् ।
वात्सल्यपेशलधियः कुशलाय पुंसां
कुर्वन्ति ये वरमनुग्रहमाग्रहेण ॥ १ ॥ 5
न्यग्रोधाराममनिरतं द्रष्टुं कपिलवस्तुनि ।
भगवन्तं ययौ नन्दः शाक्यराजसुतः पुरा ॥ २ ॥
नैष्क्रम्यदेशनामन्त्रकथान्ते स पुरःस्थितम् ।
उवाच भगवान् प्रीत्या प्रव्रज्या गृह्यतामिति ॥ ३ ॥
प्रसाद्याभिनिवेद्यास्य तं नन्दः प्रत्यभाषत । 10
भगवन् पुण्यलाभापि प्रव्रज्याभिमता न मे ॥ ४ ॥
सर्वोपस्थायको भूत्वा भिक्षुसंघं यथेप्सितैः ।
सर्वोपकरणैस्तावत् भैक्ष्यं परिचराम्यहम् ॥ ५ ॥
इत्युक्त्वा रत्नमुकुटैः स्पृष्टतत्पादपङ्कजः । D 311
राजपुत्रः स्वभवनं ययौ जायासमुत्सुकः ॥ ६ ॥ 15
स सुन्दरीं समासाद्य दयितां रतिसुन्दरीम् ।
विजहार वरोद्यानं मुहूर्तविरहासहः ॥ ७ ॥
ततः कदाचिद् भगवान् प्रकृत्यैव गुणिप्रियः ।
स्वयं नन्दस्य भवनं भिक्षुसंघैः सहाययौ ॥ ८ ॥
सानन्दवदनः कृत्वा नन्दस्तत्पादवन्दनाम् । 20
तं महार्हासनासीनं पूजयित्वा व्यजिज्ञपत् ॥ ९ ॥
केषां पुण्यप्ररोहाणां परिपाकोऽयमीदृशः ।
कृतोऽयं यद्भगवता दर्शनानुग्रहः स्वयम् ॥ १० ॥
स्मरणं श्रवणं वापि दर्शनं वा महात्मनाम् ।
सेयं कुशलवल्लीनां महती फलसंततिः ॥ ११ ॥ 25
अस्य मैत्रस्य महतस्तदालोकस्य दर्शनात् ।
हृदयस्य विकासश्रीः कस्य नाम न जायते ॥ १२ ॥
दानादपि प्रियतरं पुण्यादपि महाफलम् ।
सदाचारादपि श्लाघ्यं महतां किल दर्शनम् ॥ १३ ॥

---

१ The *Garbhāvakrāntyavadāna* which figures as 10th avadāna in Mss. is obviously an interpolation, as Somendra who prepared the **Table of contents** does not mention it. The Sanskrit version is no longer available. The interpolation is an attempt to make up the auspicious number of 108.

D 313 इति तस्य ब्रुवाणस्य भक्तिप्रणयपेशलम् ।
अभिनन्द्य पुरः पूजां भगवान् गन्तुमुद्ययौ ॥ १४ ॥
अनुवव्राज तं नन्दः स्वच्छे कनकभाजने ।
वरोपचारमादाय मधुरं स्वमिवाशयम् ॥ १५ ॥
5 पश्चाद्व्रजन्तमालोक्य भक्त्या भगवतः पथि ।
निरैक्षत कटाक्षेण सुन्दरी विरहासहा ॥ १६ ॥
गुरूणामग्रे सा सरलतरलां लोचनगतिं
विहायैव त्रासाञ्चितमुकुलिताक्षी प्रियतमा ।
निरीक्ष्यालक्ष्यं यत् क्षणमवनताभूत्तदधिकं
10 न गन्तव्यं नाथेत्यवददिव मौनादवचनम् ॥ १७ ॥
नन्दः प्रणयिणीं दृष्ट्वा सोच्छ्वासं चलिताननाम् ।
अयमागत एवाहमचिरादित्यभाषत ॥ १८ ॥
ततः स्वमाश्रमं प्राप्तं भगवन्तं कृताञ्जलिः ।
व्रजामि स्वगृहं तावदित्याह विरहासहः ॥ १९ ॥
15 ततस्तमासनासीनः प्रणतं भगवान् पुरः ।
उवाच सस्मितं केयं गमने संप्रति त्वरा ॥ २० ॥
D 315 विषयास्वादसौहार्दसंमोहार्दितचेतसाम् ।
अहो गृहसुखेष्वेव निर्वेदविमुखा मतिः ॥ २१ ॥
गुणाभरणमेवायुर्विवेकाभरणो गुणः ।
20 प्रशमाभरणश्चासौ वैराग्याभरणः शमः ॥ २२ ॥
तज्जाड्यं तदसह्यशल्यशल्कं न्यस्तं सुहृच्चेतसि
प्राज्ञैस्तद्गणितं विचारसमयैर्वैफल्यमेवायुषः ।
यद्वैराग्यविवेकशून्यमनसामेते पशूनां यथा
यान्त्यायान्ति च चक्रनेमिचलनैर्निर्लक्षणानां क्षणाः ॥ २३ ॥
25 पुण्यं सत्त्ववतां श्रुतं मतिमतां शीलं च विद्यावतां
सर्वं भाग्यवतां सुखं शमवतां नैव क्वचित् दुर्लभम् ।
दुष्प्रापस्तु समस्तवस्तुवसतेः स्वल्पांशकोऽप्यायुषः
तद्यस्य क्षयमेति निष्फलतया शोच्याय तस्मै नमः ॥ २४ ॥
वामावर्ते विषयजलधौ पूर्णलावण्यसारे
30 दर्पोत्सर्पद्विषममकराङ्कोद्भवक्षोभ्यमाणे ।
नित्यासन्नप्रबलविरहप्रज्वलद्वाडवाग्नौ
पुंसां सेतुस्तरणशरणे तीव्रवैराग्यमेव ॥ २५ ॥

तस्माद्गृहाण प्रव्रज्यां राजपुत्र जितेन्द्रियः। D 317
एताः स्त्रिय इव क्षिप्रं समागमसुखाः श्रियः॥ २६॥
क्रियतां कुशलायैव ब्रह्मचर्यपरिग्रहः।
त्यज्यतामेष निःसारगृहसंसारदुर्ग्रहः॥ २७॥
इति श्रुत्वा भगवतः करुणाभरणं वचः। 5
प्रत्यभाषत तं नन्दः पूर्वप्रणययन्त्रितः॥ २८॥
सदा भवदुपायैव प्रव्रज्या भगवन् मम।
भिक्षुसंघोपकारार्थे गृह एवादरः परम्॥ २९॥
इत्युक्त्वा भगवद्वाक्यमतिक्रान्तुमनीश्वरः।
कृष्यमाणः प्रियाप्रेम्णा सोऽभूद्दोलाकुलाशयः॥ ३०॥ 10
पुनः पुनश्चकारास्य भगवान् व्रतदेशनाम्।
उपकारोद्यताः सन्तश्चिन्तयन्ति न योग्यताम्॥ ३१॥
यदा नेच्छति नन्दस्तां प्रव्रज्यामजितेन्द्रियः।
तदास्य भगवद्वाक्यमपतद्वपुषि स्वयम्॥ ३२॥
नन्दः काषायावरणः पात्रपाणिः स तत्क्षणम्। 15
बभौ चामीकररुचिर्महापुरुषलक्षणैः॥ ३३॥
स शासनाज्जिनस्याभूदारण्यपिण्डपात्रिकः। D 319
आकारादनगारतां प्रयातः पांशुकूलिकः॥ ३४॥
प्रियामुवाह सततं श्यामां प्रव्रजितोऽपि सः।
शशाङ्क इव संव्यक्तां हृदये लाञ्छनच्छविम्॥ ३५॥ 20
मनसः स्फटिकस्येव न विद्मः केन वर्त्मना।
रागः कोऽपि विशत्यन्तर्नापैति क्षालितोऽपि यः॥ ३६॥
विरहापाण्डुररुचिः संसक्तारुणचीवरः।
स संध्याभ्रकलङ्कस्य जहार शशिनः श्रियम्॥ ३७॥
विचरन् विरहाक्षमः स विस्मृतधृतिर्वने। 25
जन्मविद्यामनङ्गस्य न विसस्मार सुन्दरीम्॥ ३८॥
संपूर्णचन्द्रवदनावदनध्याननिश्चलः।
अचिन्तयच्चिरं तत्तदुपविश्य शिलातले॥ ३९॥
अहो भगवताप्येष कृतो यत्नादनुग्रहः।
नायाति मम वैमल्यं रागाधिष्ठितचेतसः॥ ४०॥ 30
श्रुतं संसारचरितं निःसङ्गव्रतमास्थितम्।
तथापि मृगशावाक्षीं न विस्मरति मे मनः॥ ४१॥

D 321

कान्ताकुङ्कुमलग्नरागसुभगे गात्रे कृतं चीवरं
तत्पीनस्तनमण्डलप्रणयिना पात्रं धृतं पाणिना ।
रागोऽयं मम वर्धतेऽस्य यदि वान्यस्यैव वृद्धिः परं
यद्बोधिव्यवधानभूतमनिशं ध्यानं तदालम्बनम् ॥ ४२ ॥

5 क्षणेन मां प्राप्तमवेहि मुग्धे
तामेवमुक्त्वा गमने पुरस्तात् ।
अहो मया दर्शनविघ्नभूतं
पश्चात् कृतघ्नव्रतमेतदात्तम् ॥ ४३ ॥

नो गन्तव्यमिति प्रकम्पतरला वाक्यं यदूचे न सा
10 संत्यज्य व्यजनं स्थिते गुरुजने जग्राह पाण्यञ्चलम् ।
यत्पादेन लिखन्त्यपि क्षितितलं मामैक्षतालक्षिता
तेनात्यन्तनिषेधमुग्धविधिना बद्धं तया मे मनः ॥ ४४ ॥

मद्वियुक्ता न सा नूनं शेते शोकप्रलापिनी ।
पुलिने चक्रवाकीव हर्म्ये हरिणलोचना ॥ ४५ ॥

D 323 15 हा प्रिये त्यक्तसक्तेन कितवेनेव केवलम् ।
श्रितं तच्चित्तचौरेण मिथ्याव्रतमिदं मया ॥ ४६ ॥

त्यक्त्वा व्रतमिदं तावद् गच्छामि दयितान्तिकम् ।
अनुरागाग्नितप्तानां तपस्तापो हि दुःसहः ॥ ४७ ॥

राजपुत्री चिरायातं नृशंसमवलोक्य माम् ।
20 मन्युना नवलग्नेन न जाने किं करिष्यति ॥ ४८ ॥

न सर्वत्र विकाराय निकारः प्रेमदुःसहः ।
दुर्निवारो भवत्येव स्नेहलीनो रजःकणः ॥ ४९ ॥

यस्मिन् क्षणे भगवता पश्यामि रहितं वनम् ।
मया तदैव गन्तव्यं गृहमित्येष निश्चयः ॥ ५० ॥

25 अस्मिन्नेव शिलापट्टे रुचिरैर्गिरिधातुभिः ।
लिखामि तां शशिमुखीं संप्राप्यालम्बनं धृतेः ॥ ५१ ॥

अथवा कथमालेख्यविषयं याति सा प्रिया ।
सौन्दर्यबिन्दवो यस्याः सुधाकुवलयेन्दवः ॥ ५२ ॥

दृष्टिर्मुग्धकुरङ्गसंचलदलिव्याप्तोत्पलोद्घातनी
30 लावण्योदधिकूलविद्रुमवनं बिम्बाधराग्रत्विषः ।
निर्दोषामृतरश्मिसार्थसरणिः सा कापि वक्त्रद्युतिः
सान्दर्यं कथमेति चित्रपदवीं श्चर्यसारं वपुः ॥ ५३ ॥

इति संचिन्त्य स शनैरालिलेख शिलातले । D 325
सुन्दरीं मुखमुक्ताश्रुस्नातकम्पाकुलाङ्गुलिः ॥ ५४ ॥
स संकल्पसमुद्गीर्णां प्रतिबिम्बमिवाश्रिताम् ।
कृत्वा पुरः प्रियतमामूचेऽदर्बाष्पगद्गदः ॥ ५५ ॥
प्रियामालिख्याहं निखिलसुखवृष्टिं नयनयो- 5
र्न पश्याम्युद्बाष्पः क्षणमपि शरच्चन्द्रवदनाम् ।
अयं नूनं तन्वीविरहनिरपेक्षव्रतवतः
स्फुरत्तापः शापः किमपि मम पापादुपनतः ॥ ५६ ॥
फुल्लाम्भोजवनत्विषा स्पृहावशासक्ताश्रुतोयं वपु-
स्तत्कालोपगतान्तरायजनितः कोपः समुत्सृज्यताम् । 10
हंहो सुन्दरि देहि मे प्रतिवचः किं मौनमालम्बसे
सत्यं त्वन्मयरागचीवरमिदं चित्तव्रतं मे व्रतम् ॥ ५७ ॥
इति ब्रुवाणं तं दृष्ट्वा दूरादालिखितं च तत् ।
सासूया भिक्षवोऽभ्येत्य भगवन्तं बभाषिरे ॥ ५८ ॥
भगवन् दुर्विनीतस्य वात्सल्यादेव केवलम् । 15
शुनः कुसुममालेव प्रव्रज्येयं त्वयार्पिता ॥ ५९ ॥
आलिख्य सुन्दरीमुखं नन्दः स्वैरं शिलातले । D 32
तत्प्रलापजपासक्तो ध्यानालम्बनतां गतः ॥ ६० ॥
एतदाकर्ण्य भगवान् नन्दमाहूय काननात् ।
किमेतदिति पप्रच्छ प्रियाविरहमोहितम् ॥ ६१ ॥ 20
सोऽब्रवीद् भगवन् सत्यं कान्तासक्तस्य मे परम् ।
भिक्षूणां संमतेऽप्यस्मिन् वने न रमते मतिः ॥ ६२ ॥
इति नन्दवचः श्रुत्वा तमूचे भगवान् जिनः ।
मीलयन्नेव वक्त्रेन्दुकान्त्या रागसरोरुहम् ॥ ६३ ॥
साधो तावन्न युक्ता ते संरागानुगता मतिः । 25
विघ्नैर्नाकृष्यते चेतः कल्याणाभिनिवेशिनाम् ॥ ६४ ॥
क्वायं योगस्तनुतृणतुलात्यक्तभोगाभियोगः
क्वायं निन्द्यः क्षणसुखलवास्वादसंवाद एषः ।
जात्यैवायं हरति कुशलं दुस्तरो मारमार्गः
प्रेमान्धानां भवति सहसा दुःसहो योक्त्रजातः ॥ ६५ ॥ 30
इत्यस्य भगवान् कृत्वा चिरं वैराग्यदेशनाम् ।
संस्थातव्यमिहेत्युक्त्वा स्वकृत्याय स्वयं ययौ ॥ ६६ ॥

D 329 तमेवावसरं नन्दः संचिन्त्य गमनोचितम् ।
प्रतस्थे स्वगृहं हृष्टः सुन्दरीदर्शनोत्सुकः ॥ ६७ ॥
व्रजन् द्वारि पिधानाप्तैर्विहारैर्बहुभिश्चिरात् ।
नगराभिमुखं मार्गं स कथंचिदवाप्तवान् ॥ ६८ ॥
5 अथ विज्ञाय सर्वज्ञस्तं रागाद् गन्तुमुद्यतम् ।
उवाचाभ्येत्य भगवान् नन्द तूर्णं क्व गम्यते ॥ ६९ ॥
स जगाद वने तावत् भगवन् नास्ति मे रतिः ।
न ह्यविश्रान्तचित्तानां क्रिया काचित् प्रसीदति ॥ ७० ॥
सा श्रीश्यामरहासिनी मणिमयी सा रम्यहर्म्यावली
10 सा बालानिललोलचारुलतिका कान्ता नवोद्यानभूः ।
सा तन्वी कुसुमेषुकार्मुकलता क्षामोदरी सुन्दरी
नो जन्मान्तरवासना इव मनः सक्तं विमुञ्चन्ति मे ॥ ७१ ॥
सरागेणैव मनसा ब्रह्मचर्यं चराम्यहम् ।
व्रतपञ्जरबन्धेन विहङ्ग इव यन्त्रितः ॥ ७२ ॥
D 331 15 त्यक्त्वा व्रजामि प्रव्रज्यामस्तु मे नरकोऽक्षयः ।
न वीतरागतामेति मञ्जिष्ठारक्तमंशुकम् ॥ ७३ ॥
इति ब्रुवाणमसकृत् स्वपदं गन्तुमुद्यतम् ।
निवार्यानुग्रहधिया तमूचे भगवान् जिनः ॥ ७४ ॥
मा कृथा विप्लवं नन्द निन्दितं हि श्रुताश्रुतम् ।
20 विद्वज्जनोपदिष्टेन यथा याति पृथग्जनः ॥ ७५ ॥
विवेकव्यस्तदोषाणां विदुषां शीलशालिनाम् ।
निःसारसुखलाभेन नाकार्ये धीः प्रवर्तते ॥ ७६ ॥
गाढरागगृहीतस्य जुगुप्सायतने परम् ।
जघन्यकर्मण्यासक्तिः किं लज्जाजनने न ते ॥ ७७ ॥
25 योनिजयोनिसंसक्ताः स्तनपस्तनमर्दिनः ।
अहो बत न लज्जन्ते जन्मन्येव लयं गताः ॥ ७८ ॥
सदासज्जनवर्जिता जननीजघनासक्तिः ।
संमोहाहतचित्तानां पशूनामेव दृश्यते ॥ ७९ ॥
रामारमणमानोऽयं विरम्य त्यज्यतां त्वया ।
30 भोगैः सह भुजङ्गानां दृष्टो भवबिले क्षयः ॥ ८० ॥
D 333 जघन्या जनयत्येव न कस्य विरतिं रतिः ।
यस्यां भवति पर्यन्तेष्वपि नैव पराङ्मुखः ॥ ८१ ॥

गृहजालविमुक्तस्त्वं किं तत्रैवाभिधावसि ।
न हि निर्गत्य सारङ्गः पुनर्विशति वागुराम् ॥ ८२ ॥
इति वाक्याद् भगवतः शासनेन नियन्त्रितः ।
चिन्तयन् सुन्दरीं नन्दः प्रविवेशाश्रमं पुनः ॥ ८३ ॥
ततः कदाचिदादिश्य नन्दमाश्रममार्जने । 5
आसनानुग्रहव्यग्रः प्रययौ भगवान् पुनः ॥ ८४ ॥
तच्छासनात् प्रवृत्तस्य नन्दस्याश्रमशोधने ।
नो भूतलादपययौ रजो राग इवाशयात् ॥ ८५ ॥
तस्याहर्तुं गतस्याथ सलिलं पारभागिकम् ।
मुहुः पूर्णसमुत्क्षिप्तः शून्य एवाभवद्घटः ॥ ८६ ॥ 10
तेन विघ्नेन गमने सुतरां खिन्नमानसः ।
त्यक्त्वा तु प्रययौ नन्दः सुन्दरीदर्शनोत्सुकः ॥ ८७ ॥
अथ विज्ञाय सर्वज्ञस्तं यान्तं दिव्यचक्षुषा ।
बभाषे सहसाभ्येत्य स्तम्भमानमनोरथः ॥ ८८ ॥
पात्रयोगेन तप्तस्य श्यामरक्तरुचेः परम् । 15 D 335
अहो स्नेहकलङ्कस्ते दीपस्येव न शाम्यति ॥ ८९ ॥
अलं वामाभिलाषेण नीलीराग इवैष ते ।
संसक्तः कोऽपि हृदये यन्नाद्यापि विरज्यसे ॥ ९० ॥
अन्धीकरोति प्रारम्भे रतिस्तत्कालकातरम् ।
आलिङ्गति जुगुप्सेव वृत्ते मुख्याङ्गसंगमे ॥ ९१ ॥ 20
विषयास्वादसङ्गेन पापमित्रैरिवेन्द्रियैः ।
दुःसहव्यसनावर्ते पात्यते नरके नरः ॥ ९२ ॥
अधिवासयति स्पर्शलेशेनापि कुसंगमः ।
प्रक्लिन्नमत्स्यकुणपात् पूतिगन्ध इवोद्गतः ॥ ९३ ॥
कल्याणमित्रसंपर्कः सर्वथा कुशलावहः । 25
शुभामोद इव व्याप्तो यः करोति महार्हताम् ॥ ९४ ॥
इत्युक्ते तस्य भगवान् साक्षात् सदसतोः पथि ।
घ्राणस्पर्शेन संदर्श्य चक्रे तत्सङ्गदेशनाम् ॥ ९५ ॥
अथ नन्दं समादाय भगवान् गन्धमादने ।
ययौ विरिञ्चिचमरीबालव्यजनवीजितः ॥ ९६ ॥ 30
तत्र दावानलप्लुष्टामनिष्टक्लिष्टविग्रहाम् । D 337
काणां मर्कटिकामस्मै दर्शयित्वावदज्जिनः ॥ ९७ ॥

इमां पश्यसि किं नन्द मान्यनिन्द्यतराकृतिम् ।
कस्मैचिदुचिता चेयं रोचते प्रियदर्शना ॥ ९८ ॥
सत्ता सदसतोर्नास्ति रागः पश्यति रम्यताम् ।
स तस्य ललितो लोके यो यस्य दयितो जनः ॥ ९९ ॥
5 पक्षपातं समुत्सृज्य सत्यं नन्द त्वयोच्यताम् ।
अस्यास्तस्याश्च सुन्दर्या लावण्यस्य किमन्तरम् ॥ १०० ॥
अनर्थित्वाद्वयं नैव सौन्दर्यान्तरवेदिनः ।
अर्थिप्रियत्वमायाति प्रार्थितं तच्च चारुताम् ॥ १०१ ॥
पश्याम्यहं विशेषं तु तस्या नास्याश्च कंचन ।
10 रम्यत्वं मांसचर्मास्थियन्त्रे समयमात्रकम् ॥ १०२ ॥
इति पृष्टो भगवता नन्दस्तं प्रत्यभाषत ।
अत्यन्तानुचितः प्रश्नः कोऽपि गौरवयन्त्रितः ॥ १०३ ॥
किमेतद् भगवान् वक्ति केयं शोके विडम्बना ।
क्वापि वा विश्वगुरवो विनेयाः प्रभविष्णवः ॥ १०४ ॥
339 15 रतिः साधिकसुन्दर्याः परभागेण रज्यते ।
यां दृष्ट्वा जगतां जेता न रतिं स्मरति स्मरः ॥ १०५ ॥
ज्योत्स्नयेव न तत्कान्त्या मोदते कुमुदाकरः ।
गुणान्तरं न जानाति प्रसिद्धिशरणो जनः ॥ १०६ ॥
बद्धं तया वदनसौरभसारहार-
20 मालोक्य पुष्पनिचयं पृथुकेशपाशे ।
मन्ये विलासगतिलोचनकान्तिचौरैः
भीत्येव हंसहरिणैर्वनमेव यातम् ॥ १०७ ॥
अनल्पैः संकल्पैर्बहुविधविकल्पैरनुपमा
न सा सारङ्गाक्षी लिखितुमपि शक्या परिचितैः ।
25 तुलारोहे यस्या वदनपरभागे लघुतरः
स नूनं ताराणां गगनमधिरूढः परिवृढः ॥ १०८ ॥
पुण्यप्रह्वं ललितललितभ्रूलतालास्यलीला-
रम्यं तस्या यदि न वदनं नन्दनं लभ्यते तत् ।
प्रव्रज्येयं सुकृतमधिकं किंकरी किंकरी मे
30 कस्मादेतं व्रतपरिकरं भारभूतं वहामि ॥ १०९ ॥
341 इति नन्दवचः श्रुत्वा भगवान् रागनिर्भरम् ।
उपक्षिप्य प्रभावेण तं निनाय सुरालयम् ॥ ११० ॥

अदर्शयच्च तत्रास्य लीलोद्याने शतक्रतोः ।
सुधामन्थसमुद्भूताः कान्तास्त्रिदशयोषितः ॥ १११ ॥
अरुणैः कान्तिसंतानैः पादपद्मवनोदितैः ।
अनुयाता इवाम्भोधिकूलविद्रुमकाननैः ॥ ११२ ॥
विशाललास्यसचिवैः पाणिभिर्विजिताम्बुजैः । 5
संसक्तैः सहजस्येव पारिजातस्य पल्लवैः ॥ ११३ ॥
कान्तिमाधुर्यललितैर्मदनानन्दबान्धवैः ।
हेलानिमीलिताम्भोजवदनैश्चन्द्रसुन्दरैः ॥ ११४ ॥
संमोहनैर्जीवनैश्च कृष्णसारैर्विलोकनैः ।
कालकूटच्छदस्पृष्टैरमृतौघैरिवावृताः ॥ ११५ ॥ 10
पूर्णयौवनलावण्याः सहसैव विलोक्य ताः ।
नन्दः सानन्दवदनः स्वेदस्नात इवाभवत् ॥ ११६ ॥
पद्माननासु विपुलोत्पललोचनासु
कुन्दस्मितासु निबिडस्तबकस्तनीषु ।
नन्दस्य तासु हृदयं युगपन्निपत्य 15
दोलाविलासतरलालितुलामवाप ॥ ११७ ॥
ततः प्रोवाच भगवान् नन्दं तद्गतमानसम् । D 343
आसां संदर्शने नन्द प्रीत्या ते रमते मतिः ॥ ११८ ॥
आसां तस्याश्च सुन्दर्या लावण्ये कियदन्तरम् ।
उत्कर्षः परभागेण स्फुटमेवाभिभाव्यते ॥ ११९ ॥ 20
निरस्तसुन्दरीरूपं रूपमप्सरसां यदि ।
तदेता एव कालेन करिष्यामि त्वदाश्रयाः ॥ १२० ॥
अरोगेणैव मनसा ब्रह्मचर्यं प्रसन्नधीः ।
चर तावत्ततस्तेऽहं दास्याम्यप्सरसां गणम् ॥ १२१ ॥
एवं भगवतो वाक्यान्नन्दः संजातनिश्चयः । 25
तथेत्युक्त्वा व्रते चेतश्चक्रे स्वर्गाङ्गनाशया ॥ १२२ ॥
मन्दादरः स्वदारेषु सोऽभूत् तत्संगमेच्छया ।
गुणपण्यतुलावृत्तेर्नास्ति स्नेहस्य सत्यता ॥ १२३ ॥
अहो विस्मृतसंवासप्रवासपरिशोषिता ।
पुंसामाभ्यासिकी प्रीतिः सहसान्यत्र धावति ॥ १२४ ॥ 30
क्षणयौवनरम्याणि प्रेमाणि प्रणयव्ययैः ।
न सत्यानि न नित्यानि न सुखानि शरीरिणाम् ॥ १२५ ॥

D 345

ततो भगवता नन्दः क्षणान्नीतः स्वमाश्रमम् ।
तन्निश्चयाद् ब्रह्मचर्यं चचार नियतव्रतः ॥ १२६ ॥
स विसस्मार सुन्दर्याः कान्तिसंपदमन्यधीः ।
क्षणप्रमुषिता प्रीतिर्मलं याति गुणेष्वपि ॥ १२७ ॥
5 ततः कदाचिद्विचरन् नन्दः क्वापि व्यलोकयत् ।
करालनरकासक्तां धीमान् कुम्भीभृतां भुवम् ॥ १२८ ॥
तां विलोक्यैव साकम्पः किमेतदिति दुःखितः ।
स पप्रच्छ तदासक्तान् घोरनरककारणम् ॥ १२९ ॥
ते तमूचुरियं भूमिस्तप्तकुम्भीशताचिता ।
10 कल्पिता राजपुत्रस्य नन्दस्यानन्दरागिणः ॥ १३० ॥
मिथ्याव्रतः स नाद्यापि भजते वीतरागताम् ।
ब्रह्मचर्यं चरत्येव स्वर्गस्त्रीसंगमाशया ॥ १३१ ॥
मिथ्याव्रतानां लुब्धानां रागद्वेषकषायिणाम् ।
एतासु नित्यतप्तासु कुम्भीष्वेवाक्षयः क्षयः ॥ १३२ ॥
15 इति नन्दः समाकर्ण्य जातरोमाञ्चकञ्चुकः ।
तत्र च्युतामिव तनूं पश्चात्तापादमन्यत ॥ १३३ ॥

D 347

समभ्येत्य त्यक्तरागसंवासवासनः स्वयम् ।
बभूवानुत्तरब्रह्मचर्यपर्याप्तसंयमः ॥ १३४ ॥
घनमोहक्षयात्तस्य विमुक्ते संशये ततः ।
20 मनः प्रसादमापेदे शरदीवोदधेः पयः ॥ १३५ ॥
निष्कामः प्रशमं प्राप्तः परां निष्ठामुपागतः ।
शुद्धधीः स समभ्येत्य भगवन्तमभाषत ॥ १३६ ॥
नाप्सरोभिर्न सुन्दर्या भगवन् कृत्यमस्ति मे ।
एताः पर्यन्तविच्छायाः सपाता विषयश्रियः ॥ १३७ ॥
25 यथा यथेयं भावानां भाव्यते निःस्वभावता ।
तथा तथा प्रसीदन्ति निरावरणवृत्तयः ॥ १३८ ॥
इति नन्दस्य वदतः प्राप्तस्यार्तपदं शनैः ।
भगवान् निर्वाणशुद्धामस्य सिद्धिममन्यत ॥ १३९ ॥
केषां कुशलमूलानां नन्देनासादितं फलम् ।
30 इति भिक्षुभिरभ्येत्य पृष्टस्तानवदज्जिनः ॥ १४० ॥
जन्मान्तरार्जितैः पुण्यैः सुकृताभ्यासकारिणा ।
प्राप्ताः कुशलमूलानां नन्देन फलसंपदः ॥ १४१ ॥

D 349

विपुलविमल वंशे जन्म स्मरप्रतिमा तनुः
  सुरजनसखी लक्ष्मी वृत्तिः प्रिया सततं सताम् ।
प्रशमसलिलस्नातं चेतः स्वभावगतिर्गतिः
  कुशलकुसुमस्येयं पुंसां विशालफलोद्गतिः ॥ १४२ ॥
स्तूपे विपश्यिनः सम्यक्संबुद्धस्यादरः पुरा । 5
नगर्यामरुणावत्यामरुणेन महीभुजा ॥ १४३ ॥
क्रियमाणो मणिमये मैत्रो नाम द्विजन्मजः ।
महतः पुण्यभोगस्य भागी कारकतां ययौ ॥ १४४ ॥
तत्पुण्यप्रणिधानेन जातो गृहपतेः कुले ।
स एव भिक्षुसंघस्य जन्तुकास्नानसत्रकृत् ॥ १४५ ॥ 10
स पुण्यशीलः प्रत्येकबुद्धोपस्थायकः पुरा ।
स्तूपं चक्रे शोभमानं मालाभिवरणोज्ज्वलम् ॥ १४६ ॥
तत्पुण्यप्रणिधानेन कृकेः काशीपतेः सुतः ।
सोऽभवद्द्युतिमान् नाम दिव्यलक्षणलक्षितः ॥ १४७ ॥
काश्यपस्यार्हतः सम्यक्संबुद्धस्यान्तनिर्वृतौ । 15
सप्तरत्नमये स्तूपे कृते काशीमहीभुजा ॥ १४८ ॥
तत्सूनुर्द्युतिमान् हैमच्छत्रमारोप्य भास्वरम् ।

D 351

जातस्तत्प्रणिधानेन नन्दः शाक्यकुलेऽधुना ॥ १४९ ॥
इति सुकृतसमुत्थैः पूर्वजन्मक्रमाप्तैः
  किमपि विपुलपुण्यैरेव नन्दः प्रपेदे । 20
कुलममलमुदारं रूपमग्र्यं च भोगं
  शमपरिचितमन्ते सत्पदं सौगतं च ॥ १५० ॥
कथयित्वेति भगवान् नन्दकल्याणकारणम् ।
चकार भिक्षुसंघस्य तां तां सुकृतदेशनाम् ॥ १५१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां 25
सुन्दरीनन्दावदानं नाम दशमः पल्लवः ॥



# ११ विरूढकावदानम् ।

D 253

आरोहति पदमुन्नतममलमतिर्विमलकुशलसोपानैः ।
नरककुहरेषु निपतति मलिनमतिर्घोरतिमिरेषु ॥ १ ॥
शाक्यानां नगरे पूर्वं स्फीते कपिलवास्तुनि ।
5 महतः शाक्यमुख्यस्य सुमुखी दासकन्यका ॥ २ ॥
शास्त्रे कृतश्रमा सर्वकलाकौशलशालिनी ।
मालिका नाम कामस्य मालिकेव गुणोचिता ॥ ३ ॥
प्रभोर्गिरा वरोद्याने कुसुमावचयोद्यता ।
भ्रमन्तं तं समायान्तं ददर्श सुगतं पुरः ॥ ४ ॥
10 तस्यान्तेऽस्यास्तमालोक्य प्रसन्नमभवन्मनः ।
शरत्काल इव स्वच्छः प्रसादयति मानसम् ॥ ५ ॥
साचिन्तयत्तदा लोकप्रीत्या दृढीकृतास्पदा ।
सुकृतैः पिण्डपातं मे गृह्णीयाद्भगवानपि ॥ ६ ॥
विज्ञाय तस्याः सर्वज्ञः संकल्पं करुणाकुलः ।
D 355 15 प्रसार्य पात्रं भगवान् भद्रे देहीत्युवाच ताम् ॥ ७ ॥
दत्वा प्रणम्य सा तस्मै परिपूर्णमनोरथा ।
प्रणिधानं प्रविदधे दास्यदुःखनिवृत्तये ॥ ८ ॥
ततः कदाचिदायातः पितुस्तस्याः सखा द्विजः ।
नैमित्तिकस्तं प्रदेशं दृष्ट्वा तां विस्मितोऽवदत् ॥ ९ ॥
20 अहो गृहपतेस्तस्य पुत्री त्वं श्रीमतः सुता ।
बन्धुहीना गता दास्यं धनभोगविवर्जिता ॥ १० ॥
अहो मोहघनारम्भक्षणोद्द्योतनविद्युतः ।
संसारसर्परसनाविलासचपलाः श्रियः ॥ ११ ॥
गम्यानां मा कृथाश्चिन्तां जानेऽहं हस्तलक्षणैः ।
25 अचिरेणैव भूभर्तुर्वल्लभा त्वं भविष्यसि ॥ १२ ॥
इदं पश्यामि ते पाणौ लक्ष्मीकमलकोमले ।
मालाचक्राङ्कुशाकारमित्युक्त्वा प्रययौ द्विजः ॥ १३ ॥
अथ मन्मथसंभोगसुहृन्मधुपबान्धवः ।
लतालिङ्गनसौभाग्यभव्योऽदृश्यत माधवः ॥ १४ ॥
D 357 30 मधोः केसरिणस्तस्य कान्तामानद्विपद्विषः ।
विबभौ जिह्ममानस्य जिह्वेवाशोकमञ्जरी ॥ १५ ॥

बालाकपोललावण्यचौरश्चम्पकसंचयः ।
सुदृशां केशपाशेषु ययौ बन्धनयोग्यताम् ॥ १६ ॥
सहकारैर्विरहिणीनिधनं विदधे मधुः ।
निरपेक्षापरवधे विधुराः प्रभविष्णवः ॥ १७ ॥
ययुर्मधुलिहां चूतलता निर्भरभोग्यताम् । 5
सहसैव विदग्धानामिव मुग्धविभूतयः ॥ १८ ॥
चूतायुधश्चूतलताचापन्यस्तशिलीमुखः ।
जयतीति जगौ बन्दी कन्दर्पस्येव कोकिलः ॥ १९ ॥
अस्मिन्नवसरे श्रीमान् कोसलेन्द्रः प्रसेनजित् ।
मृगयानिर्गतोऽश्वेन हृतस्तं देशमाययौ ॥ २० ॥ 10
धन्वी मनोभवाकारः सोऽवतीर्य तुरंगमात् ।
ददर्शानन्यलावण्यां कन्यां रतिमिवापराम् ॥ २१ ॥
तद्विलोकनविस्तीर्णं मनस्तस्य महात्मनः ।
विस्मयाद्दृष्टिमार्गेण प्रविवेश मनोभवः ॥ २२ ॥
तां लज्जावनतां दृष्ट्वा सहसोद्भूतसाध्वसाम् । 15 D 359
अचिन्तयन्नरपतिः कान्तिकल्लोलिनीहृतः ॥ २३ ॥
केयं नवा शशिमुखी श्यामा तरलतारका ।
यत्कान्तिरनिशं नेत्रशतपत्रविकाशिनी ॥ २४ ॥
बकुलामोदविभ्रान्तभ्रमरे पाटलाधरे ।
कान्तं वसन्तं पश्यामि मुखेऽस्याः कुसुमायुधम् ॥ २५ ॥ 20
अहो लावण्यमम्लानं तारुण्याभरणं तनोः ।
धीरस्यापि धृतिर्येन शङ्के संगलितेव मे ॥ २६ ॥
अहो नु मधुमञ्जर्याः प्रारम्भेऽप्यद्भुतो गुणः ।
येन गन्तुं न शक्नोति षट्पदोऽपि पदात्पदम् ॥ २७ ॥
इति संचिन्त्य भूपालस्तां मत्वा वनदेवताम् । 25
पृष्ट्वा विवेद तद्वृत्तं क्रमेण कथितं तया ॥ २८ ॥
ततस्तत्र कृतातिथ्यस्तया पल्लववीजनैः ।
शुचिशीतैश्च सलिलैः प्राप्तवान् निर्वृतिं नृपः ॥ २९ ॥
श्रान्तः संवाहने तस्य तया चरणपद्मयोः ।
कृते कराब्जसंस्पर्शे स निद्रां सहसा ययौ ॥ ३० ॥ 30
क्षणेन प्रतिबुद्धोऽथ विश्रान्तमृगयाश्रमः । D 361
दिव्यस्पर्शेन तां मेने रतिं रूपान्तरागताम् ॥ ३१ ॥

महानपि ततः शाक्यः संप्राप्तं कोसलेश्वरम्।
श्रुत्वा तं देशमभ्येत्य पूजार्हं तमपूजयत्॥ ३२॥
सादरेणार्थितां तेन स्वसुतामिव मालिकाम्।
रत्नार्हाय ददौ तस्मै स्मरमङ्गलमालिकाम्॥ ३३॥
5 तामादाय मनोजन्मवैजयन्तीं सितस्मिताम्।
निजं जगाम नगरं गजमारुह्य भूपतिः॥ ३४॥
तस्मिन्नागनगोत्सङ्गे सा लोलालकषट्पदा।
बभौ राजवसन्तेन संगता नवमालिका॥ ३५॥
राजधानीं समासाद्य सुन्दर्या सहितस्तया।
10 रत्नहर्म्यकरोदारमन्दिरे विजहार सः॥ ३६॥
वर्षाकाराभिधा देवी राज्ञः प्रथमवल्लभा।
अभिन्नवृत्तिं तां मेने राजलक्ष्मीमिव क्षितिः॥ ३७॥
दिव्यस्पर्शेन सा तस्याः सा चास्या रूपसंपदा।
परस्परगुणोत्कर्षात्परं विस्मयमापतुः॥ ३८॥
D 363 15 दिव्यरूपवती ज्येष्ठा दिव्यस्पर्शवती परा।
इति प्रवादः साश्चर्यस्तयोर्लोकेषु पप्रथे॥ ३९॥
अत्रान्तरे तयोर्दिव्यरूपसंस्पर्शकारणम्।
आश्रमे भिक्षुभिः पृष्टः प्रोवाच भगवान् जिनः॥ ४०॥
पुरा श्रुतवराख्यस्य द्विजस्य गृहमेधिनः।
20 कान्ता शिरीषिका चेति प्रिये भार्ये बभूवतुः॥ ४१॥
स कदाचिदथो कान्ताभ्राता प्रव्रज्यया शनैः।
प्रत्येकबुद्धतां यातः स्वसुर्भवनमाययौ॥ ४२॥
त्रैमासिकोपचारेण स तया पत्युराज्ञया।
भक्त्या निमन्त्रितस्तस्थौ तत्सपत्न्यात्रपूजितः॥ ४३॥
25 ते चारुमृदुभिर्भोगैस्तमभ्यर्च्यान्यजन्मनि।
जातेऽधुना चारुरूपदिव्यसंस्पर्शसंयुते॥ ४४॥
कृष्टेषु प्रथमं प्रयुक्तविनयामादाय गोसंपदं
सत्क्षेत्रेषु तपः प्रतप्ततनुषु प्राप्तेष्वतिस्वादुताम्।
यत्काले शुभबीजमुप्तमुचितं सत्कर्मशक्तेः परं
30 भुज्यन्ते फलसंपदः सुमतिभिस्तस्यैव पाकोज्ज्वलाः॥ ४५॥
D 365 इति सर्वज्ञवचनं तथ्यमाकर्ण्य भिक्षवः।
तत्तथेति विनिश्चित्य बभूवुः शान्तिसंश्रयाः॥ ४६॥

अथ कालेन भूभर्तुर्मालिकायामभूत्सुतः ।
विरूढकेतिमुख्याख्यो विद्यासु च कृतश्रमः ॥ ४७ ॥
प्रियस्तुल्यवयास्तस्य पुरोहितसुतोऽभवत् ।
मातुर्दुःखेन जातत्वाद्विश्रुतो दुःखमातृकः ॥ ४८ ॥
कदाचित् सहितस्तेन हयारूढो विरूढकः । 5
प्राप शाक्यवरोद्यानं मृगयायां विनिर्गतः ॥ ४९ ॥
न्यक्कारं चक्रिरे तत्र शाक्यास्तस्योद्यतायुधाः ।
अयं दासीसुतोऽस्माकमिति दर्पप्रवादिनः ॥ ५० ॥
गत्वासौ स्वपुरं तेषां वैरं दर्प्यमचिन्तयत् ।
कुलदर्पापवादो हि शल्यतोदः शरीरिणाम् ॥ ५१ ॥ 10
तस्य निर्दह्यमानस्य तत्प्रतीकारचिन्तया ।
राज्याय जाता जनके जीवत्यपि परा स्पृहा ॥ ५२ ॥
स चारायणमुख्यानां मन्त्रिणां शतपञ्चकम् ।
स्ववशं पितुराकृष्य विदधे भेदयुक्तिभिः ॥ ५३ ॥
ततः कदाचित्संजातविवेकः पृथिवीपतिः । 15 D 36
धर्मोपदेशश्रवणे वर्धमानादरः परम् ॥ ५४ ॥
चारायणगृहीताश्वं रथमारुह्य संयतः ।
द्रष्टुं जगाम सर्वज्ञं भगवन्तं प्रसेनजित् ॥ ५५ ॥
प्राप्याश्रमं भगवतः कृत्वा पादाभिवन्दनम् ।
धर्मान्वयं स शुश्राव तत्प्रसादप्रसन्नधीः ॥ ५६ ॥ 20
चारायणोऽप्याशु गत्वा रथेन नगरं जवात् ।
अकरोदन्तरे तस्मिन् राजपुत्राभिषेचनम् ॥ ५७ ॥
भगवन्तमथामन्त्र्य नृपतिर्गन्तुमुद्यतः ।
ददर्श नानुगानग्रे न रथं न च मन्त्रिणम् ॥ ५८ ॥
स पद्भ्यामेव शनकैः प्रस्थितो पृथिवीपतिः । 25
दूरादपश्यदायान्तीं वर्षाकारां समालिकाम् ॥ ५९ ॥
ते पृष्ट्वा तद्गिरा ज्ञात्वा सोऽभिषिक्तं विरूढकम् ।
विससर्ज सुतैश्वर्यपरिभोगाय मालिकाम् ॥ ६० ॥
वर्षाकारां समादाय स मित्रस्य महीपतेः ।
अजातशत्रोर्नगरं प्राप राजगृहाभिधम् ॥ ६१ ॥ 30
स तप्तश्छत्रविरहात् क्षुत्पिपासाश्रमान्वितः । D 3
ययौ वमन्निव श्वासं दीर्घैश्चामरमारुतैः ॥ ६२ ॥

सुखमस्खलितं केन प्राप्तं कस्यायुरायतम्।
न कस्यानुपदं दृष्टः क्षयः सपदि संपदः॥ ६३॥
स जीर्णमूलकं भुक्त्वा कर्ममूलमिवायतम्।
क्षणं पीत्वा च पानीयं पपातात्तविषूचिकः॥ ६४॥
5 अनित्यतामविज्ञाय मोहाय पतते जनः।
स चापायनिकायस्य कायस्योपायतृष्णया॥ ६५॥
अजातशत्रुः श्रुत्वैव कोसलेश्वरमागतम्।
अभ्येत्य पांशुपूर्णास्यं विगतासुं ददर्श तम्॥ ६६॥
तस्य जायानुयातस्य स कृत्वा देहसत्क्रियाम्।
10 भगवन्तं ययौ द्रष्टुं सुगतं दुःखशान्तये॥ ६७॥
स तं प्रणम्य प्रोवाच भगवन् कोसलेश्वरः।
पुरं मे सुहृदः प्राप्य निर्धनो निधनं गतः॥ ६८॥
धिग्वामसंपदं पापं मोहाद्यशसः पदम्।
विभवो येन नैवायं मित्रोपकरणीकृतः॥ ६९॥
D 371 15 हृदये विनिवेश्याशां प्राप्तः सुहृदमापदि।
सुहृन्नैष्फल्यमायाति यस्य किं तेन जीवता॥ ७०॥
मित्रोपकरणं लक्ष्मीर्दीनोपकरणं धनम्।
भीतोपकरणं प्राणा येषां तेषां सुजीवितम्॥ ७१॥
कुकर्म किं कृतं तेन भगवन् पूर्वजन्मनि।
20 यस्य पाकेन पर्यन्ते प्रपेदे सोऽतिदुर्दशाम्॥ ७२॥
इति पृष्टः क्षितीशेन भगवान् साश्रुचक्षुषा।
तमूचे तापशमनीं दिशन् दशनचन्द्रिकाम्॥ ७३॥
मा शुचः पृथिवीपाल स्वभावोऽयं भवस्थितः।
एवंविधैव भावानामसत्यानामनित्यता॥ ७४॥
25 विसारिसंसारवनान्तरेऽस्मिन्
निसर्गलोलः किल कालभृङ्गः।
स्वच्छन्दजातजनपुष्करजीवपुञ्ज-
किञ्जल्कपुञ्जमनिशं कवलीकरोति॥ ७५॥
तरङ्गन्तो भोगाश्चकितहरिणीलोचनचलाः
30 क्षणेऽलक्ष्या लक्ष्मीर्जनजलदविद्योतनतडित्।
शरीराब्जे बालातपचपलरागं नववयः
क्षयं याति क्षिप्रं भवमरुतटे जीवितकणः॥ ७६॥

D 373

मनो मैत्रीपात्रं परहितरतिर्धर्मधनता
मदोद्भेदच्छेदक्षमशमविचारे परिचयः ।
अयं तत्त्वान्वेषो विषयसुखवैमुख्यसुखिना-
मसारे संसारे परिहृतविकारः परिभवः ॥ ७७ ॥
जनः शोचति दुःखेषु क्षिप्रं हत इवास्मना ।    5
न करोति पुनस्तीव्रतदापातप्रतिक्रियाम् ॥ ७८ ॥
पश्यतोऽपि भवायासं निर्विवेकस्य सर्वथा ।
क्रियते किं जनस्यास्य मोहादकुशलस्पृशः ॥ ७९ ॥
पुरा विप्रः सुशर्माख्यः कुतश्चित्प्राप्य मूलकम् ।
निधाय जननीहस्ते ययौ स्नातुं नदीतटम् ॥ ८० ॥    10
सापि प्रत्येकबुद्धाय तां प्राप्ताय तदन्तरे ।
प्रणता पात्रहस्ताय तदेवाभिमुखी ददौ ॥ ८१ ॥
अथ स्नात्वा समायातस्तत्सुतस्त्वरितं क्षुधा ।
जननीं भोजनारम्भे ययाचे निजमूलकम् ॥ ८२ ॥
पुण्यं पुत्रानुमोदस्व तन्मयातिथयेऽर्पितम् ।    15
इति मातुर्वचः श्रुत्वा सोऽभूद्विद्ध इवेषुणा ॥ ८३ ॥
सद्यो विषूचिकार्तस्य मन्मूलकमनल्पकम् ।    D 375
कुक्षिं भित्त्वा विनिर्यातु प्राणैः सह तवातिथेः ॥ ८४ ॥
इति तस्याप्तपापस्य वाक्पारुष्येण भूयसा ।
विसूचिकैव पर्यन्ते बभूवापरजन्मनि ॥ ८५ ॥    20
प्राक्पुण्यान्तरपाकेन स एवाद्य प्रसेनजित् ।
विपुलं राज्यमासाद्य तयैवान्ते क्षयं गतः ॥ ८६ ॥
संसारपथपान्थानामेवं कर्म शुभाशुभम् ।
पाथेयमिव हस्तस्थं भोगायैवोपपद्यते ॥ ८७ ॥
इति श्रुत्वा भगवतस्तथ्यं पथ्यं च तद्वचः ।    25
एवमेतदिति ध्यात्वा तं प्रणम्य ययौ नृपः ॥ ८८ ॥
अत्रान्तरे प्राप्तराज्यः शाक्यवैरं विरूढकः ।
पुरोहितसुतेनैत्य स्मारितस्तत्क्षयोद्यतः ॥ ८९ ॥
प्रययौ शाक्यनगरं गजाश्वरथरेणुना ।
मोहेनेव दिशां कुर्वन् निर्विवेकं धियामिव ॥ ९० ॥    30
सर्वज्ञो भगवान् ज्ञात्वा तस्य तद्दुष्टचेष्टितम् ।
गत्वा शाक्यपुरोपान्ते तस्थौ शुष्कतरोरधः ॥ ९१ ॥

D 377

दूरात्तत्र स्थितं दृष्ट्वा तमागच्छन् विरूढकः ।
अवतीर्य रथादग्रमभ्येत्य प्रणतोऽवदत् ॥ ९२ ॥

सत्सु स्निग्धपलाशेषु घनच्छायेषु शाखिषु ।
भगवन्नत्र विश्रान्तिः किमु शुष्कतरोरधः ॥ ९३ ॥

5 इत्युक्तः क्षितिपालेन तं प्राह भगवान् जिनः ।
ज्ञातिच्छाया नरपते चन्दनादपि शीतला ॥ ९४ ॥

नास्ति ज्ञातिसमं वित्तं नास्ति ज्ञातिसमा धृतिः ।
नास्ति ज्ञातिसमा छाया नास्ति ज्ञातिसमः प्रियः ॥ ९५ ॥

ममैते भूपते शाक्या ज्ञातयस्तत्पुरान्तिके ।
10 जातः प्रियोऽयं तत्प्रीत्या शुष्कशाखोऽपि पादपः ॥ ९६ ॥

श्रुत्वैतद्विरतामर्षः शाक्यानां पक्षपातिनम् ।
भगवन्तं विदित्वैव न्यवर्तत विरूढकः ॥ ९७ ॥

भगवानपि शाक्यानां ज्ञात्वागामि भयं ततः ।
श्रेयसे शुद्धसत्त्वानां विदधे धर्मदेशनाम् ॥ ९८ ॥

D 379 15 स्रोतापत्तिफलं केश्चित् सकृदागामि चापरैः ।
अनागामिफलं चान्यैः संप्राप्तं तस्य शासनात् ॥ ९९ ॥

शेषास्तु मूढमतयः शाक्याः प्रापुर्न तत्पदम् ।
सन्ति केऽपि खगा येषां वासरे तिमिरोद्भवः ॥ १०० ॥

निवृत्तस्याथ नृपतेः पुरोहितसुतस्ततः ।
20 वैरसर्पस्य सुप्तस्य विदधे प्रतिबोधनम् ॥ १०१ ॥

स तेन प्रेरितश्चक्रे मतिं शाक्यकुलक्षये ।
वैरानलं प्रचलनं करोति पिशुनानिलः ॥ १०२ ॥

घोरदुर्जनमन्त्रेण सहसोत्थापिताः खलाः ।
वेतालाः क्षितिपालाश्च न कस्य प्राणहारिणः ॥ १०३ ॥

25 सैन्ये गजरथोदग्रे ततस्तस्मिन् प्रसर्पति ।
बभूव पुरसंक्षोभः शाक्यानां रुद्धवर्त्मनाम् ॥ १०४ ॥

तस्मिन् भगवान् रक्षार्थं शाक्यानां पक्षपातिनम् ।
समुद्यतं तत्र महामौद्गल्यायनमब्रवीत् ॥ १०५ ॥

शाक्यानां कर्मदोषोऽयं सर्वथा समुपस्थितः ।
30 तत्र रक्षाविधानं ते गगने सेतुबन्धनम् ॥ १०६ ॥

पुंसामचिन्त्यविभवानि शुभाशुभानि
आयान्ति यान्ति च मुहुर्निरवग्रहाणि ।
कर्माक्षराणि निजजन्मपदस्वहस्त-
न्यस्तानि नाम न भवन्ति निरर्थकानि ॥ १०७ ॥ D 382
इति वाक्याद्भगवतस्तस्मिन् याते प्रणम्य तम् । 5
चक्रिरे संविदं शाक्याः प्रत्यासन्ने विरूढके ॥ १०८ ॥
हिंसास्माभिर्न कर्तव्या प्राणिमात्रस्य कस्यचित् ।
शराः शरीरमस्माकं विशन्त्वरिसमीरिताः ॥ १०९ ॥
इति संविदमाधाय ते वियष्टिकपाणयः ।
धीराः परोद्यमे तस्थुरवारयितकार्मुकाः ॥ ११० ॥ 10
अत्रान्तरे कर्मयोगान्निजदेशानवस्थितः ।
अज्ञात्वा संविदं शाक्यः शंपाकः समुपाययौ ॥ १११ ॥
स दृष्ट्वा नगरे बद्धसंनाहं वसुधाधिपम् ।
कोपादेकश्चकारास्य रणे सुभटसंक्षयम् ॥ ११२ ॥
युद्धे पुरुषसिंहेन हतास्ते वीरकुञ्जराः । 15
प्रययुः स्पृहणीयत्वं यशोभिर्मौक्तिकैरिव ॥ ११३ ॥
स कोऽपि तस्य जज्वाल कोपितस्य परैरसिः ।
स ययौ यत्प्रतापेन विपुलां रिपुवाहिनीम् ॥ ११४ ॥
प्रवेशं न ददुः शाक्याः शंपाकस्य द्विषां वधात् ।
स्वजनोऽपि परित्यक्तः स तैर्निस्त्रिंशकर्मणा ॥ ११५ ॥ 20
निजेऽपि विमुखाः क्रूरे साधवो धर्मबन्धवः ।
धनादपि वदान्यत्वं सुकृतं स्वजनादपि ॥ ११६ ॥ D 383

* * *

शतमौचित्यनित्यानामायुषोऽपि यशः प्रियम् ॥ ११७ ॥
निर्वासितः स तैः प्राप्तः शनैर्भगवतोऽन्तिकम् । 25
ययाचेऽभ्युदयायैव तं किंचिन्निजलाञ्छनम् ॥ ११८ ॥
ऋद्धं भगवता दत्तं निजकेशनखांशकम् ।
स जगाम समादाय वाकुडं नाम मण्डलम् ॥ ११९ ॥
तत्र प्रज्ञाप्रभावेण शौर्योत्साहगुणेन च ।
स प्राप राज्यं धीराणां सर्वत्र सुलभाः श्रियः ॥ १२० ॥ 30
दक्षाणां लक्षणं लक्ष्मीः सहजं विदुषां यशः ।
व्यवसायसहायानां कलत्रं सर्वसिद्धयः ॥ १२१ ॥

तत्र स्थितो भगवतः सोऽथ केशनखांशके ।
स्तूपप्रतिष्ठामकरोद्वररत्नविराजिताम् ॥ १२२ ॥
विरूढकोऽपि शाक्यानां वैरपारतितीर्षया ।
पुनर्युक्त्या पुरद्वारभेदेन सहसाविशत् ॥ १२३ ॥
D 385 5 हत्वा तत्र सहस्राणि शाक्यानां सप्तसप्तति ।
बद्ध्वा कन्याकुमाराणां स सहस्रमथाहरत् ॥ १२४ ॥
शतानि पञ्च शाक्यानां गजैर्लोहैश्च मर्दनैः ।
संप्रमृज्य पुरीं चक्रे कृतान्तनगरीमिव ॥ १२५ ॥
भगवानपि शाक्यानां शत्रुणा भेदनं कृतम् ।
10 कर्मानुबद्धं विज्ञाय बभूव विमनाः क्षणम् ॥ १२६ ॥
पप्रच्छुस्तं समभ्येत्य भिक्षवः करुणाकुलाः ।
किं कर्म विहितं शाक्यैर्घोरं यस्येदृशं फलम् ॥ १२७ ॥
भगवानिति तैः पृष्टः सर्वज्ञस्तानभाषत ।
निजकर्मविपाकेन शाक्यानामेष संक्षयः ॥ १२८ ॥
15 कृष्टौ पुरा महामत्स्यौ धीवरैः सरितोऽन्तरात् ।
तदा निकृत्तौ शल्येन भूयोऽप्यव्यथयन् धृतौ ॥ १२९ ॥
कालेन चारुतां यातैस्तैरेव परजन्मनि ।
हतौ गृहपती दग्ध्वा तावेव धनहारिभिः ॥ १३० ॥
तौ मत्स्यौ तौ गृहस्थौ च विरूढकपुरोहितौ ।
20 दासानां तस्कराणां च शाक्यानां मृत्युतां गतौ ॥ १३१ ॥
D 387 इति श्रुत्वा भगवतः कर्मणां फलसंततिम् ।
अविसंवादिनीमेव मेनिरे सर्वभिक्षवः ॥ १३२ ॥
विरूढकोऽथ स्वपुरं प्राप्य विजयदुर्मदः ।
जेतानाम्ना सुतेनोक्तः प्रणयाद्बाललीलया ॥ १३३ ॥
25 देव किं निहताः शाक्या न तेऽस्माकं कृतागसः ।
इति ब्रुवाणमवधीन्निजसूनुं विरूढकः ॥ १३४ ॥
निपातमतिमूढानि निहन्ति न करोति किम् ।
मदलब्धवधायासो मातंग इव दुर्जनः ॥ १३५ ॥
स जगाद सभासीनः स्वभुजाववलोकयन् ।
30 अहो नु मम तापाग्नौ द्विषद्भिः शलभायितम् ॥ १३६ ॥
कृतान्ततोरणस्तम्भौ प्राज्यौ मम भुजाविमौ ।
निःशेषवधदीक्षायां शाक्यानां गुरुतां गतौ ॥ १३७ ॥

तं तस्य विक्रमं श्लाघ्यं हतास्ताः शाक्यकन्यकाः ।
श्रुत्वा बभाषिरे तीव्रमुद्वेगनमिताननाः ॥ १३८ ॥

कर्मपाशनिबद्धानां खगानामिव देहिनाम् ।
निधनोल्लङ्घने शक्तिर्नास्ति पक्षवतामपि ॥ १३९ ॥

येनाग्निः शममेति तत्किल जलं प्राप्नोत्यलं वाडवः
तिग्मांशुग्रहणं करोति समये हेलावलेह्यं तमः ।
पर्यालोचनवर्त्मनामविषयं साश्चर्यचर्यास्पदं
सर्वं कार्मिकतन्त्रयन्त्रितमिदं कः कस्य कर्तुं क्षमः ॥ १४० ॥ 5 D 389

एतदाकर्ण्य नृपतिः पदान्तर इवोरगः ।
करच्छेदं दिदेशासां घोरामर्षविषोत्कटः ॥ १४१ ॥ 10

तीरे यस्याः कृतं तासां पाणिच्छेदनवैशसम् ।
साद्यापि हस्तगभति ख्याता पुष्करिणी भुवि ॥ १४२ ॥

लतास्वपि कुकूलाग्निं क्रकचं नलिनीष्वपि ।
मालास्वपि शिलावर्षं पातयन्त्येव निर्घृणाः ॥ १४३ ॥

तास्छिन्नपाणिकमलास्तत्र तीव्रव्यथातुराः ।
भगवन्तं धिया ध्यात्वा शरणं शरणं ययुः ॥ १४४ ॥ 15

तासां विज्ञाय सर्वज्ञस्तीव्रां मर्माहतिव्यथाम् ।
शचीमचिन्तयद्देवीं तत्समाश्वासनोचिताम् ॥ १४५ ॥

तत्स्पर्शजातहस्ताब्जास्ता दिव्यवसनावृताः ।
ययुश्चित्तप्रसादेन ताः स्वर्गं त्यक्तविग्रहाः ॥ १४६ ॥ 20

देवकल्पास्तमासाद्य दिव्यपद्मोत्पलाङ्किताः ।
धर्मदेशनया शास्तुस्ताः प्रापुर्विपुलं पदम् ॥ १४७ ॥ D 391

भिक्षुभिर्भगवान् पृष्टस्तत्कर्मफलमभ्यधात् ।
पाणिचापल्यमेताभिः कृतं भिक्षुविडम्बने ॥ १४८ ॥

कर्मणस्तस्य पाकेन विशसे पतिताः परम् ।
मयि चित्तप्रसादेन प्राप्ताश्चैताः शुभां गतिम् ॥ १४९ ॥ 25

इत्युक्त्वा भगवान् कर्मफलपाकविचित्रताम् ।
भिक्षूणां तत्प्रसङ्गेन विदधे धर्मदेशनाम् ॥ १५० ॥

अत्रान्तरे गूढचारी राज्ञा प्रणिहितश्चरः ।
भगवच्चरितं ज्ञात्वा विरूढकमुपाययौ ॥ १५१ ॥ 30

सोऽवदद्देव भिक्षूणां तेनेदं कथितं पुरः।
स्वकर्मफलमासन्नं तस्य पश्यामि भूपतेः॥ १५२॥

सप्ताहेनाग्निना दग्धः स पापात्मा पुरोहितः।
अवीचिनाम्नि नरके दुःसहे निपतिष्यति॥ १५३॥

5 इति तद्वचनं श्रुत्वा नृपतिः सपुरोहितः।
यत्नादुवास सप्ताहं जलान्वितगृहान्तरे॥ १५४॥

D 393 क्षणावशेषे सप्ताहे तस्मिन्नन्तःपुरं गते।
सूर्यकान्तार्कसंतापयोगाज्जज्वाल पावकः॥ १५५॥

उद्भूतेन प्रलयसवनावर्तिनेवाशु वेगा-
10 न्निर्दग्धोऽसौ धगिति शिखिना नारकं प्राप वह्निम्।
अस्मिँल्लोके ज्वलनजटिलाः पापिनां प्रेत्य रागाः
सर्वत्रैव स्थिरसुखभुवः शीतलाः पुण्यभाजाम्॥ १५६॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
विरूढकावदानं नाम एकादशः पल्लवः॥



# १२ हारीतिकादमनावदानम् ।

D 395

दुःखं नुदन्ति सुखसंपदमादिशन्ति
संजीवयन्ति जनतां तिमिरं हरन्ति ।
सन्मानसस्य कलयन्ति विकासहासं
सन्तः सुधार्द्रवदनाः शशिनः कराश्च ॥ १ ॥

5

बिम्बिसारः क्षितेः सारे पुरे राजगृहाभिधे ।
सारः समस्तभूपानामभूद्भूमिपुरंदरः ॥ २ ॥
क्षमाधारे भुजे यस्य क्षमाधारे च चेतसि ।
बाह्यः समस्तचित्तानामाशु न्यस्तकरो जनः ॥ ३ ॥
कुर्वतस्त्यागशौर्याभ्यामाशायाः परिपूरणम् ।
पाणौ विमुक्तरत्नौघे सुबद्धोऽभूदसिग्रहः ॥ ४ ॥

10

कदाचिदभवत्तस्य विप्लवो नगरे गुरुः ।
नवाभ्युदयसंजातदर्पकाल इवाकुलः ॥ ५ ॥
तमास्थानसमासीनं जनचिन्ताकृतक्षणम् ।
व्यजिज्ञिपत सौराजं प्रजानां जनकोपमम् ॥ ६ ॥

D 397

15

देव दिव्यप्रभावस्य नियतः शासनेन ते ।
जनः सदा समुद्रोऽयं मर्यादां नातिवर्तते ॥ ७ ॥
येनास्य कृतवृत्तस्य सन्मार्गेण प्रसर्पतः ।
उपसर्गोद्गमः कस्मादकस्मादयमागतः ॥ ८ ॥
स्वधर्मसंवृत्तेन हि कर्मणा शर्मणा नृणाम् ।
सुनृपे न च गुह्यानामापतन्ति विपत्तयः ॥ ९ ॥

20

ह्रियन्ते नः प्रसूतीनां गृहिणीनां गृहे कया ।
अपत्यानि फलानीव सत्क्रियाणामसंयमात् ॥ १० ॥
किं तु भूतान्न विद्मस्तान् मायां चापि महीपते ।
यत्प्रभावेण नीयन्ते कुलानि निरपत्यताम् ॥ ११ ॥

25

इति तेषां गिरा भूभृद्भूत्संक्रान्ततद्व्यथः ।
परं दुःखं विशल्यन्तः सतां केदारवारिवत् ॥ १२ ॥
सर्वाङ्गव्यापिना तेन जनदुःखेन भूयसा ।
विषेणेवावृतः सोऽभूदुद्भ्रान्तहृदयः क्षणम् ॥ १३ ॥
सोऽब्रवीत् किं करोम्यत्राभुजाधीने विपौरुषे ।
कथं नाम प्रवर्तन्ते दुर्लक्ष्येषु प्रतिक्रियाः ॥ १४ ॥

30 D 399

दिनमेकं व्रजन्त्वद्य भवन्तो निजमास्पदम् ।
सव्रतश्चिन्तयाम्येव रक्षां वः प्रसवक्षये ॥ १५ ॥

इति राजवचः श्रुत्वा हृष्टाः पौरमहत्तमाः ।
जगदुस्तं समावर्ज्य पूजाव्यञ्जनमञ्जलिम् ॥ १६ ॥
देव त्वदवधानेन प्रणयाकर्णनेन च ।
त्वयि विन्यस्तचिन्तानां नास्माकमधुना श्रमः ॥ १७ ॥
5 अनुद्धतमुदारं च त्वत्प्रसादावलोकनम् ।
इदमेव जनस्यास्य जीवितानीव वर्षति ॥ १८ ॥
किं पुनः प्रियमेतत्ते पीयूषसदृशं वचः ।
तापापहं मृदु स्वादु किं किं न विदधाति नः ॥ १९ ॥
कृती कृतज्ञः कारुण्यनिधिः सुलभदर्शनः ।
10 लभ्यते भाग्यभोग्येन सौजन्यसरलः प्रभुः ॥ २० ॥
पीयूषादतिपेशलः परिचयः श्राव्यं वचः पञ्चम-
माचारः शरदिन्दुवृन्दमहसोऽस्यानन्दसंदोहदः ।
सच्चित्ते वसतां सतां किमपरं पुष्पान्मनः कोमलं
सौजन्यं हरिचन्दनादपि परं संतापनिर्वापणम् ॥ २१ ॥
D 401 15 इत्युक्त्वा प्रययुः पौरास्तं प्रणम्य प्रसादिनम् ।
किरन्तस्तद्गुणोदारामाशाकुसुममालिकाम् ॥ २२ ॥
राजापि नगरे कृत्वा भूतपूजाविधिक्रमम् ।
शान्तिस्वस्तिकसंभारं चकार नियतव्रतः ॥ २३ ॥
यक्षी हारीतिका नाम बालकान् पुरवासिनी ।
20 हरतीति स शुश्राव पुरदेवतयोदितम् ॥ २४ ॥
ततः पौरजनैः सार्धं सामात्यः पृथिवीपतिः ।
कलन्दकनिवासाख्ये स्थितं वेणुवनाश्रमे ॥ २५ ॥
भगवन्तं ययौ द्रष्टुं सुगतं दोषशान्तये ।
सर्वदुःखज्वरायासजुपामकटुकौपधम् ॥ २६ ॥
25 तं दृष्ट्वा नृपतिर्दूरात्प्रणम्य प्रियदर्शनम् ।
उपविश्याग्रतस्तस्मै पौरदुःखं न्यवेदयत् ॥ २७ ॥
भगवानपि विज्ञाय पौराणां संततिक्षयम् ।
चिन्तानिश्चञ्चलः क्षिप्रमुवाच करुणानिधिः ॥ २८ ॥
स विसृज्य जगद्बन्धुः सनृपं पौरमण्डलम् ।
30 पात्रचीवरमादाय ययौ यक्षीनिकेतनम् ॥ २९ ॥
D 403 तया विरहितं प्राप्य तद्गृहं भगवान् जिनः ।
प्रियंकराख्यं तत्पुत्रं निनायैकमदर्शनम् ॥ ३० ॥

याते भगवति क्षिप्रं यक्षी स्वगृहमागता।
प्रभूतपुत्रा नापश्यत् प्रियं पुत्रं प्रियंकरम्॥ ३१॥
तमीक्षमाणा विवशा हृतवत्सेव धेनुका।
बभ्राम संभ्रमोद्भ्रान्ता सा जनेषु वनेषु च॥ ३२॥
हा प्रियंकर हा पुत्र क्व नु पश्यामि ते मुखम्। 5
इति प्रलापिनी तारं निःशेषाः सा ययौ दिशः॥ ३३॥
सा विचित्याशु सर्वाशा निराशा पुत्रदर्शने।
क्रोशन्ती पर्वतद्वीपं समुद्रवलयं ययौ॥ ३४॥
मर्त्यभूमिमतिक्रम्य घोरेषु नगरेषु सा।
स्वर्गोद्देशेष्वशेषेषु विमानोद्यानशालिषु॥ ३५॥ 10
श्रान्ता क्वचिन्न विश्रान्ता यक्षिणी प्राणिघातिनी।
पुत्रमन्विष्य नापश्यल्लोकपालपुरेषु च॥ ३६॥
कुबेरस्याथ वचसा गत्वा च सुगताश्रमम्।
भगवन्तं वियोगार्ता शरण्यं शरणं ययौ॥ ३७॥
तया तद्दुःखवृत्तान्तं स निशम्य निवेदितम्। 15 D 405
तामवोचत शोचन्तीं किंचित् स्मितसिताधरः॥ ३८॥
हारीति तव पुत्राणां सन्ति पञ्चशतान्यहो।
इति तेनोक्तमाकर्ण्य यक्षी दुःखक्षतावदत्॥ ३९॥
पुत्रलक्षेऽपि भगवन् सह्या नैकसुतक्षतिः।
पुत्रात् प्रियतरं नान्यत्किं दुःखं तत्क्षयात्परम्॥ ४०॥ 20
पुत्रवानेव जानाति पुत्रस्नेहविषव्यथाम्।
सहजैव सुतप्रीतिरकारणनिबन्धना॥ ४१॥

* * * *

मलिनो विकलः क्षीणः कस्य नेन्दुसमः सुतः॥ ४२॥
इति यक्षवधूवाक्यं श्रुत्वा वात्सल्यविह्वलम्। 25
भूतानुकम्पी भगवान् सस्मितस्तामभाषत॥ ४३॥
शोकोऽयं बहुपुत्राया यद्येकविरहे तव।
हृते त्वयैकवत्सानां पुत्रैके कीदृशी व्यथा॥ ४४॥
त्वं प्रविश्य सदा गेहं स्त्रीणां पुत्रमलक्षिता।
अश्नासि पुत्रमातापि व्याघ्रीव मृगशावकान्॥ ४५॥ 30
येन येन स्वदेहस्य दुःखं यात्युपभोगताम्। D 407
न तत्परस्य कुर्वीत समानोऽनुभवः शुचाम्॥ ४६॥

त्वं बुद्धधर्मसंघानां त्रीणि शिक्षापदानि चेत्।
गृह्णासि हिंसाविमुखी तत्प्राप्नोषि प्रियं सुतम्॥ ४७॥
इत्युक्ता सा भगवता प्राप्तशिक्षापदा ततः।
हिंसाविरामात् तं गत्वा पुत्रं प्राप प्रियंकरम्॥ ४८॥
5 तस्याः प्राग्जन्मवृत्तान्तं तस्याः कर्मफलान्वयम्।
भिक्षुभिर्भगवान् पृष्टस्तद्वृत्तान्तमभाषत॥ ४९॥
पुरास्मिन्नेव नगरे पौराः केऽप्युपभोगिनः।
पर्वतोद्यानमालायां विजह्रुर्नर्तनादिना॥ ५०॥
अथ तेन पथा कापि गोपकान्ता घनस्तनी।
10 मथितं पण्यमादाय हरिणाक्षी समाययौ॥ ५१॥
गर्भभारालसगतिः प्रत्युप्ता गजगामिनी।
सा शनैरुपसर्पन्ती सस्पृहं तान् व्यलोकयत्॥ ५२॥
तस्या वनमृगीमुग्धैरवदग्धा विलोकनैः।
असंवृत्ता विलासार्द्रैस्तेऽपि सोत्कण्ठतां ययुः॥ ५३॥
D 409 15 सा तैर्निमन्त्रिता तत्र मदनक्षीबतां गता।
हारितं सहसा शीलं न विवेद प्रमादिनी॥ ५४॥
ततस्तेषु प्रयातेषु तदा तस्या रतिश्रमात्।
पपात सह धैर्येण गर्भः कोपादिवारुणः॥ ५५॥
अत्रान्तरे समायातं तत्पुण्यैस्तेन वर्त्मना।
20 प्रत्येकबुद्धं साद्राक्षीत्कायचित्तप्रसादनम्॥ ५६॥
सास्मै मथितमूल्याप्तमाम्राणां शतपञ्चकम्।
दूरात्प्रणामविनता मनसैव न्यवेदयत्॥ ५७॥
ततः पुण्यार्द्धिमत्यस्मिन् जाता यक्षकुलेऽधुना।
जातमात्रार्पणेनास्याः पुत्राणां शतपञ्चकम्॥ ५८॥
25 हिंसावती पापत्यागात् शीलविस्मरणात्परम्।
प्रत्येकबुद्धप्रणतेः प्राप्तशिक्षापदाद्य सा॥ ५९॥

इति विविधविपाकं कर्मतन्त्रं विचित्रं
किमपि स कथयित्वा तत्र यक्षाङ्गनायाः।
कलितकुशलसेतुः संभवाब्धौ जनाना-
30 मकृत सुकृतचित्तं सर्वलोकस्य शास्ता॥ ६०॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
हारीतिकादमनावदानं नाम द्वादशः पल्लवः॥

# १३ प्रातिहार्यावदानम् ।



य: संकल्पपथा सदैव चरति प्रोज्जृम्भमाणाद्भुतं
स्वप्नैर्यस्य न संगतिः परिचयो यस्मिन्नपूर्वक्रमः ।
वाणी मौनवती च यत्र हि नृणां यः श्रोत्रनेत्रातिथि-
स्तं निर्व्याजजनप्रभावविभवं मानैरमेयं नुमः ॥ १ ॥ 5

पुरे राजगृहाभिख्ये बिम्बिसारेण भूभुजा ।
पूज्यमानं जिनं दृष्ट्वा स्थितं वेणुवनाश्रमे ॥ २ ॥
मात्सर्यविषसंतप्ता मूर्खाः सर्वज्ञमानिनः ।
न सेहिरे तदुत्कर्षं प्रकाशमिव कौशिकाः ॥ ३ ॥
मलिनैः स्वविनाशाय परभागोदितैः सदा । 10
क्रियते वासरस्पर्धा शार्वरैस्तिमिरोत्करैः ॥ ४ ॥
मस्करी संजयी वैरैरजितः ककुदस्तथा ।
पूरणज्ञातिपुत्राद्या मूर्खाः क्षपणकाः परे ॥ ५ ॥
ऊचुर्नृपतिमभ्येत्य मारमायाविमोहिताः । D 413
संघर्षद्वेषदोषेण धूमेनेवान्धकारिताः ॥ ६ ॥ 15
एष सर्वज्ञतामानी वने यः श्रमणः स्थितः ।
ऋद्धिप्रभावो भवता तस्यास्माकं च दृश्यताम् ॥ ७ ॥
ऋद्धिप्रभावाद्यत्किंचित् जनव्यावर्जनोर्जितम् ।
दर्श्यते महदाश्चर्यं प्रातिहार्यं तदुच्यते ॥ ८ ॥
शक्तिः संसदि यस्यास्ति प्रतिहार्यस्य दर्शने । 20
अस्माकं तस्य वा राजन् पूजाः सन्तु जगत्त्रये ॥ ९ ॥
इति तेषां वचः श्रुत्वा तद्दर्पविमुखो नृपः ।
उवाच वाञ्छा केयं वः पङ्गूनां गिरिलङ्घने ॥ १० ॥
असमञ्जसमेवैतत् का स्पर्धाग्नेः पतङ्गकैः ।
नैतद्वाच्यं पुनर्वादी मया निष्कास्यते पुरात् ॥ ११ ॥ 25
इति राज्ञा गुणज्ञेन प्रत्याख्यातोद्यमाः खलाः ।
प्रययुस्ते निरालम्बे लम्बमाना इवाम्बरे ॥ १२ ॥
बिम्बिसारो नरपतिर्मूर्खतापक्षपातवान् ।
अन्यं व्रजामो भूपालमिति ते समचिन्तयन् ॥ १३ ॥ 30
अत्रान्तरे भगवति श्रावस्तीमभितः पुरीम् । D 415
प्राप्ते जेतवनारामं दिगन्तानेव ते ययुः ॥ १४ ॥

ते प्रसेनजितं तत्र प्राप्य कोसलभूपतिम् ।
प्रातिहार्यकृतस्पर्धां तामेवास्मै न्यवेदयन् ॥ १५ ॥
गुणान्तरज्ञो नृपतिस्तेषां दर्पक्षयेच्छया ।
ऋद्धिसंदर्शनोत्साहाद्ययौ भगवतोऽन्तिकम् ॥ १६ ॥
5 स समभ्येत्य विनयात् प्रणिपत्य तमब्रवीत् ।
भगवन् दर्पदलनं तीर्थ्यानां कर्तुमर्हसि ॥ १७ ॥
ऋद्धिस्पर्धानुबन्धेन त्वत्प्रभावदिदृक्षया ।
स्वगुणश्लाघयास्माकं तैः कर्णौ बधिरीकृतौ ॥ १८ ॥
प्रकाशय निजं तेजः सज्जनावर्जनं विभो ।
10 तीर्थ्याभिधानामखिलं प्रयातु प्रलयं तमः ॥ १९ ॥
इति राजवचः श्रुत्वा निर्विकारो महाशयः ।
भगवान् विरतामर्षः सहर्षस्तमभाषत ॥ २० ॥
राजन्नान्योपमर्दाय विवादाय मदाय वा ।
विवेकाभरणार्होऽयं क्रियते गुणसंग्रहः ॥ २१ ॥
D 417 15 मात्सर्यमलिनैः किं तैर्विचारविगुणैर्गुणैः ।
ये हरन्ति परोत्कर्षं स्पर्धाबन्धप्रसारिताः ॥ २२ ॥
गुणाच्छादनमन्यस्य स्वगुणेन करोति यः ।
धर्मस्तेनाप्रशस्तेन स्वयमेव निघातितः ॥ २३ ॥
सद्गुणानां परीक्षैव परवैलक्ष्यकारिणी ।
20 उचिता न हि शुद्धानां तुलारोहविडम्बना ॥ २४ ॥
गुणवानपि नायाति यः परेषु प्रसन्नताम् ।
स दीपहस्तस्तत्पात्रच्छायया मलिनीकृतः ॥ २५ ॥
लोक त एव सर्वज्ञा विज्ञाः किमधिकं वयम् ।
पराभिमानाभिभवप्रागल्भ्यं स्वपराभवः ॥ २६ ॥
25 इति श्रुत्वा भगवतः प्रशमाभिमतं वचः ।
भृशमभ्यर्थनां राजा चकाराश्चर्यदर्शने ॥ २७ ॥
ततः कृच्छ्राद्भगवता कृताभ्युपगमो नृपः ।
राजधानीं ययौ हृष्टः सप्ताहावधिसंविदा ॥ २८ ॥
अस्मिन्नवसरे भ्राता भूमिभर्तुरसोदरः ।
30 चचारान्तःपुरोपान्ते प्रासादतलवर्त्मना ॥ २९ ॥
D 419 सलीलं व्रजतस्तस्य कर्मवातैरिवेरिता ।
कुसुमस्रक् पपातांसे राजपत्नीकराच्च्युता ॥ ३० ॥

तस्य विज्ञातदोषस्य दोषं संभाव्य साक्षिभिः।
पिशुनाः किंवदन्तीं तां चक्रिरे राजगामिनीम्॥ ३१॥
छिद्रमल्पमपि प्राप्य क्षुद्राः सर्वापकारिणः।
द्विजिह्वाः प्रविशन्त्याशु प्रभूनां शून्यमाशयम्॥ ३२॥
पिशुनप्रेरितो राजा भ्रातुरीर्ष्याविषोल्बणः। 5
छेदमस्यादिदेशाशु पाणिपादस्य मूर्च्छितः॥ ३३॥
निकृत्तपाणिचरणः कुमारः कर्मविप्लवात्।
स वध्यवसुधाशायी विवेश विषमापदम्॥ ३४॥
तीव्रव्यथापरिवृतं शोचद्भिर्मातृबन्धुभिः।
ददृशुस्तं क्षपणकाः क्षणं नयनचालने॥ ३५॥ 10
तान् समभ्येत्य शोकार्तास्ते राजसुतबान्धवाः।
जगदुस्तत्परित्राणसंलिप्ताः सर्वप्राणिनः॥ ३६॥
अदोषं निगृहीतोऽयं कालनामा नृपात्मजः।
सर्वज्ञवादिनो यूयं प्रसादोऽस्य विधीयताम्॥ ३७॥
इति तैः प्रसरद्बाष्पैरर्थ्यमानाः प्रलापिभिः। 15 D 421
ते मौनिनो निष्प्रतिभा वैलक्ष्यादन्यतो ययुः॥ ३८॥
अथ तेन यथायातो भिक्षुः सुगतशासनात्।
आनन्दो विदधेऽङ्गानि तस्य सत्योपयाचनात्॥ ३९॥
राजपुत्रस्तु संजातपाणिपादः प्रसन्नधीः।
जिनं शरणमभ्येत्य तदुपस्थायकोऽभवत्॥ ४०॥ 20
सप्तरात्रे व्यतीतेऽथ प्रातिहार्यं गृहं महत्।
ऋद्धिं भगवतो द्रष्टुं महीपतिरकारयत्॥ ४१॥
उपविष्टे नृपे तत्र सह क्षपणकादिभिः।
कल्पवृक्षीकृता भूमिरभवत् सुगतेच्छया॥ ४२॥
ततः प्राप्तेषु देवेषु द्रष्टुं भगवतः प्रभाम्। 25
रत्नप्रदीपं भगवान् भेजे सिंहासनं महत्॥ ४३॥
तेजोधातुं प्रपन्नस्य तस्य गण्डसमुद्गतैः।
व्याप्तं पावकसंघातैरभूद्भुवनमण्डलम्॥ ४४॥
शान्ते शनैः कमलकाननसंनिकाशे
वह्नौ समस्तभुवनस्थितिभङ्गभीत्या। 30
देहात्ततो भगवतः करुणाम्बुराशेः
पूर्णामृतोर्मिविमला रुचयः प्रसस्रुः॥ ४५॥
लावण्यसारमतिचन्द्रसहस्रकान्ति D 423
तेजःप्रतानविफलीकृतसूर्यचक्रम्।

तं नागनायकनिकायविलोचनानि
प्रीत्या पपुः सुकृतलब्धमपूर्वहर्षम् ॥ ४६ ॥
वैदूर्यनालविपुलारुणरत्नपात्र-
कान्तोल्लसत्कनककेसरकर्णिकानि ।
5 अभ्युद्ययुः क्षितितलादथ तत्समीपे
पद्मानि सौरभभराहृतषट्पदानि ॥ ४७ ॥
तेषूपविष्टमथ काञ्चनचारुकान्तिं
स्निग्धेक्षणं सुगतचक्रमदृश्यताराात् ।
पीयूषपेशलशशिद्युतिशीतलेन
10 यस्योदयेन सहसा सुखमाप लोकः ॥ ४८ ॥
तेषां प्रभावविभवं भगवान् बभार
मध्येऽधिकं कनकशैल इवाचलानाम् ।
सुस्कन्धबन्धुरघनद्युतिसंनिवेशः
प्रांशुः सुरक्षितिरुहामिव पारिजातः ॥ ४९ ॥
D 425 15 स्वर्गाङ्गनाकरकुशेशयकीर्यमाणै-
रम्लानमाल्यवलयैः कलितोत्तमाङ्गाः ।
तस्याननाम्बुजविलोकननिर्निमेषे
मर्त्या अपि क्षणमवापुरमर्त्यभावम् ॥ ५० ॥
व्योमाङ्गणेषु सुरदुन्दुभिशङ्खतूर्य-
20 घोषावृतः कुसुमवर्षमहाट्टहासः ।
गन्धर्वकिन्नरमुनीश्वरचारणानां
स्फीतश्चचार भगवत्स्तुतिवादनादः ॥ ५१ ॥
तत्रारुणाधरदलाद्दशनांशुशुभ्राद्
व्याकीर्णकेसरकुलाद्दशनारविन्दात् ।
25 सत्सौरभं भगवतः स्वरसंनिवृत्तं
धन्याः पपुर्मधुरवाङ्मधु पुण्यसृतम् ॥ ५२ ॥
पापं विमुञ्चत निषिञ्चत पुण्यबीजं
वैरं परित्यजत साम्यसुखं भजध्वम् ।
ज्ञानामृतं पिबत मृत्युविषापहारि
30 नेयं तनुः कुशलकर्मसखी चिराय ॥ ५३ ॥
D 427 लक्ष्मीश्चला तरुणता च जरानुयाता
कायोऽप्यपायनिचयस्य निवास एव ।
प्राणाः शरीरककुटीषु मुहूर्तपान्था
नित्योदये कुरुत धर्ममये प्रयत्नम् ॥ ५४ ॥

इत्यादिभिर्भगवतः प्रविभक्तदीप्त-
ज्ञानैर्विवेकविमलैः कुशलोपदेशैः ।
वज्रैरिवाशु दलनं प्रययौ जनानां
सत्कायदृष्टिसमविंशतिशृङ्गशैलः ॥ ५५ ॥
ऋद्धिप्रभां भगवतः प्रविभाव्य तीर्थ्या 5
मन्त्राहता विषधरा इव भग्नदर्पाः ।
दीपा इवार्ककिरणप्रतिभाभिभूता-
श्चित्रार्पिता इव ययुश्चिरनिश्चलत्वम् ॥ ५६ ॥
अत्रान्तरे भगवतः सततं विपक्षः
सर्वात्मना क्षपणको नवधर्मयक्षः । 10
क्षिप्तश्रवान् स वृतवर्पवरैश्चकार
विद्राव्य रन्ध्रशरणान् भुवि वज्रपाणिः ॥ ५७ ॥
उद्दिश्य तानथ कृपार्द्रभयाशरण्यः D 429
सर्वोपदेशविषयान् भगवान् बभाषे ।
भूभृद्वनावनिमणिर्विवरादि सर्वं 15
तेने भयेषु शरणं किल कातराणाम् ॥ ५८ ॥
बुद्धिं प्रबोध मम धाम्नि निधाय बुद्धं
धर्मं ससंघमपि ये शरणं प्रपन्नाः ।
तेषां जगत्क्षयभयेष्वपि निर्भयाणां
नैवान्यतः शरणदैन्यपरिग्रहोऽस्ति ॥ ५९ ॥ 20
दुर्वारे परलोकतीव्रतिमिरे धर्मः प्रवृद्धोंऽशुमान्
दानं दुःसहपापतापविपदामभ्युद्गमे वारिदः ।
प्रज्ञा मोहमहाप्रपातविषमश्वभ्रे करालम्बनं
दैन्याक्रान्तमहीनमेव शरणं सर्वत्र पुण्यं नृणाम् ॥ ६० ॥
इति तिमिरवृताक्ष्णां चक्षुरुन्मीलनार्हं 25
दशनमणिमरीचिव्यज्यमानप्रकाशम् ।
सदसि सुगतचन्द्रः शुद्धधर्मोपदेशं
स्थिरपदमिव कृत्वा काननं स्वं जगाम ॥ ६१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
प्रातिहार्यावदानं नाम त्रयोदशः पल्लवः ॥ 30

---

# १४ देवावतारावदानम् ।

D 431

जयति महतां प्रभावः पश्चादग्रे च वर्तमानो यः ।
जनकुशलकर्मसरणिः प्रकाशरत्नदीपो वः ॥ १ ॥
पुरा सुरपुरे पाण्डुकम्बलाख्ये शिलातले ।
समीपे पारिजातस्य कोविदारस्य सुप्रभे ॥ २ ॥ 5
कृत्वा त्रिदशसंघानां भगवान् धर्मदेशनाम् ।
अनुग्रहाय मर्त्यानां जम्बूद्वीपमवातरत् ॥ ३ ॥
अमरैरनुयातस्य तस्यावतरतो भुवम् ।
विमानकाननाकीर्णं बभूव भुवनाङ्गणम् ॥ ४ ॥
तस्य दन्तांशुसंतानैरुपदेशमिवाचितम् । 10
जग्राह चन्द्ररुचिरं चामरं चतुराननः ॥ ५ ॥

D 433

छत्रं शतशलाकाङ्कमनङ्कं रङ्कुपाण्डुरम् ।
प्रसादमिव साकारमाददेऽस्य पुरंदरः ॥ ६ ॥
संकाश्यनगरोपान्ते काननोदुम्बरान्तिके ।
अवतीर्णं सुकृतिनः सानन्दास्तं ववन्दिरे ॥ ७ ॥ 15
तस्मिन्नुत्पलवर्णाख्या भिक्षुकी जनसंगमे ।
अलब्धावसरा द्रष्टुं नृपरूपमुपाददे ॥ ८ ॥
प्रदीप्तरत्नमुकुटं गण्डताण्डविकुण्डलम् ।
दृष्ट्वैवास्य नवं रूपं जहासोष्णीषपल्लवः ॥ ९ ॥
सा चिन्तयन्ती को वायं जनैर्निर्विवरः पुरः । 20
अन्तरं नृपरूपं मे दृष्ट्वा दास्यति सादरः ॥ १० ॥
अतोऽन्यथा तु भगवत्प्रणतिर्मम दुर्लभा ।
न गुणं गौरवस्थानमैश्वर्यप्रणयी जनः ॥ ११ ॥
अहो तृणतुलालोलैर्निःसारविरसैर्धनैः ।
ह्रियते वासनाभ्यासान्निर्विचारतया जनः ॥ १२ ॥ 25
दत्तान्तरा सा सहसा जनेन नृपगौरवात् ।
लोलहारं भगवतः प्रणाममकरोत् पुरः ॥ १३ ॥
अस्मिन्नवसरे भिक्षुरुदयी नाम संसदि ।

D 435

तां विलोक्य तथारूपामवदत् सस्मिताननः ॥ १४ ॥
इयमुत्पलवर्णाख्या भिक्षुकी नृपरूपिणी । 30
ऋद्ध्या भगवतः पादौ वन्दते जनवन्दिता ॥ १५ ॥

उत्पलामोदवर्णाभ्यां विज्ञातेयं मया पुरा।
इत्युक्त्वा विरते तस्मिन् भगवानप्यभाषत ॥ १६ ॥
अयुक्तमेव भिक्षुक्या दर्पोद्धिप्रकाशनम्।
करोति प्रशमग्लानिमभिमानेन च ज्वरः ॥ १७ ॥
इत्युक्त्वा भगवान् कृत्वा तां तां शुभ्रोपदेशनाम्। 5
विसृज्य देवान् प्रययौ स्वपदं सह भिक्षुभिः ॥ १८ ॥
तत्रोपविष्टः पृष्टस्तैः प्रणतैर्भिक्षुकीकथाम्।
प्राग्जन्मकर्मसंबद्धां सर्वज्ञस्तानभाषत ॥ १९ ॥
वाराणस्यामभूत्पूर्वं सार्थवाहो महाधनः।
पत्नी धनवती नाम तस्य प्राणसमाभवत् ॥ २० ॥ 10
पाणिपल्लविनी तन्वी यौवनोद्यानमञ्जरी।
फलपुष्पवती काले सा तस्माद्गर्भमादधे ॥ २१ ॥
अत्रान्तरे जलनिधिद्वीपानुगमनोद्यतम्। D 437
प्रत्यासन्नवियोगार्ता सा वल्लभमभाषत ॥ २२ ॥
कियती धनसंपत्तिर्वृद्धिमद्यापि नीयते। 15
यत्कृते घोरगम्भीरस्तीर्यते मकराकरः ॥ २३ ॥
बह्वपायं धनादानं निरपायं गुणार्जनम्।
स्वदेशात् परदेशं हि गच्छन्ति द्रविणार्थिनः ॥ २४ ॥
केचिद्दुःखान्निवर्तन्ते दूरं गत्वापि निष्फलाः।
निश्चला धनिनश्चान्ये कर्मणामेष निश्चयः ॥ २५ ॥ 20
इति प्रियावचः श्रुत्वा सार्थवाहस्ततोऽभ्यधात्।
मुग्धे संभावनापात्रो भवत्येवं धनोद्यतः ॥ २६ ॥
धनार्जनविहीनानां पङ्गुवन्मूलभक्षणात्।
अद्य श्वो वा सुखस्थानां भोगैः सह परिक्षयः ॥ २७ ॥
स्वगृहेऽपि दरिद्राणां जनः क्रकचनिष्ठुरः। 25
धनिनां परलोकोऽपि प्रेमस्निग्धजनं भुवः ॥ २८ ॥
क्षीणमप्युद्यतं वृद्ध्यै न वेणुं बन्धते जनः।
न तु स पूर्णतां याति प्रत्यासन्नपरिक्षयः ॥ २९ ॥
मूर्खोऽपि विदुषां वन्द्यः स्त्रीणां वृद्धोऽपि वल्लभः। D 439
क्लीबोऽपि सेव्यः शूराणामासन्नाभ्युदयो जनः ॥ ३० ॥ 30
केनान्यकरणं भुक्त्वा पीत्वा काव्यामृतानि वा।
क्षणं विचक्षणेनापि क्षुत्पिपासे विवर्जिते ॥ ३१ ॥

यस्यार्थः स गुणोन्नतैः कृतनुतिः कं वा न धत्ते गुणं
दारिद्र्योदयदोषदूषितरुचां निर्माल्यतुल्या गुणाः।
वित्तेनैव गुणा गुणी न तु धनी धन्यो धनी नो गुणी
कायाद्दुष्कृतसंनिपातशमनादायुर्गुणानां धनम्॥ ३२॥
5 इति प्राणाधिकार्थस्य पत्युराकर्ण्य सा वचः।
साञ्जनाश्रुकणोत्कीर्णा लतेवाभूतषट्पदा॥ ३३॥
अथ प्रवहणं भेजे सार्थनाथस्तया सह।
तीव्रतृष्णागृहीतानां हस्तपात्रं महोदधिः॥ ३४॥
तस्य जायासखस्यासौ कर्मवातानुवर्तिनः।
10 अभज्यत प्रवहणं समनोरथजीवितम्॥ ३५॥
ततः फलकमासाद्य भागशेषाच्च कर्मणः।
कशेरुद्वीपमासाद्य तत्पतिर्विपदं गतः॥ ३६॥
D 441 अनाथां तत्र शोचन्तीं विहङ्गः पुरुषाकृतिः।
तामाप पाददीर्णाशां सुवर्णकुलसंभवः॥ ३७॥
15 स कान्तां सुमुखो नाम तामुवाच रुचाकृतः।
समाश्वसिहि लोलाक्षि निर्भयोऽयं तवाश्रयः॥ ३८॥
दिव्येयं सुभगा भूमिर्वयं त्वत्प्रणयैषिणः।
पुण्यायातासि कल्याणि घोरोऽयं मकराकरः॥ ३९॥
इत्युक्त्वा तेन शनकैर्नीता रत्नालयं गृहम्।
20 संपूर्णगर्भा तनयं चारुरूपमसूत सा॥ ४०॥
वर्धमाने शिशौ तस्मिन् सा शनैः प्रियवादिना।
मुग्धा तेन विदग्धेन संभोगाभिमुखीकृता॥ ४१॥
सरलत्वान्मृदुत्वाच्च समीपप्रणयी जनः।
स्वयमालिङ्ग्यते स्त्रीभिर्लताभिरिव पादपः॥ ४२॥
25 दिव्योद्यानेषु सा तेन रममाणा घनस्तनी।
कुमारं रुचिराकारं सुषुवे सदृशं पितुः॥ ४३॥
तस्मिन् पद्ममुखाभिख्ये यौवनालंकृताकृतौ।
सुमुखः पक्षिणां राजा काले लोकान्तरं ययौ॥ ४४॥
D 443 ततः पद्ममुखः श्रीमानाससाद पदं पितुः।
30 गुणिनामविवादेन स्वाधीनाः कुलसंपदः॥ ४५॥
प्राप्तैश्वर्यं तमवदद्द्विजने जननी सुतम्।
तत्प्रभावस्य संभाव्य सर्वत्र प्रभविष्णुताम्॥ ४६॥

पुत्र प्राप्ता त्वया लक्ष्मीरियं निजकुलोचिता।
अयं तु सार्थवाहान्मे जातः पुत्रो निरंशकः ॥ ४७ ॥
वाराणस्यामयं राजा स्वशक्त्या क्रियतां त्वया।
प्रीतिसंवादसास्वादः स्वदेशे सेव संपदः ॥ ४८ ॥
इति मातुर्गिरा पक्षी पक्षपातेन भूयसा। 5
स्कन्धे भ्रातरमारोप्य व्योम्ना वाराणसीं ययौ ॥ ४९ ॥
तत्र सिंहासनासीनं ब्रह्मदत्तं महीपतिम्।
संजघानैकदैनं स वज्राग्रनखरैः खरैः ॥ ५० ॥
अभिषिच्याग्रजं पूर्णं तस्मिन्नेव नृपासने।
अमात्यान् सोऽवदद्भीतान् समग्रानग्रविक्रमः ॥ ५१ ॥ 10
यस्य राज्ञोऽभिषिक्तस्य मया यः प्रचलीकरः [?]।
सोऽप्यतीतः प्रभो भक्त्या तमेवानुगमिष्यति ॥ ५२ ॥
इत्युक्त्वा प्रवरामात्यान् स्वैरं विहगपुंगवः। D 445
ययौ भ्रातरमामन्त्र्य पुनर्देशनसंविदा ॥ ५३ ॥
स एव ब्रह्मदत्तोऽयमिति मन्त्रित मन्त्रिणाम् (?)। 15
स नृपः ख्यातिमायातः स्वजनेषु परेषु च ॥ ५४ ॥
अत्रान्तरे समानीता सगर्भा हस्तिनी वनात्।
न मुमोचार्धनिर्यातगर्भं रुद्धमिवान्तरे ॥ ५५ ॥
साध्वीकराग्रसंस्पर्शादियं गर्भं विमुञ्चति।
इति मौहूर्तिकादिष्टं राज्ञे मन्त्री न्यवेदयत् ॥ ५६ ॥ 20
शासनादथ भूभर्तुः स्पृष्ट्वा हस्तेन हस्तिनीम्।
अन्तःपुराङ्गनाश्चक्रुस्तत्र सत्योपयाचनम् ॥ ५७ ॥
तासां सत्यगिरा गर्भं नात्यजत् करिणी यदा।
तदा विलक्ष्यः सर्वोऽभूत् भूपस्यान्तःपुरे जनः ॥ ५८ ॥
अथ गोपाङ्गनाभ्येत्य शीलसत्योपयाचनम्। 25
कृत्वा पस्पर्श करिणीं येनासौ गर्भमत्यजत् ॥ ५९ ॥
राजापि निजजायानां ज्ञात्वा शीलदरिद्रताम्।
मेने गोपां मनःस्वेव तां जगत्रितये सतीम् ॥ ६० ॥
स सतीजातिलोभेन सोशुम्बां नाम तत्सुताम्। D 447
परिणीयानिनायाग्रे देवीशब्दस्य पात्रताम् ॥ ६१ ॥ 30
तस्याः संचिन्त्य लावण्यं चपलत्वं च योषिताम्।
स सर्वगामिनीं निद्रामपि तत्याज शङ्कितः ॥ ६२ ॥

अस्मिन्नवसरे द्रष्टुं भ्रातरं विहगाधिपः ।
ययौ पद्ममुखस्तत्र स्नेहादतिशयोत्सुकः ॥ ६३ ॥
भूपालोऽपि तमालिङ्ग्य प्रीत्या विहितसत्कृतिः ।
विजने स्वकथामस्मै निवेद्य पुनरब्रवीत् ॥ ६४ ॥
5 शीलसत्यतुलारोहात् दृष्टदोषेण योषिताम् ।
ममान्तःपुरवैमुख्यात् विवाहोऽभिनवः कृतः ॥ ६५ ॥
रूपयौवनगामिन्यां तस्यामपि न मे धृतिः ।
एकत्र दृष्टदोषाणां सर्वत्राशङ्कते मनः ॥ ६६ ॥
तस्मात्तव पुरे भ्रातर्विमानुष्ये निधीयताम् ।
10 शीलशङ्कां परित्यज्य भवामि विगतज्वरः ॥ ६७ ॥
तस्मात् प्रतिनिशं पक्षी शासनात् तव मद्गृहम् ।
प्रापयिष्यति तां स्वैरमित्ययं मे मनोरथः ॥ ६८ ॥
149 इति भ्रातुर्वचः श्रुत्वा तमुवाच विहङ्गमः ।
ईर्ष्याशङ्काकलङ्केन राजन् मिथ्यैव मा कृथाः ॥ ६९ ॥
15 न नाम रमते रम्ये नास्वादं वेत्ति भोजने ।
न पश्यति न निद्राति नित्यमीर्ष्यावशातुरः ॥ ७० ॥
क्लीबः कामी सुखी विद्वान् धनी नम्रः प्रभुः क्षमी ।
अर्थी मान्यः खलः स्निग्धः स्त्री सतीति कथैव का ॥ ७१ ॥
सरलत्वेऽपि कुटिलाः स्थायिन्योऽप्यतिचञ्चलाः ।
20 कुलीना अपि पार्श्वस्थमालिङ्गन्त्यबला लताः ॥ ७२ ॥
दृष्टिर्लोलाधरो रागी भ्रूर्वक्रा कठिनौ स्तनौ ।
दृश्यते नैव निर्दोषः स्त्रीणामवयवेष्वपि ॥ ७३ ॥
भुज्यन्ते कुशलैः श्यामा भ्रमद्भ्रमरविभ्रमैः ।
मूलान्वेषी सरोजिन्याः पङ्केनैवावलिप्यत ॥ ७४ ॥
25 नैकस्मिन् विस्मयभुवां सस्मितानां नियन्त्रिते ।
शुचिशीलविरामाणां रामाणां रमणे मतिः ॥ ७५ ॥
तथापि यदि निर्बन्धः क्रियतां यदभीप्सितम् ।
प्रत्यहं मत्पुरोद्याने निर्जने सा निधीयताम् ॥ ७६ ॥
151 इत्युक्तः पक्षिणा भ्राता नृपतिर्विससर्ज ताम् ।
30 कान्तां कशेरुकद्वीपे तं च सत्कृत्य सादरः ॥ ७७ ॥
सापि प्रतिनिशं व्योम्नः खगारूढा समाययौ ।
दिव्यगन्धमयीं मालामादाय द्वीपसंभवाम् ॥ ७८ ॥

पारिजातान्वयतरोस्तानि पुष्पाण्यवाप सा।
ख्यातानि तिमिराणीव भ्रमद्भृङ्गान्धकारतः ॥ ७९ ॥

अथ वाराणसीवासी कदाचिन्मानवाभिधः।
प्रययौ समिधाहारी द्विजन्मा काननं युवा ॥ ८० ॥

तत्र किन्नरकामिन्या स दृष्टः स्पष्टमन्मथः। 5
यस्य संदर्शनेनैव साभवद्विस्मृतस्मृतिः ॥ ८१ ॥

असौ नवाभिलाषेण जनकेनेव सार्पिता।
कान्ता कान्तिमयी नाम विजहार गुहागृहे ॥ ८२ ॥

तत्राभरणरत्नांशुः प्रतीनतिमिरोत्करे।
रममाणा चिरं तेन काले पुत्रमवाप सा ॥ ८३ ॥ 10

बलवान् मरुदुद्भवः स बाल्येऽपि यदा शिशुः।
तदा माता तस्य संज्ञां शीघ्रग इत्यसाधयत् ॥ ८४ ॥

सापि निविघ्नसंभोगा सुखातृप्ता गुहान्तरे। D 453
प्रियं धृत्वा सदा याति पिधाय शिलया गृहम् ॥ ८५ ॥

कदाचिदथ वृत्तान्तं निजपित्रा निवेदितम्। 15
आकर्ण्य शीघ्रगश्चिन्ताविस्मयाकुलितोऽवदत् ॥ ८६ ॥

शिलानिबद्धद्वारेऽस्मिन्नन्धस्यैव गृहान्तरे।
अहो स्नेहोऽप्ययं तात तव बन्धनतां गतः ॥ ८७ ॥

एहि वाराणसीमेव गच्छावस्ते निजास्पदम्।
विपुलामप्ययत्नेन शिलामुत्सारयाम्यहम् ॥ ८८ ॥ 20

स्वदेशविरहक्लेशं दुःसहं सहसे कथम्।
त्यक्तुं न शक्यते कैश्चिद्देशो देह इव स्वकः ॥ ८९ ॥

भारं द्रविणसंभारं वेत्ति ग्रन्थिगुणागुणः।
भोगं निरुपभोगं च स्वदेशविरही जनः ॥ ९० ॥

इत्युक्त्वा स गुहागेहादुत्पाट्य विपुलां शिलाम्। 25
कृताभ्युपगमेनाशु जनकेन ययौ सह ॥ ९१ ॥

प्रयातयोस्ततस्तूर्णं समभ्येत्याथ किन्नरी।
शून्यं दृष्ट्वा गुहागेहं निर्वेदादित्यचिन्तयत् ॥ ९२ ॥

अहो मे विस्मृतस्नेहः स गतः क्वापि दुर्जनः। D 455
द्विजिह्वानां भुजंगानां कौटिल्यं वा किमद्भुतम् ॥ ९३ ॥ 30

न रमन्ते पलायन्ते पर्यन्ते सुखरागिणः ।
चिरस्था अपि निःस्नेहाः शुका इव द्विजातयः ॥ ९४ ॥

इति संचिन्त्य सा पत्युर्निकारात्प्रीतिमत्यजत् ।
पुष्पोपमानि प्रेमाणि न सहन्ते कदर्थनाम् ॥ ९५ ॥

5 विद्यागुणेन केनासौ पुत्रो मे भुवि जीवति ।
इति ध्यात्वा सखीहस्ते तस्मै वीणां दिदेश सा ॥ ९६ ॥

संभोगसुखपण्यैव प्रीतिः पतिषु योषिताम् ।
अपर्युषितवात्सल्या पुत्रप्रीतिस्तु निश्चला ॥ ९७ ॥

जवेन व्रजतोस्तूर्णं तयोर्दौर्जन्यलज्जया ।
10 शीघ्रगाय ददौ वीणां तत्सखी वेगगामिनी ॥ ९८ ॥

आद्या तन्त्रिरियं नास्याः स्प्रष्टव्या विघ्नकारिणी ।
इत्याभाष्य तया दत्तां वीणां प्राप्य जगाम सः ॥ ९९ ॥

ततः स्वदेशे जनकं स्वगृहे विनिवेश्य सः ।
वीणाप्रवीणः सर्वत्र लाभपूजामवाप्तवान् ॥ १०० ॥

D 457 15 ततः कदाचिद्वणिजा अम्बुधिद्वीपगामिना ।
आरोपितः प्रवहणं दिव्यवीणानुरागिणा ॥ १०१ ॥

वीणामूर्च्छनया तस्य श्रोत्रपीयूषधारया ।
क्षणे क्षणे समुद्रोऽपि निस्तरङ्ग इवाभवत् ॥ १०२ ॥

अथाद्यतन्त्रिसंस्पर्शादुत्पन्नोपप्लवोत्प्लुते ।
20 भग्ने प्रवहणे सर्ववणिजामभवत् क्षयः ॥ १०३ ॥

ततो बलाहकावाप्या पवनप्रेरितः क्षणात् ।
कशेरुद्वीपमासेदे कर्मशेषेण शीघ्रगः ॥ १०४ ॥

तत्राब्धिकूलसंलीनं दिव्योद्यानं प्रविश्य सः ।
श्यामां ददर्श सोऽशुम्बां मूर्धन्यस्तबकस्तनाम् ॥ १०५ ॥

25 ग्रथ्नन्तीं तिमिराख्यानां पुष्पाणामुज्ज्वलस्रजम् ।
निबन्धनं तनुगुणैः कुर्वाणामप्यचेतसाम् ॥ १०६ ॥

सापि तं रुचिराकारं दृष्ट्वा विस्मयमाययौ ।
धीरं शैशवतारुण्यसंधिमध्यस्थतां गतम् ॥ १०७ ॥

मारमारुतसंचालसकम्पकरपल्लवा ।
30 सा शीर्णशीलकुसुमा लतेव प्रणनाम तम् ॥ १०८ ॥

चिरारूढेव सहसा प्रीतिः प्रौढा तयोरभूत्। D 459
प्राग्जन्मस्नेहसंलीनं न मुञ्चति मनो मनः ॥ १०९ ॥

रममाणा दिवा तेन निशायां च महीभुजा।
मेने वामाचरिततां तां प्रियो गूढकामुकः ॥ ११० ॥

तेन वाराणसीं गन्तुं ज्ञात्वा वृत्तं समर्थिता। 5
तन्निनाय खगारूढा तद्गिरा मीलितेक्षणम् ॥ १११ ॥

वारितोऽपि तदा व्योम्नि नयनोन्मीलने तया।
सोऽभवत्सहसैवान्धश्चापलाद्विवृतेक्षणः ॥ ११२ ॥

सा तमन्तःपुरोद्याने निधाय भयकातरा।
विवेश शोकसंतप्ता शय्यावेश्म महीपतेः ॥ ११३ ॥ 10

दूयमानेन मनसा रजनीमतिवाह्य ताम्।
प्रातर्न गन्तुं न स्थातुं चिन्ताक्रान्ता शशाक सा ॥ ११४ ॥

अत्रान्तरे समुद्भूतश्च्युतसौरभनिर्भरः।
मधुमासो विलासानां यौवनं पुष्पधन्वनः ॥ ११५ ॥

कोकिलालिकुलैः कालः कालः कालो वियोगिनाम्। 15
शीर्णशोकनवाशोकदुःसहः प्रतिदृश्यते ॥ ११६ ॥

राजाप्यविरतौत्सुक्यादुद्यानं गन्तुमुद्यतः। D 461
दिनमेकं न तत्याज सोशुम्बां काममोहितः ॥ ११७ ॥

स तया सह रागस्य मदस्य मदनस्य च।
संसारमिव विश्रान्तिपदपुष्पवनं ययौ ॥ ११८ ॥ 20

तत्र बालानिलालोलतावैलक्ष्यकारिणीम्।
पश्यन् प्रमोदमासेदे दयितामेव भूपतिः ॥ ११९ ॥

अन्यरागविषाक्रान्ता साप्यभून्मलिनस्मृतिः।
सुखमप्यसुखं वेत्ति चिन्ताशल्याकुलं मनः ॥ १२० ॥

अन्तर्गतभुजंगाभिः स्त्रीभिरत्यन्तरागिणः। 25
कण्ठे कृताभिर्नृत्यन्ति मालाभिरिव मोहिताः ॥ १२१ ॥

तत्रैकान्तलताकुञ्जनिकुञ्जनिहितस्थितिः।
अन्धः सौरभमाघ्राय सोशुम्बातिमिरस्रजः ॥ १२२ ॥

सहसैव विकारेण रागाद्विस्मृतसंवृतिः।
अगायन्मदनक्षीबा गणयन्ति भयं कुतः ॥ १२३ ॥ 30

तनुपवनविलासैः कीर्यमाणः प्रियायाः
समदवदनपद्मामोदसंभारसारः।
463 तिमिरकुसुमगन्धः सोऽयमायाति दूरात्
भ्रमरसरणिवीणाविभ्रमारावरम्यः॥ १२४॥

5 श्रुत्वा हृदयसंवादगीतं तत्तस्य भूपतिः।
उद्यानविचयं कृत्वा तं ददर्श लतान्तरे॥ १२५॥

गाढरोचमदक्षीबं स तं पप्रच्छ शङ्कितः।
अपि जानासि सोशुम्बां तस्य वा लक्षणं तनोः॥ १२६॥

सोऽब्रवीत् किं न जानामि सोशुम्बां बिम्बपाटलाम्।
10 उपविष्टोऽधरे यस्या रागराज्ये मनोभवः॥ १२७॥

न्यस्तं स्मरेणेव तदूरुमूले
लेखामयं स्वस्तिकमस्ति कान्तम्।
आवर्तशोभा स्तनमण्डले वा
लावण्यकल्लोलनिभास्ति तस्याः॥ १२८॥

15 एतदाकर्ण्य नृपतिः सद्यः संतापशोषितम्।
मुमोच रागकुसुमं निर्माल्यमिव चेतसः॥ १२९॥

165 सोऽब्रवीन्नास्ति नारीणां शीलरक्षा शतैरपि।
खपुष्पमालेव सती सर्वथा नैव जायते॥ १३०॥

इत्युक्त्वान्धेन तां राजा सह श्मशानकाननम्।
20 गर्दभारोपितां तूर्णं तत्याज नगराद्बहिः॥ १३१॥

सा तेन सह निर्लज्जा व्रजन्ती दिनसंक्षये।
अटव्यां चौरपतिना प्राप्तैव सह संपदा॥ १३२॥

जनैरभिद्रुते तस्मिन् सहसा चौरमण्डले।
निरपराध एवान्धश्चौरभ्रान्त्या निपातितः॥ १३३॥

25 चौरोऽपि तां निशां भुक्त्वा सोशुम्बां क्षणसंगतः।
गृहीत्वाभरणान्यस्या जगामोत्तीर्य निम्नगाम्॥ १३४॥

कारण्डवायाः सरितस्तस्यास्तीरे निरम्बरा।
शुशोच साञ्जनैरश्रुजालैः सा मलिनस्तनी॥ १३५॥

30 तस्मिन् क्षणे मुखासक्तं मांसमुत्सृज्य जम्बुके।
याते जलोत्प्लुतं मत्स्यं तज्जहार विहङ्गमः॥ १३६॥

मत्स्ये निमग्ने सहसा खगेन पिशिते हृते ।
स बभूवोभयभ्रंशाचिन्तानिश्चललोचनः ॥ १३७ ॥

तस्यास्तं वीक्ष्य दुःखेऽपि मुखे स्मितमदृश्यत ।
हासः परस्य स्खलिते दुःस्थस्याप्युपजायते ॥ १३८ ॥

स तां वैलक्ष्यकुपितः प्रोवाचानुचितस्मिताम् । 5 D 467
अहो हससि मां लोके हास्यायतनतां गता ॥ १३९ ॥

नृपं त्यक्त्वागता ह्यन्धं त्यक्त्वान्धं चौरमाश्रिता ।
तवाहमुभयभ्रष्टः त्रिभ्रष्टायाः स्मितास्पदम् ॥ १४० ॥

आस्तां वः परिहासोऽयं तं युक्त्याहं करोमि ते ।
खलास्ते विषमस्थानां ये विडम्बनपण्डिताः ॥ १४१ ॥ 10

इत्युक्त्वा नगरीं गत्वा स नृपाय न्यवेदयत् ।
सोशुम्बा ते नदीतीरे तपोयुक्तेति मन्मतिः ॥ १४२ ॥

अथ निनाय तां राजा वितीर्याभरणाम्बरम् ।
दोषमाच्छादयत्येव रागशेपः शरीरिणाम् ॥ १४३ ॥

सैवाद्योत्पलवर्णेयमुदायी शीघ्रगोऽप्यसौ । 15
प्राग्जन्मान्तरपुण्येन भिक्षुव्रतमुपागतौ ॥ १४४ ॥

अभवदतिरसार्द्रं मानसं रागयोगे
यदु मदनविधेयं रागयुक्तं यदस्याः ।
विरतशमविचारा तेन तस्मिन् मुहूर्ते
कृतनरपतिरूपानन्दिनं मां ववन्दे ॥ १४५ ॥ 20

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
देवावतारावदानं नाम चतुर्दशः पल्लवः ॥



D 469

# १५ शिलानिक्षेपावदानम् ।

बलमतुलधैर्यवीर्यं साश्चर्यं भवति सप्रभावाणाम् ।
महदाश्रययोगाद्यस्मै सर्वं महिमत्वमायाति ॥ १ ॥
पुरा कुशीपुरीं रम्यां मल्लानां बलशालिनाम् ।
5 स्वेच्छाविहारी भगवान् प्रतस्थे सुगतः स्वयम् ॥ २ ॥
ते तदागमनं श्रुत्वा कल्याणं कुशलैषिणः ।
वर्त्मसंशोधनं चक्रुरुपचारपदोद्यताः ॥ ३ ॥
देशं भूषयतां तेषां संसिक्तं चन्दनोदकैः ।
तृणकण्टकपाषाणशर्करारेणुवर्जितम् ॥ ४ ॥
10 मध्ये समाययौ भूमिनिमग्ना महती शिला ।
अवसन्ना विसन्ना च वधूर्विन्ध्यगिरेरिव ॥ ५ ॥
D 471 तामुत्पाटयतां तेषां कुद्दालभुजरज्जुभिः ।
मासो जगाम न त्वस्याः सहस्रांशेऽप्यभूत् क्षतिः ॥ ६ ॥
अथ संसारसंतापप्रशमामृतदीधितिः ।
15 आययौ भगवान् सर्वमानसोल्लासबान्धवः ॥ ७ ॥
घनान्धकारविरतिव्यक्तसत्फलदर्शनः ।
प्रसादसंविभक्ताशः प्रकाश इव शारदः ॥ ८ ॥
स तान् दृष्ट्वा परिश्रान्तान् विफलक्लेशपीडितान् ।
श्रुत्वा च तद्व्यवसितं तानूचे प्रणताननान् ॥ ९ ॥
20 अहो क्लेशफलारम्भः प्रयासव्यवसायिनाम् ।
संसारकर्मणीवास्मिन् व्यापारे वः समुद्यमः ॥ १० ॥
प्रारम्भे विषमक्लेशं क्रियमाणं ससंशयम् ।
सिद्धमप्यनुपादेयं न प्राज्ञाः कर्म कुर्वते ॥ ११ ॥
इत्युक्त्वा चरणाङ्गुष्ठघट्टितां वामपाणिना ।
25 विन्यस्य दक्षिणे पाणौ भगवान् विपुलां शिलाम् ॥ १२ ॥
विसृज्य ब्रह्मलोकान्तमपर्यन्तपराक्रमः ।
चचाराश्चर्यचर्यायां दूतमिव जगत्त्रये ॥ १३ ॥
D 473 क्षिप्तायां सहसा तस्यां तेनात्यद्भुतकारिणा ।
उदभूद्गगनोद्भूत इव व्याप्तजनः स्वनः ॥ १४ ॥
अनित्यः सर्वसंस्कार इत्यभ्रान्तविधायिनः ।
30 सर्वधर्मा निरात्मानः शान्तनिर्वाणमेव तत् ॥ १५ ॥
इति स्फुटोदिते शब्दे शिला भगवतः करे ।
गिरीन्द्रशीर्षकाकारा स्थिता पुनरदृश्यत ॥ १६ ॥

क्षणेन सा भगवता क्षिप्ता वदनमारुतैः ।
कृता विसारिणी दिक्षु परमाणुपरंपरा ॥ १७ ॥
पुनरेकीकृतामेव भगवान् परमाणुभिः ।
शिलामन्यत्र निदधे विस्मयं च जगत्त्रये ॥ १८ ॥
आश्चर्यनिश्चलदृशस्ततो मल्ला बलोर्जितम् । 5
वीर्यं भगवतो वीक्ष्य प्रणतास्तं बभाषिरे ॥ १९ ॥
अहो महाप्रभावोऽयं बलवीर्योदयस्तव ।
निश्चयाधिगमे यस्य न प्रगल्भाः सुरा अपि ॥ २० ॥
अनुग्रहप्रवृत्तेन बलेन गुरुणा तव ।
अधोगतिनिमग्नेयं जनतेव धृता शिला ॥ २१ ॥ 10
वीर्यप्रज्ञाबलादीनां प्रमाणावधिनिश्चयम् । D 475
अपि जानाति ते कश्चिदाश्चर्यतरकारिणः ॥ २२ ॥
इति ब्रुवाणानाश्चर्यनिश्चलानवलोक्य तान् ।
तस्यां शिलायामासीनः प्रोवाच भगवान् जिनः ॥ २३ ॥
एकीभूतबलं यद्धि भूतानां भुवनत्रये । 15
सुगतस्य तदेकस्य लोके नैव समं बलम् ॥ २४ ॥
अम्भांसि कुम्भैरम्भोधेर्जगन्ति परमाणुभिः ।
शक्यान्यलं लङ्घयितुं प्रभावो न तु सौगतः ॥ २५ ॥
संख्यां सुमेरोर्यो वेत्ति तुलामानेन तत्त्वतः ।
सुगतानां न जानाति सोऽपि सद्गुणगौरवम् ॥ २६ ॥ 20
कथयित्वेति भगवान् संप्राप्ते सुरमण्डले ।
सशक्रपद्मनिलये चक्रे कुशलदेशनम् ॥ २७ ॥
मल्लास्तदुपदेशेन तत्तद्बोधिसमाश्रयात् ।
सश्रावकाख्यां प्रत्येकसम्यक्संबुद्धतां ययुः ॥ २८ ॥
स्रोतःप्राप्तिफलं कैश्चित्सकृदागामि चापरैः । 25
अनागामिफलं चान्यैः प्राप्तमर्हत्पदं परैः ॥ २९ ॥
इत्याशयानुशयधातुगतिं निरीक्ष्य D 477
ज्ञात्वा तथाप्रकृतिमप्रतिमोपदेशम् ।
तेषां चकार भगवांश्चतुरार्यसत्य-
सम्यक्प्रकाशविशदं कुशलोदयाय ॥ ३० ॥ 30

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शिलानिक्षेपावदानं पञ्चदशः पल्लवः ॥

D 479

# १६ मैत्रेयव्याकरणावदानम् ।

असंगमो नाम विशुद्धिधामो
श्रेयांसि सूते कुशलाभिकामः ।
संसारवामः सुकृताभिरामो
5 मनोमलैर्वैरजोविरामः ॥ १ ॥
पुरा गङ्गां समुत्तीर्य नागानां फणसेतुना ।
भगवान् सुगतः पारं प्राप्य भिक्षूनभाषत ॥ २ ॥
इह रत्नमयः पूर्वं यूपोऽभूदद्भुतद्युतिः ।
दर्शयामि तमत्रैव द्रष्टुं वः कौतुकं यदि ॥ ३ ॥
10 इत्युक्त्वा भगवान् भूमौ पाणिना दिव्यलक्ष्मणा ।
स्पृष्ट्वा नागगणोत्क्षिप्तं रत्नयूपमदर्शयत् ॥ ४ ॥
तं दृष्ट्वा भिक्षवः सर्वे निर्निमेषेक्षणाश्चिरम् ।
बभूवुश्चित्रलिखिता इव निश्चलविग्रहाः ॥ ५ ॥
तत्कथामथ तैः पृष्टः प्रोवाच भगवान् पुनः ।
15 अतीतानागतज्ञानं दन्तालोकैः किरन्निव ॥ ६ ॥
D 481 देवपुत्रः पुरा कश्चित् काले स्वर्गपरिच्युतः ।
महाप्रणादनामाभून्नृपतिः शक्रशासनात् ॥ ७ ॥
धर्मवृत्तानुसरणस्मरणाय महीतले ।
उचितं लक्षणं किंचित् स ययाचे शतक्रतुम् ॥ ८ ॥
20 ततः सुरपतेर्वाक्याद्विश्वकर्मा तदालये ।
भास्वरं विदधे रत्नयूपं पुण्यमिवोन्नतम् ॥ ९ ॥
ततस्तद्दर्शनासक्ते जने कौतुकनिश्चले ।
कृष्यादिकर्मण्युच्छिन्ने राज्ञः कोपक्षयोऽभवत् ॥ १० ॥
ततस्तेन क्षितिभुजा क्षिप्तोऽयं जाह्नवीजले ।
25 तिष्ठत्यद्यापि पाताले रत्नैः सूर्यैरिवाचितः ॥ ११ ॥
भविष्यत्यस्य कालेन परिच्छिन्नः परिक्षयः ।
न तज्जगति नामास्ते परिणामे यदक्षयम् ॥ १२ ॥
आगामिसमये पुंसां वर्षाशीतिसहस्रके ।
शङ्खशुभ्रयशाः शङ्खो नाम राजा भविष्यति ॥ १३ ॥
30 पुण्यलब्धमिमं यूपं नृपः कल्पद्रुमोपमः ।
स पुरोहितपुत्राय मैत्रेयाय प्रदास्यति ॥ १४ ॥
D 483 मैत्रेयोऽप्यमुमादाय कृत्वा सपदि खण्डशः ।
अर्थिचिन्तामणिर्लोकमदरिद्रं करिष्यति ॥ १५ ॥

यूपं दत्त्वाथ मैत्रेयः सम्यक्संबुद्धतां गतः ।
अनुत्तरज्ञाननिधिर्भविष्यति सुरार्चितः ॥ १६ ॥
शङ्खो राजा सहस्राणामशीत्या परिवारितः ।
सान्तःपुरामात्यगणो राजापि प्रव्रजिष्यति ॥ १७ ॥
प्राग्जन्मप्रणिधानेन शङ्खस्य कुशलोदयः ।          5
कृतस्यावश्यभोग्यत्वात्परिणामे फलिष्यति ॥ १८ ॥
मध्यदेशे पुरा राजा वासवो वासवोपमः ।
धनसंमतनामा च नृपोऽभूदुत्तरापथे ॥ १९ ॥
तयोर्विभवसंघर्षो भूतो वैराग्नितप्तयोः ।
अभूद् युद्धसमारम्भसंभाररभसं मनः ॥ २० ॥          10
नगरं च प्रविश्याथ समेत्य धनसंमतः ।
चक्रे गजरथानीकैर्गङ्गातीरं निरन्तरम् ॥ २१ ॥
तत्र रत्नशिखी नाम सम्यक्संबुद्धतां गतः ।
दृष्टस्तेनार्च्यमानाङ्घ्रिर्ब्रह्मशक्रादिभिः सुरैः ॥ २२ ॥
सोऽचिन्तयदहो राजा वासवः पृथुपुण्यवान् ।          15          D 485
विषयान्ते वसत्येष यो हि त्रिदशवन्दितः ॥ २३ ॥
ततस्तस्यानुभावेन तत्र भूपालयोस्तयोः ।
ययौ वैररजः शान्त्या मिथ्यामोहपरिक्षयम् ॥ २४ ॥
कृतसंधिः परेणाथ वासवः पृथिवीपतिः ।
भगवन्तं समभ्येत्य सर्वभोगैरपूजयत् ॥ २५ ॥          20
प्रणिधानं च विदधे पूजान्ते प्रणमामि तम् ।
अहं कुशलमूलेन स्यामेतेन महान्निति ॥ २६ ॥
अस्मिन्नवसरे घोरे शङ्खशब्दे समुद्गते ।
प्रोवाच तं रत्नशिखी प्रणतं पुरतः स्थितम् ॥ २७ ॥
शङ्खो नाम महीपालश्चक्रवर्ती भविष्यसि ।          25
पर्यन्ते बोधियुक्तश्च कुशलं समवाप्स्यसि ॥ २८ ॥
एवं सत्प्रणिधानतः क्षितिपतिः पुण्योदयाद्वासवः
शङ्खो नाम नृपः स रत्नशिखिनादिष्टः श्रियं प्राप्स्यति ।
मैत्रेयः प्रणयात्करिष्यति तथा बोधौ विशुद्धां धियं
कल्याणाभिनिवेशपुण्यतरणिराद्या हि सत्संगमः ॥ २९ ॥          30

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मैत्रेयव्याकरणावदानं नाम षोडशः पल्लवः ॥

# १७ आदर्शमुखावदानम् ।

D 487

चित्तप्रसादविमलप्रणयोज्ज्वलस्य
स्वल्पस्य दानकुसुमस्य फलांशकेन ।
हेमाद्रिरोहणनगेन्द्रसुधाब्धिदान-
5 संपत्फलं न हि तुलाकलनामुपैति ॥ १ ॥
पुरा मनोज्ञे सर्वज्ञः श्रावस्त्यां जेतकानने ।
अनाथपिण्डदारामे विजहार महाशयः ॥ २ ॥
आर्यो महाकाश्यपाख्यस्तच्छिष्यः करुणानिधिः ।
नगरोपवनस्यान्तं जनचारिकया ययौ ॥ ३ ॥
10 तत्र सुदुर्गतिर्योषिन्नगराश्रवलम्बिका ।
अपश्यत् कुष्ठरोगार्ता काश्यपं तं यदृच्छया ॥ ४ ॥
सा तं दृष्ट्वा प्रसादिन्या श्रद्धया समचिन्तयत् ।
पात्रेऽस्य पिण्डपातार्हा किं न जातास्मि पुण्यतः ॥ ५ ॥
विज्ञाय तस्या आश्चर्यश्रद्धायुक्तं मनोरथम् ।
15 प्रसार्य पात्रं जग्राह पिण्डं तं करुणाकुलः ॥ ६ ॥
D 489 तीव्रचित्तप्रसादेन भक्तसारसमर्पणे ।
कुष्ठिन्या निपपातास्याः पात्रे शीर्णकराङ्गुलिः ॥ ७ ॥
ततः सा पातकमिव त्यक्त्वानित्यकलेवरम् ।
देवानां तुषिताख्यानां निलये समजायत ॥ ८ ॥
20 शक्रस्तदद्भुतं ज्ञात्वा दानपुण्योदितादरः ।
यत्नात्काश्यपसत्पात्रं सुधया समपूरयत् ॥ ९ ॥
सुधार्पणेऽप्यसौ भिक्षुर्निस्पृहस्तृणलीलया ।
प्रशमामृतसंपूर्णश्चक्रे पात्रमधोमुखम् ॥ १० ॥
भजन्ते प्रणयप्रीतिं कृपणेषु कृपाकुलाः ।
25 सन्तः संपत्समाध्मातवदने मीलितादराः ॥ ११ ॥
श्रुत्वा तां तुषिते देवनिकाये निरतां नृपः ।
प्रसेनजित् भगवतश्चक्रे भोज्याधिवासनाम् ॥ १२ ॥
राज्ञस्तस्य गृहे दृष्ट्वा लक्ष्मीमाश्चर्यकारिणः ।
आर्यानन्देन भगवान् पृष्टस्तत्पुण्यमभ्यधात् ॥ १३ ॥
30 पुरा गृहपतेः सूनुर्दारिद्र्याद्दासतां गतः ।
क्षेत्रकर्मणि संसक्तः क्षुत्क्षामः क्लान्तिमाययौ ॥ १४ ॥

D 491

स्वजनन्या समानीतां निःस्नेहलवणां चिरात्।
कुल्माषपिण्डिमासाद्य भोक्तुं सादरमाययौ ॥ १५ ॥

धौतहस्तः क्षणे तस्मिन् संप्राप्ताय यदृच्छया।
ददौ प्रत्येकबुद्धाय तां प्रसन्नेन चेतसा ॥ १६ ॥

जातः स एव कालेन भूपालोऽयं प्रसेनजित्। 5
तस्य दानकणस्यैवं विभूतिः प्रथमं फलम् ॥ १७ ॥

श्रुत्वेति भगवद्वाक्यं भिक्षुर्विस्मयमाययौ।
राजापि विपुलां पूजां चक्रे भगवतः पुरः ॥ १८ ॥

राजार्हैरखिलैर्भोगैः कृत्वा भक्तिनिवेदनम्।
स कोटीस्तैलकुम्भानां दीपमालामकल्पयत् ॥ १९ ॥ 10

दीपमेकं ददौ तत्र स्वल्पकं दुर्गताङ्गना।
स्नेहक्षयात्प्रयातेषु सर्वेषु न जगाम यः ॥ २० ॥

विचिन्त्य प्रणिधानेन तया विमलचेतसा।
भाविनीं शाक्यमुनितां सर्वज्ञोऽस्याः समभ्यधात् ॥ २१ ॥

रत्नदीपावलिं दत्वा राजा भगवतः पुरः। 15
उपविश्य प्रणम्याग्रे प्रणयात्तं व्यजिज्ञपत् ॥ २२ ॥

D 493

भगवत्प्रणिधानेन तत्तत्पुण्यानुभावतः।
न कस्यानुत्तरा सम्यक्संबोधिर्भवदर्पिता ॥ २३ ॥

भवत्प्रसादप्रणयात् प्राप्तुमिच्छामि तामहम्।
निर्विकल्पफलावाप्त्यै सेव्यन्ते कल्पपादपाः ॥ २४ ॥ 20

इति राजवचः श्रुत्वा भगवान् समभाषत।
दुर्लभानुत्तरा सम्यक्संबोधिः पृथिवीपते ॥ २५ ॥

सूक्ष्मा मृणालतन्तुभ्यो गिरिभ्योऽपि गरीयसी।
समुद्रेभ्योऽपि गम्भीरा सा सुखेन न लभ्यते ॥ २६ ॥

न दानैर्बहुभिर्लब्धं मयैवान्येषु जन्मसु। 25
चित्तप्रसादविशदं ज्ञानं तत्कारणं जगुः ॥ २७ ॥

चतुर्द्वीपाधिपत्येन मया मान्धातृजन्मनि।
चिरं दानफलं भुक्तं बोधिर्नाधिगता तु सा ॥ २८ ॥

दानेन चक्रवर्तिश्रीः सा सुदर्शनजन्मनि।
भुक्ता मया महीयसी बोधिर्नाधिगता तु सा ॥ २९ ॥ 30

पुरा दत्वा गजानष्टौ वेलामद्विजजन्मनि ।
मया प्राप्तं महत्पुण्यं बोधिर्नाधिगता तु सा ॥ ३० ॥

D 495

कुरूपः कुशलात्माहं राजपुत्रः पुराभवम् ।
यः पिशाचोऽयमित्युक्त्वा निजपत्न्या विवर्जितः ॥ ३१ ॥

5

श्रियै श्रीस्कन्धो भूत्यागे प्रीतिर्यस्य सदा स्थिता ।
स दुःखी रूपवैकल्यात् क्व वा सर्वगुणोदयः ॥ ३२ ॥

तं रूपविरहे देहत्यागारूढं शचीपतिः ।
दिव्यचूडामणिं दत्वा चक्रे पञ्चशरोपमम् ॥ ३३ ॥

षष्टिः पुरसहस्राणि तस्य यज्ञेषु यज्वनः ।
हेमयूपाभिरूपाणि प्रापुर्मेरुबलश्रियम् ॥ ३४ ॥

10

तस्मिन् मयातिदानाद्रिकृते कुशलजन्मनि ।
तानि पुण्यान्यवाप्तानि बोधिर्नाधिगता तु सा ॥ ३५ ॥

मया सत्यप्रभावेण त्रिशङ्कुनृपजन्मनि ।
कृता वृष्टिः सुदुर्भिक्षा बोधिर्नाधिगता तु सा ॥ ३६ ॥

15

मिथिलायां महादेवनृपजन्मनि यज्वना ।
मयाप्ता पुण्यसंपत्तिर्बोधिर्नाधिगता तु सा ॥ ३७ ॥

मिथिलायां पुरा पुण्यं निमिभूपालजन्मनि ।
प्राप्तं दानतपोयज्ञैर्बोधिर्नाधिगता तु सा ॥ ३८ ॥

D 497

पुरा नन्दस्य नृपतेश्चत्वारः पिशुनाः सुताः ।
बभूवुरादर्शमुखः पञ्चमश्च गुणाधिकः ॥ ३९ ॥

20

कालेनापन्नपर्यन्तः स भूपतिरचिन्तयत् ।
एते मदन्ते चत्वारो राज्यं नार्हन्ति कर्कशाः ॥ ४० ॥

पुत्रे ममादर्शमुखे राज्यश्रीः प्रतिबिम्बिता ।
सुवृत्ते लभते शोभां प्रज्ञावैमल्यशालिनि ॥ ४१ ॥

ध्यात्वेत्यमात्यान् सोऽवादीत् स भवद्भिर्नरेश्वरः ।
कृतोऽन्तःपुरवर्गेण योऽभ्युत्थानेन पूज्यते ॥ ४२ ॥

25

मौलिर्न कम्पते यस्य समेव मणिपादुकैः ।
द्वारद्रुमाद्रिवापीषु निधिषट्कं स पश्यति ॥ ४३ ॥

इत्युक्त्वा त्रिदिवं याते नृपतौ मन्त्रिणः क्रमात् ।
तदुक्तैर्लक्षणैश्चक्रुरादर्शमुखमीश्वरम् ॥ ४४ ॥

30

धर्मनिर्णयकार्येषु यं वादिप्रतिवादिनः ।
विलोक्यैव स्वयं तस्थुर्न्यायैर्जयपराजये ॥ ४५ ॥

पुरा निरभिसंधेन प्राप्तवैशसकिल्बिषम् ।
ब्राह्मणं दण्डिनं नाम दयालुः प्रययौ पुरः ॥ ४६ ॥

गोयुगार्थे गृहस्थेन मृतेन वडवाहतेः । 5 D 499
कुठारपाततः पत्न्या तक्षवासी विवादितः ॥ ४७ ॥

शौण्डिकेनात्मजवधाद्दीक्षितं तुल्यनिग्रहम् ।
तद्विपक्षभयेनोक्त्वा तत्संल्यकं व्यमोक्षयत् ॥ ४८ ॥

अमानुषाणां सत्त्वानामध्याशयविशेषतः ।
चकार चित्तशोधनं तत्तत्संदेहनिर्णयम् ॥ ४९ ॥ 10

अवृष्टिमृष्टे दुर्भिक्षे येन द्वादशवर्षके ।
विहितं सर्वसत्त्वानामशनप्राणवर्तनम् ॥ ५० ॥

इत्यभून्मम पुण्याप्तिरादर्शमुखजन्मनि ।
न तु सा सम्यक्संबोधिर्विबोधिता महोदया ॥ ५१ ॥

बहुजन्मशताभ्यासप्रयासेन महीयसा । 15
अद्य तु ज्ञानवैमल्यं मयाप्तं लुप्तसंवृति ॥ ५२ ॥

ज्ञानप्रज्ञाधिगम्या किमपि परतरानुत्तरा सत्यसंवित्
सम्यक्संबोधिरेषा न च खलु नृपते लभ्यते दानपुण्यैः ।
मोहश्यामाविरामे गतघनगगनव्यक्तवैमल्यभाजां D 501
निर्व्याजानन्दभूमिर्भवति भवतमश्छेदिनी सा दिनश्रीः ॥ ५३ ॥ 20

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
आदर्शमुखावदानं नाम सप्तदशः पल्लवः ॥



# १८ शारिपुत्रप्रव्रज्यावदानम् ।

नेदं बन्धुर्नो सुहृत् सोदरो वा
नेदं माता न पिता वा करोति ।
यत्संसाराम्भोधिसेतुं विधत्ते
ज्ञानाचार्यः कोऽपि कल्याणहेतुः ॥ १ ॥

5

कलन्दकनिवासाख्ये रम्ये वेणुवनाश्रमे ।
भगवान् विहरन् बुद्धः पुरे राजगृहे पुरा ॥ २ ॥

कोलितं चोपतिष्यं च द्वौ परिव्राजकौ पुरा ।
प्रपन्नौ भिक्षुभावेन चकार शमसंवृतौ ॥ ३ ॥

10

ततश्च शारिपुत्रस्य भिक्षोः संदेशनां व्यधात् ।
यया साक्षात्कृतार्हत्त्वो सोऽभून्मोक्षगतिक्षमः ॥ ४ ॥
तस्य तदद्भुतं दृष्ट्वा धनार्हं सर्वभिक्षुभिः ।
पप्रच्छुः पूर्ववृत्तान्तं स च तेभ्यो व्यभाषत ॥ ५ ॥
ब्राह्मणस्याग्निमित्रस्य भार्या गुणवराभवत् ।

15

शूर्पिकेति कृतं पित्रा क्रीडानाम च बिभ्रती ॥ ६ ॥

D 505

भ्राता प्रथमशीलाख्यः तस्य शूर्पसमाभिधः ।
प्रत्येकबुद्धतां यातः कदाचिद् गृहमाययौ ॥ ७ ॥
स तया भर्तुरादेशाद् गृहिभक्त्याधिवासितः ।
प्रणतिप्रणयाचारैस्तोषितः परिचर्यया ॥ ८ ॥

20

कदाचिच्चीवरे तस्य कुर्वाणस्य विपात्रणम् (?) ।
सूचीकर्मवशाद् दृष्ट्वा प्रणिधानं समादधे ॥ ९ ॥
यथेयं कर्तरी तीक्ष्णा यथा गम्भीरगामिनी ।
सूची तथापरा प्रज्ञा मम स्यादिति सादरा ॥ १० ॥
प्रत्येकबुद्धविनयात् प्रणिधानेन तेन च ।

25

गतास्मिन् जन्मनि सैव सप्रज्ञशारिपुत्रताम् ॥ ११ ॥
स एष शारिपुत्रोऽद्य भिक्षुस्तीक्ष्णतराग्रधीः ।
कल्याणपात्रतां यातः कल्पवल्ली हि सन्मतेः ॥ १२ ॥
वाक्यं भगवतः श्रुत्वा पप्रच्छुर्भिक्षवः पुनः ।
कस्मान्नाढ्यकुले जातः शारिपुत्रो नराधमे ॥ १३ ॥

30

ततस्तान् भगवानूचे पूर्वस्मिन्नेष जन्मनि ।
अभून्महामतिर्नाम राजपुत्रः सतां मतः ॥ १४ ॥

श्रीमतोऽपि मतिस्तस्य प्रव्रज्यायामजायत । D 507
परिपाकप्रसन्नानां कालुष्याय न संपदः ॥ १५ ॥
प्रव्रज्या राजपुत्राणां यूनां नैव कुलोचिता ।
इत्युक्त्वा जनकः प्रीत्या तं यत्नेन न्यवारयत् ॥ १६ ॥
कदाचित् कुञ्जरारूढः स व्रजन् जनवर्त्मनि । 5
दृष्ट्वा दरिद्रं स्थविरं कारुण्यादिदमब्रवीत् ॥ १७ ॥
अधन्या धनिनो लोके बन्धुबन्धनयन्त्रिताः ।
प्रव्रज्यां नाप्नुवन्त्येव त्वं तु केन निवारितः ॥ १८ ॥
स न्यवेदयन्मे दरिद्रस्य न पात्रं न च चीवरम् ।
धनोपकरणान्येव शमोपकरणान्यपि ॥ १९ ॥ 10
राजसूनुरिति श्रुत्वा गत्वा मुनितपोवनम् ।
प्रव्रज्यां कारयित्वास्य प्रददौ पात्रचीवरम् ॥ २० ॥
सोऽचिरेणैव कालेन यातः प्रत्येकबुद्धताम् ।
राजपुत्रं समभ्येत्य दिव्यामृद्धिमदर्शयत् ॥ २१ ॥
तस्य प्रभावमालोक्य स प्रदध्यौ नृपात्मजः । 15
अहो महोदयत्वान्मे प्रव्रज्या दुर्लभाभवत् ॥ २२ ॥ D 509
दारिद्र्यादविवेकाच्च नीचानामपि दुर्लभा ।
जायेयमधमे कुले तस्मादस्मि विवेकवान् ॥ २३ ॥
स एव शारिपुत्रोऽयं ज्ञातस्तत्प्रणिधानतः ।
प्रव्रजितो भगवता काश्यपेनान्यजन्मनि ॥ २४ ॥ 20
तेनायं नियमप्रणयविनयी सम्यक्प्रसादोदया-
दादिष्टः कुशलाय सत्यनिधिना प्रज्ञावतामग्रणीः ।
काले शाक्यमुनेर्भविष्यति मतः शिष्यत्वयोगाद्वरं
मौद्गल्यायन एष चात्र कथितः संत्रिन्मयानां वदः ॥ २५ ॥
अन्यजन्मनि दरिद्रः कार्मिकः केनचिदपि दयया महर्षिणा । 25
दत्तपात्रचीवरोऽभवद्दर्शितर्द्धिरासीदतुलप्रभाववान् ॥ २६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शारिपुत्रप्रवज्यावदानं नामाष्टादशः पल्लवः ॥



# १९ श्रोणकोटिकर्णावदानम् ।

स कोऽपि पुण्यातिशयोदयस्य
वरः प्रभावः परमाक्षयो यः ।
प्रत्यक्षलक्ष्यः शुभपक्षसाक्षी
5 जन्मान्तरे लक्षणतामुपैति ॥ १ ॥

रम्ये पुरा भगवति श्रावस्त्यां जेतकानने ।
अनाथपिण्डदारामे विहारिणि तथागते ॥ २ ॥

बभूव वासवग्रामे बलसेनाभिधो गृही ।
पूरिताशः फलभरैश्छायातरुरिवार्थिनाम् ॥ ३ ॥

10 जायायां जयसेनायां काले कमललोचनः ।
अजायत सुतस्तस्य पुण्यैर्मूर्त इवोत्सवः ॥ ४ ॥

सहजा रत्नदीपार्चिरभूत्कर्णस्य कर्णिका ।
नाभून्मूल्यतुला यस्य हेमकोटिशतैरपि ॥ ५ ॥

श्रवणानक्षत्रजातोऽसौ रत्नकोट्यर्हकर्णिकः ।
15 स श्रोणकोटिकर्णाख्यः कुमारोऽभूद्गुणोचितः ॥ ६ ॥

D 513

स निर्मलरुचिः कान्तः कलाभिः परिपूरितः ।
अमन्दानन्दनिष्यन्दी न कस्येन्दुरिवाभवत् ॥ ७ ॥

स[1] युवा वार्यमाणोऽपि पित्रा धनदसंपदा ।
जननी साश्रुनयना परं परुषया गिरा ॥ ८ ॥

20 प्रियंवदोऽपि निर्भर्त्स्यो विषवर्षीव चन्द्रमाः ।
महासार्थेन रत्नार्थी दूरद्वीपान्तरं ययौ ॥ ९ ॥

मकराकरमुत्तीर्य व्रजतस्तस्य निर्जने ।
कर्मोर्मिविप्लवेनाभूत् स्वसार्थविरहः पथि ॥ १० ॥

सार्थोऽपि तमनासाद्य विनिवृत्तः शुचा शनैः ।
25 स्वदेशमर्जितक्लेशः प्रविवेश विशृङ्खलः ॥ ११ ॥

---

[1] Reading of lines suggested by M. M. H. Sastri:
जननीं साश्रुनयनां परं परुषया गिरा ।
प्रियंवदोऽपि निर्भर्त्स्य विषवर्षीव चन्द्रमाः ॥
स युवा वार्यमाणोऽपि पित्रा धनदसंपदा ।
महासार्थेन रत्नार्थी दूरद्वीपान्तरं ययौ ॥

सोऽपि तप्तमरुश्रेणीलक्षणां दक्षिणां दिशम् ।
श्रान्तः प्रशान्तविश्रान्तिर्वापिगाहं व्यगाहत ॥ १२ ॥

सोऽचिन्तयदहो वित्ते प्रतिवित्तार्जनोद्यमः ।
ममायमनयेनैव जातक्लेशः फलोदयः ॥ १३ ॥

अहो धनार्जनावेशः संतोषविरहान्नृणाम् । 5
सर्वापवादसंवादो निन्द्यानां विपदां पदम् ॥ १४ ॥

हेमाचलेऽपि संप्राप्ते न पर्याप्तिर्धनार्जने । D 515
संसारे वासनाभ्यासद्वेषमोहः शरीरिणाम् ॥ १५ ॥

पृथुप्रयासविरसा दीपिता श्रीरिवायता ।
तृष्णां तनोति नितरामियं मरुमहीतले ॥ १६ ॥ 10

अहो बत कुरङ्गाणां तृष्णान्धानां पदे पदे ।
ममापि जनयन्त्येव मोहं मरुमरीचिकाः ॥ १७ ॥

इयं तृष्णा श्रमश्चायमिमा निरुदका भुवः ।
किं करोमि क्व गच्छामि पश्यामि ज्वलिता दिशः ॥ १८ ॥

इति संचिन्त्य स शनैः प्रसर्पन् सलिलाशया । 15
आयासमिव साकारं ददर्श पुरमायसम् ॥ १९ ॥

घोरं द्वारि स्थितं तत्र संत्रासस्येव सोदरम् ।
ददर्श पुरुषं कालकरालं रक्तलोचनम् ॥ २० ॥

स तेन पृष्टः पानीयं यदा नोवाच किंचन ।
तदा स्वयं प्रविष्टेन प्रेतलोको विलोकितः ॥ २१ ॥ 20

दग्धकाष्ठोपमान् धूलिमललिप्तान्निरम्बरान् ।
शुष्कास्थिस्नायुशेषाङ्गान् प्रेतान् दृष्ट्वा स विव्यथे ॥ २२ ॥

तैर्याचितः स पानीयं पानीयविरहार्दितः । D 517
परित्यज्य निजामार्तिमभूत्तद्दुःखदुःखितः ॥ २३ ॥

तीव्रतृष्णातुरानूचे स तानार्तप्रलापिनः । 25
ममास्मिन् मरुकान्तारे निष्कृपस्य कुतः पयः ॥ २४ ॥

कृच्छ्रेऽस्मिन् दुःसहे न्यस्ताः के यूयं केन कर्मणा ।
युष्मदप्रक्रियाबन्धश्चातः कृच्छ्रश्चराम्यहम् ॥ २५ ॥

निद्रा निःशल्यकल्पस्य सुखसिक्तेव तस्य या ।
नार्तान्न पश्यति दृष्ट्वा तेषां क्लेशक्षये क्षमा ॥ २६ ॥ 30

ते तमूचुर्विरुद्धेन कर्मणा मोहसंचयात् ।
अनिवर्त्यं वयं मर्त्याः क्षिप्ता व्यसनसंकटे ॥ २७ ॥

अधिक्षेपात् क्षेपक्षपितपरधैर्यैर्मदभरा-
दनार्यैर्मानव्यसनेर्ष्याभिरवार्यव्यतिकरैः ।
5 कृतास्माभिर्नित्यं सुजनहृदये निर्दयतया
वचोभिर्नाराचैर्विषपरिचितैः शल्यकलना ॥ २८ ॥

D 519 दानं न दत्तं हृतमेव वित्तं
हिंसानिमित्तीकृतमेव चित्तम् ।
अस्माभिरङ्गैर्विहिता विकाराः
10 परस्य दारापहृतिप्रकाराः ॥ २९ ॥

ते वयं कुहकासक्ता दक्षाः क्षुद्रेषु कर्मसु ।
प्रयाताः प्रेतनगरे घोरेऽस्मिन् क्लेशपात्रताम् ॥ ३० ॥

इति तेषां वचः श्रुत्वा सोऽन्यत्र च तथाविधान् ।
प्रेतान् दृष्ट्वानभिप्रेतान् करुणाकुलितोऽभवत् ॥ ३१ ॥

15 निर्गम्य दुर्गमात् तस्मात् पुरात्पुण्यबलेन सः ।
विमलं शीतलच्छायमाससाद वनान्तरम् ॥ ३२ ॥

अथ दूराध्वसंतप्तः परिश्रान्तः शनैः शनैः ।
निपपाताचलादन्धस्तृष्णार्त इव भास्करः ॥ ३३ ॥

दिने पुण्य इव क्षीणे निःशेषाशाप्रकाशके ।
20 संमोहमलिनं लोके तमः पापमिवोद्ययौ ॥ ३४ ॥

क्षीणभृङ्गविहङ्गानां नलिनीनां प्रसङ्गिनी ।
विकाससंपदा मुद्रा निद्रेव समजायत ॥ ३५ ॥

कारुण्यादिव शीतांशुर्ज्योत्स्नामृतशलाकया ।
स्फारतारं जगन्नेत्रं चक्रे वितिमिरं ततः ॥ ३६ ॥

D 521 25 क्षयोदयपरावृत्तिर्दर्शितानेकविभ्रमः ।
संसारदिनयामिन्योर्जहासेव सुधाकरः ॥ ३७ ॥

नेत्रानन्दसुधावर्षे सुखस्पर्शे निशाकरे ।
दिग्वधूवदनादर्शे हर्षे मूर्त इवोदिते ॥ ३८ ॥

श्रोणकोटिर्ददर्शाग्रे विमानमाननद्युतिम् ।
30 कौतुकादन्यरूपेण स्वर्गाद्भुवमिवागतम् ॥ ३९ ॥

तस्मिन्नपश्यत्समदाश्चतस्रस्त्रिदशाङ्गनाः ।
दिशश्चन्द्रोदयानन्दविहारायेव संगताः ॥ ४० ॥
तासां मध्ये वराकारं रममाणं व्यलोकयत् ।
तरुणप्रेमसंभारमिव साकारतां गतः ॥ ४१ ॥
रत्नमण्डलकेयूरकिरीटिकचिरांशुभिः । 5
आलिखन्तमिवाश्चर्यममर्यादं दिशां मुखे ॥ ४२ ॥
तस्य तामद्भुतां दृष्ट्वा संभोगसुखसंपदम् ।
मेने स सुकृताख्यस्य तरोः स्फीतां फलश्रियम् ॥ ४३ ॥
प्रीत्या तेन कृतातिथ्यः स्वादुपानाशनादिभिः ।
तां श्रोणकोटिकर्णोऽथ निनाय रजनीं सुखम् ॥ ४४ ॥ 10
ताराकुसुमवातालिप्रभा प्राभातिकी ततः । D 523
अनित्यतेव शशिनश्चक्रे लक्ष्मीपरिक्षयम् ॥ ४५ ॥
क्षयं क्षपायां यातायां भानौ भुवनचक्षुषि ।
उदिते सर्वभूतानां सुखदुःखैकसाक्षिणि ॥ ४६ ॥
विमानं सुरनार्यश्च क्षणाददृश्यतां ययुः । 15
विनष्टवदनच्छायः पुरुषश्चापतत्क्षितौ ॥ ४७ ॥
ततस्तस्यापतत् पृष्ठे शुनां संघोऽतिभीषणः ।
त्रैलोक्यशापपापोत्थः क्लेशराशिरिवाखिलः ॥ ४८ ॥
स तैर्ग्रीवामुखारब्धमांसग्रासाग्रकर्षणैः ।
आक्रन्दिरुधिरक्षीरैर्भक्ष्यमाणः क्षयं ययौ ॥ ४९ ॥ 20
दिनान्ते पुनरायान्तं तद्विमानमपश्यत ।
चतस्रोऽप्सरसस्ताश्च पुरुषः स च कान्तिमान् ॥ ५० ॥
तं श्रोणकोटिकर्णोऽथ पप्रच्छात्यन्तविस्मितः ।
सखे किमेतदाश्चर्यं दृश्यते कथ्यतामिति ॥ ५१ ॥
स तेन पृष्टः प्रोवाच वयस्य श्रूयतामिदम् । 25
त्वां श्रोणकोटिकर्णाख्यं जानामि सुकृतोचितम् ॥ ५२ ॥
अभवं वासवग्रामे दुष्कृती पशुपालकः । D 525
पशूनां मांसमुत्कृत्य विक्रीतं सततं मया ॥ ५३ ॥
पिण्डपाताय संप्राप्तो मामार्यः करुणानिधिः ।
कात्यायनाख्यः प्रोवाच विरमास्मात् कुकर्मणः ॥ ५४ ॥ 30
हिंसामयो ह्ययं क्लेशो दुःसहः साहसैषिणाम् ।
स्वशरीरे पतत्येव छिन्नमूल इव द्रुमः ॥ ५५ ॥

इत्यहं वार्यमाणोऽपि तेनानार्यः कृपात्मना ।
यदा न विरतः पापात् तदा स प्राह मां पुनः ॥ ५६ ॥
दिवा त्वं कुरुषे हिंसां सर्वथा यदि निर्दयः ।
रात्रौ शीलसमादानं गृहाण समयान्मम ॥ ५७ ॥
5 इत्युक्त्वा तेन यत्नेन सर्वसत्त्वहितैषिणा ।
दत्ता शीलसमादानमयी पुण्यमतिर्मम ॥ ५८ ॥
कालेन कालवशगः प्राप्तः सोऽहमिमां दशाम् ।
तप्ताङ्गारसुधावर्षैरिव कीर्णो दिवानिशम् ॥ ५९ ॥
रात्रौ शीलसमादानफलं हिंसाफलं दिने ।
10 चर्या मत्पुण्यपापाभ्यां पतितः सुखदुःखयोः ॥ ६० ॥
D 527 तस्य मे कुरु कारुण्यं सखे कलुषकारिणः ।
गत्वा स्वदेशं मत्पुत्रं ब्रूहि मद्वचसा रहः ॥ ६१ ॥
अस्ति मे गृहकोटान्ते निखातं हेमभाजनम् ।
तदुद्धृत्य परित्यक्तपापवृत्ति विधीयताम् ॥ ६२ ॥
15 आर्यकात्यायनो नित्यं पिण्डपातेन पूज्यताम् ।
इत्युक्तस्तेन विनयात् तथेत्युक्त्वा जगाम सः ॥ ६३ ॥
स ददर्श व्रजन् दिव्यविमानमपरं पुनः ।
रत्नपद्मलताकान्तं द्वितीयमिव नन्दनम् ॥ ६४ ॥
तस्मिन् साङ्गमिवानङ्गं संगतं दिव्ययोषिता ।
20 अपश्यद्वासरारम्भे पुरुषं रत्नभूषितम् ॥ ६५ ॥
तेन प्रीत्युपचारेण कृतातिथ्यस्तथैव सः ।
दिनं निनाय दीर्घं च क्लेशमध्ये सुधामयम् ॥ ६६ ॥
अथ व्योमविमानाग्रात् पतिते पद्मिनीपतौ ।
अपूर्यत जगद् घोरैर्दुःखैरिव तमोभरैः ॥ ६७ ॥
25 ततः क्षपापतिर्ज्योत्स्नां वमन्नेव क्षपाजडः ।
शनैः पाण्डुरोगीव गौरद्युतिरदृश्यत ॥ ६८ ॥
D 529 सुकुमारे दिनालोके रात्रौ राक्षसयोषिता ।
भक्षितेऽलक्ष्यत शशी कपालदलसंनिभः ॥ ६९ ॥
व्याप्ते चन्द्रिकया लोके कालचन्दनचर्चया ।
30 विमानमगमत् क्वापि सा च स्वर्गमृगेक्षणा ॥ ७० ॥

विमानपतितः सोऽपि पुरुषः सर्वरूपया ।
शनैः सप्तभिरावर्तैः शतपद्या विवेष्टितः ॥ ७१ ॥
सा तस्य मूर्ध्नि विवरं कृत्वा मस्तिष्कशोणितम् ।
आस्वादयन्ती शनकैश्चकार शुषिरं शिरः ॥ ७२ ॥
अथारुणकरच्छन्ने सोच्छ्वासवदने दिने । 5
बीभत्सदर्शनक्लेशादिव मीलिततारके ॥ ७३ ॥
प्रादुरासन् पुनर्दिव्यविमानं सा च कामिनी ।
युवा स चाद्भुततनुर्दिव्याभरणभूषितः ॥ ७४ ॥
पृष्टोऽतिविस्मयात् तेन स्ववृत्तान्तं जगाद सः ।
द्विजोऽहं वासवग्रामनिवासी मनसाभिधः ॥ ७५ ॥ 10
तरुणी प्रातिवेश्यस्य पत्नी मलयमञ्जरी ।
अभून्मम भुजङ्गस्य स्वैरिणी वल्लभा भृशम् ॥ ७६ ॥
परदाररतेर्ग्रामे व्यग्रा मे क्षमते मतिः । D 531
निमग्ना विषयग्रामे समग्रा मे क्षयं गता ॥ ७७ ॥
आर्यकात्यायनः पापं ज्ञात्वा मां चौर्यकामुकम् । 15
दयाविधेयः कारुण्यात् प्रोवाच विजने शनैः ॥ ७८ ॥
पराङ्गनाङ्गसंसर्गप्रीत्या रूपरतेः क्षिप्रम् (?) ।
अनङ्गाग्नौ पतन्नाशं पतङ्ग इव मा गमः ॥ ७९ ॥
अहो आसक्तरक्तानां संपतनप्रमादिनाम् ।
कामिनां हिंसकानां च परदारादरः परम् ॥ ८० ॥ 20
पृथु प्रवेपथु(?) स्वापश्रमविह्वलानां
गृध्राङ्गनामुखनिखातनखक्षतानाम् ।
संमोहने परवधूविहितस्पृहाणां
रोमाञ्चकारिणि परं नरके च कामः ॥ ८१ ॥
तस्मादस्मान्निवर्तस्व वत्स कुत्सितकर्मणः । 25
जायते पातकं स्पर्शे शुनामिवाशुचौ रतिः ॥ ८२ ॥
इत्यहं कृपया तेन निषिद्धोऽप्यविशुद्धधीः ।
अनिरुद्धेन रागेण बद्धस्तामेव नात्यजम् ॥ ८३ ॥
विज्ञाय मामविरतं ततः कात्यायनो ददौ । D 533
मह्यं शीलसमादानं दिनचर्याहितोद्यतः ॥ ८४ ॥ 30
दिनशीलसमादानात् परस्त्रीगमनान्निशि ।
इयं मे पुण्यपापोत्था सुखदुःखमयी स्थितिः ॥ ८५ ॥

गतेन वासवग्रामं वाच्यः पुत्रो मम त्वया।
सुवर्णमग्निशालायामस्ति गूढं धृतं मया ॥ ८६ ॥

वृत्तिः कार्या तदुद्धृत्य पूज्यः कात्यायनश्च सः।
प्रणयादिति तेनोक्तः श्रोणकोटिर्ययौ ततः ॥ ८७ ॥

5 सोऽपश्यद्दिव्यललनामग्रे मणिविमानगाम्।
लक्ष्मीं लावण्यदुग्धाब्धेरनायासोद्गतामिव ॥ ८८ ॥

तस्य विमानपादेषु चतुर्षु स्नायुसंयुतम्।
स ददर्शातिदुर्दर्शं बद्धं प्रेतचतुष्टयम् ॥ ८९ ॥

सापि तं प्रत्यभिज्ञाय संभाष्य स्निग्धया गिरा।
10 सुरोचितं ददौ तस्मै रसवत् पानभोजनम् ॥ ९० ॥

भुञ्जानसंज्ञया दूरात् प्रेतैर्दैन्येन याचितः।
स ददौ कृपया तेभ्यः काकेभ्य इव पिण्डिकाः ॥ ९१ ॥

D 535 पिण्डो बुसत्वमेकस्य प्रयातोऽन्यस्य लोहताम्।
स्वमांसत्वं तृतीयस्य चतुर्थस्य प्रपूयताम् ॥ ९२ ॥

15 विलोक्य तत्कृपाविष्टः स तेषां कष्टचेष्टया।
पप्रच्छ तन्मुखच्छायां विच्छायीकृतपङ्कजाम् ॥ ९३ ॥

पृष्टा तदद्भुतं तेन उवाच सा मृगेक्षणा।
न श्रोणकोटिकर्णैषां दत्तं भवति तृप्तये ॥ ९४ ॥

ब्राह्मणस्यास्य भार्याहं पूर्वपादावलम्बिनः।
20 नन्दनाम्नः सुनन्दाख्या वासवग्रामवासिनः ॥ ९५ ॥

द्वितीयपादसंसक्तः पुत्रो मे निष्ठुराभिधः।
पश्चात्पादावलम्बिन्यौ दासी चेयं स्नुषा च मे ॥ ९६ ॥

नक्षत्रयोगपूजायां पुरा सज्जीकृते मया।
भैक्ष्योपहारे मे गेहमार्यकात्यायनोऽविशत् ॥ ९७ ॥

25 मया चित्तप्रसादिन्या पिण्डपातेन सोऽर्चितः।
कुर्वन्नेव ययौ कान्त्या वैमल्यानुग्रहं दिशाम् ॥ ९८ ॥

ततः स्नात्वा समायातस्तूर्णं पतिरयं मम।
तत्पिण्डपातमाकर्ण्य प्रमोदाय मयोदितम् ॥ ९९ ॥

D 537 कोपादुवाच मां कस्माद् विशिखः श्रमणः शठः।
30 अपूजितेषु पूज्येषु बुसार्हः पूजितस्त्वया ॥ १०० ॥

इति मोहादनेनोक्ते पुत्रोऽप्येष जगाद माम्।
पाके पूर्वाशनायोग्यः स किं नाश्नात्ययोगुडान्॥ १०१॥
इयं स्नुषा मे सततं पूर्वभक्ष्यावभोगिना।
मयोक्ते शपथं चक्रे स्वमांसादनवादिनी॥ १०२॥
इयं दासी च भैक्ष्याणां चौर्यात्तद्व्ययकारिणी। 5
आक्षिप्ता चाकरोत् सत्यं पूयशोणितवादिनी॥ १०३॥
तत्र ते प्रेततां याताः स्ववाक्यसदृशाशनाः।
अहं त्वार्यप्रसादेन दिव्यभोगोपभोगिनी॥ १०४॥
त्वया स्वदेशमाप्तेन वक्तव्या दुहिता मम।
सन्ति हेमनिधानानि गृहे चत्वारि ते पितुः॥ १०५॥ 10
तान्युद्धृत्य यथायोगं भजस्व स्वजनिस्थितिम्।
पूजनीयः पितुर्भ्राता नाम्ना कात्यायनः सदा॥ १०६॥
सः श्रोणकोटिकर्णस्त्वं गच्छ देशं त्यज श्रमम्।
वर्षा द्वादश संपूर्णाः स्वगृहान्निर्गतस्य ते॥ १०७॥
इत्युक्त्वा तं समादिश्य तस्य प्रेतचतुष्टयम्। 15 D 59
सुप्तस्यैव मुहूर्तेन स्वदेशाप्तिमकारयत्॥ १०८॥
उत्थितः सोऽपि सहसा स्वदेशोद्यानकाननात्।
वियोगशोकात्पितरौ शुश्रावान्ध्यमुपागतौ॥ १०९॥
भिक्षुद्विजातिथिगणे पूज्यमाने सुरालये।
स्वकं पितृगृहं दृष्ट्वा परं विस्मयमाययौ॥ ११०॥ 20
निश्चित्य सर्वं भावानां क्षणिकत्वादनित्यताम्।
स्नेहरागं समुत्सृज्य तत्रस्थः समचिन्तयत्॥ १११॥
अहो संमोहनिद्रेयं निरन्तरतो दिवानिशम्।
स्वप्नमायाविलसितैः करोत्यद्भुतविभ्रमम्॥ ११२॥
जन्मवर्त्मप्रदा माता पिता बीजत्रपत्स्वगः। 25
पान्थपूजासनं कायः कोऽयं नियमसंगमः॥ ११३॥
श्रियः संसाराभ्रभ्रमपरिचिताः काञ्चनरुचा
आशा दिग् (?) निर्बन्धास्तडित इव निर्लेपचपलाः।
वपुः सर्वापायैः क्षयभयनिकायैः परिगतं
जरारोगोद्वेगैस्तदपि न विरागस्तनुभृताम्॥ ११४॥ 30

D 541

श्रिये स्वस्तिसमाप्तये स्वजनस्यायमञ्जलिः।
दाक्षिण्यैः क्षमतं स्त्रीषु प्रव्रज्यैव प्रिया मम॥ ११५॥

इति ध्यात्वा स पितरौ समाश्वास्याप्तलोचनौ।
बुद्धौ धर्मपथे शुद्धे शमधाम्नि न्यवेशयत्॥ ११६॥

5 सार्थभ्रष्टश्चिरायातः कृशोऽपि स्वजनस्य च।
अलुप्तसत्त्वविभवान्न कृपास्पदतां ययौ॥ ११७॥

अनुकम्पस्व यद्येतं संसारक्लेशविह्वलम्।
सतः कस्यानुकम्प्यास्ते संपत्संपर्कनिस्पृहाः॥ ११८॥

पशुपालकविप्रस्त्रीसंदेशादि यथोदितम्।
10 निगद्य तेभ्यः कनकप्राप्तिप्रत्ययलक्षणम्॥ ११९॥

शान्तः कात्यायनं प्राप्य प्रव्रज्यां स समाददे।
मुग्धानां यद्विषादाय तत्प्रसादाय धीमताम्॥ १२०॥

स समासाद्य विशदं स्रोतःप्राप्तिफलं ततः।
सकृदागाम्यनागामिफलमर्हत्फलं तथा॥ १२१॥

15 त्रैधातुको वीतरागः समलोष्टाश्मकाञ्चनः।
आकाशपाणितुल्योऽभूदसिचन्दनयोः समः॥ १२२॥

D 543

श्रावस्त्यां वेणुगहने जिनं जेतवने स्थितम्।
भगवन्तं ययौ द्रष्टुं सोऽथ कात्यायनाज्ञया॥ १२३॥

प्रणिपातकृतातिथ्यः प्रीत्या भगवता स्वयम्।
20 स श्रोणकोटिकर्णोऽथ बभाषे हर्षनिर्भरः॥ १२४॥

भगवान् धर्मकायेन दृष्टोऽयं श्रोत्रवर्त्मनि।
अधुना रूपकायेन पुण्यैरालोकितो मया॥ १२५॥

अनल्पसुकृतप्राप्यमिदं तद्दर्शनामृतम्।
पीत्वा न तृप्तिमायान्ति वञ्चिता एव ते परम्॥ १२६॥

25 अस्पृहस्यापि ते मूर्तिः कुरुते कस्य न स्पृहाम्।
निर्लेपस्यापि ते दृष्टिरहो हर्षेण लिम्पति॥ १२७॥

त्वत्कथा त्वदनुध्यानं त्वत्प्राप्तिस्त्वन्निषेवणम्।
एताः कुशलमूलानां स्फीताः फलसमृद्धयः॥ १२८॥

इति श्रुत्वा भगवता प्रसादेनाभिनन्दितः।
30 तदादिष्टं शमारामं स विहारमवाप्तवान्॥ १२९॥

तस्यास्पदं समभ्येत्य प्रणयाद्भगवानपि ।
श्रुत्वास्य मधुरं धर्मं स्वाध्यायं प्रशशंस सः ॥ १३० ॥
तां श्रोणिकोटिकर्णस्य दृष्ट्वा प्रशमसंपदम् ।　　D 545
भिक्षुभिर्भगवान् पृष्टः पूर्ववृत्तमभाषत ॥ १३१ ॥
वाराणस्यां पुरा सम्यक्संबुद्धे काश्यपाभिधे ।　　5
निर्वाणधातौ निःशेषकार्यत्वात् परिनिर्वृते ॥ १३२ ॥
कृकिनामनृपश्चैत्यं तस्य रत्नैरकारयत् ।
स्वयं तत्पुण्यसंभारं स्वर्गं वक्तुमिवोद्गतम् ॥ १३३ ॥
शीर्णस्थापितसंस्कारे तस्मिन् संज्ञाधृतं धनम् ।
तत्पुत्रः प्राप्तराज्योऽथ न ददौ लोभमोहितः ॥ १३४ ॥　　10
अथोत्तरापथायातः सार्थवाहोऽर्थदाभिधः ।
प्रददौ पृथिवीमूल्यं तत्कृते कर्णभूषणम् ॥ १३५ ॥
कालान्तरोपगतोऽपि दत्वा चान्यद्धनं महत् ।
प्रणिधानं स कृतवान् भूयासं पुण्यवानिति ॥ १३६ ॥
स श्रोणकोटिकर्णोऽयं पुण्यैः प्राप्तपदं महत् ।　　15
तद्विधेनैव संयातः कर्णभूषणलक्षणः ॥ १३७ ॥
प्रस्थानसमये माता श्राविता परुषं वचः ।
यस्मादनेन तेनास्य बभूवास्य श्रमो महान् ॥ १३८ ॥
मध्येषु महतः शुक्लगुणसत्कर्मवाससः ।　　D 547
कृष्णकर्मलवांशोऽपि स्फुट एवावधार्यते ॥ १३९ ॥　　20

सुकृतसचिवः सत्त्वोत्साहः प्रवाससखी धृतिः
　　विषमतरणे वीर्यं सेतुर्विपद्यधिका कृपा ।
शमपरिचिता पर्यन्ते च प्रसादमयी मतिः
　　परिणतिरियं पुण्यप्राप्तेः स्फुरत्फलशालिनी ॥ १४० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां　　25
श्रोणकोटिकर्णावदानं नामोनविंशतितमः पल्लवः ॥



## २० आम्रपाल्यवदानम् ।

द्विजिह्वसङ्गे कथमस्ति वृत्ति-
रनेकमुख्ये कथमस्ति सौख्यम् ।
कर्मान्तबन्धेऽस्ति कथं स्वशक्तिः
प्रज्ञाप्रकर्षे कथमस्त्यपायः ॥ १ ॥

मिथिलायां विदेहेषु जलसत्त्वाभिधो नृपः ।
अभूद् भुजभुजङ्गस्य विश्रान्तपृथिवीभरः ॥ २ ॥
खण्डो नाम महामात्यस्तस्याखण्डलसंपदः ।
बभूवाशेषषाड्गुण्यपरिज्ञानबृहस्पतिः ॥ ३ ॥
नीतिज्ञगौरवात्तस्य नृपे व्यक्तं नलोकिनि ।
सदाभवन्मुखप्रेक्षी सर्वः कार्यवशाज्जनः ॥ ४ ॥
गतानुगतिकत्वेन प्रवाहप्रणयी भरः ।
वर्धते वार्यमाणस्य स्वजनस्य जलस्य च ॥ ५ ॥
सर्वं तन्मयमालोक्य जनं मात्सर्यमूर्च्छिताः ।
मन्त्रिणः संहतास्तस्य विनिपातमचिन्तयन् ॥ ६ ॥
ते प्रविश्याश्रमं राज्ञस्तां तस्य प्रभविष्णुताम् ।
मुहुः शङ्कास्पदं कृत्वा शशंसुर्भेदकोविदाः ॥ ७ ॥
तद्गिरा शङ्कितो राजा तस्य वैमुख्यमाययौ ।
अबलाबालभूपाला वर्णनप्रत्ययाः परम् ॥ ८ ॥
अशङ्क्यादपि शङ्कन्ते शङ्कादोषेऽप्यशङ्किताः ।
अविशेषज्ञचपला भूपालाः काकशङ्किनः ॥ ९ ॥
प्रभोर्विरक्तिलिङ्गानि विलोक्यामात्यपुंगवः ।
स्वसुतौ गोपसिंहाख्यौ सशङ्कः स्वैरमब्रवीत् ॥ १० ॥
धूर्तैर्मे वीतविश्वासः पिशुनैर्नृपतिः कृतः ।
प्रत्ययं नैति हृदये विदार्यापि प्रदर्शिते ॥ ११ ॥
विरक्तः स्थगितालापदर्शनश्रवणः प्रभुः ।
शेफ इव वृद्धस्य यातः शिथिलतां मम ॥ १२ ॥
पिशुनोद्भूतभेदस्य प्रेम्णः संधिर्न विद्यते ।
न मणिः श्लिष्यति पुनः पाषाणशकलीकृतः ॥ १३ ॥
द्विजिह्वकुटिलाक्रान्तः प्रभुश्चन्दनपादपः ।
न यात्यर्थक्रियाकारी गुणवानपि सेव्यताम् ॥ १४ ॥

कथं नृपनिधानार्थी कुशलं भजते नरः । D 553
घोरद्वेषविषाविष्टद्विजिह्वाघातविह्वलः ॥ १५ ॥
तस्माद्व्रजामः संत्यज्य द्वेषदोषेण भूपतेः ।
शङ्काशल्यमये वृत्ते मेऽस्मिन् देशे स्थितेन किम् ॥ १६ ॥
दक्षा रक्षाक्षमाः शूराः प्रभूतार्थाः सुसंहताः । 5
सन्तः सन्ति विशालायां वासस्तत्र ममेप्सितः ॥ १७ ॥
इति ब्रुवाणः पुत्राभ्यां तथेत्युक्तः स सानुगः ।
उद्यानगतिमानेन प्रययौ सपरिच्छदः ॥ १८ ॥
प्रयाणं नृपतिर्ज्ञात्वा निवर्तनसमुद्यतः ।
यत्नेनापि न तं प्राप नोत्सृष्टं लभ्यते पुनः ॥ १९ ॥ 10
मूर्खाः सत्सु कृतावज्ञा विमुह्यन्ते क्षणेन तैः ।
याति तेषां तु सर्वत्र कोऽपि नार्थी कृतार्थताम् ॥ २० ॥
धीमानमात्यः प्राप्तोऽथ कृष्टो वैशालिकैर्गुणैः ।
पूजितः प्रणयाचारैः संवमुख्ये पदे स्थितः ॥ २१ ॥
तद्बुद्धिविभवाप्तश्रीः सोऽथ तत्प्रमुखो गणः । 15
कदाचिदनयाल्लेभे न पराभवपात्रताम् ॥ २२ ॥
अथ कालेन सिंहस्य मन्त्रिसूनोः कनीयसः ।
अजायत सुता कान्ता चैला नाम गुणोचिता ॥ २३ ॥
द्वितीया चोपचैलाख्या सुता जातास्य सुन्दरी । D 555
जन्मन्येव तयोः प्राह निमित्तज्ञो विचक्षणः ॥ २४ ॥ 20
चैलायास्तनयो भावी पितृहन्ता महीपतिः ।
गुणवानुपचैलायाः पूर्णलक्षणवानिति ॥ २५ ॥
ज्येष्ठो मन्त्रिसुतः शौर्याद्गोपः प्रौढमदोद्धतः ।
उद्यानमर्दनक्षेपैर्गणानां द्वेष्यतां ययौ ॥ २६ ॥
तत्पितुर्गौरवात्तस्मै सानुजाय विमन्यवः । 25
विशालशालतामन्ते जीर्णोद्यानद्वयं ददुः ॥ २७ ॥
सुगतप्रतिमां चक्रे तत्रैकः सुकृतोचिताम् ।
विहारं वैभवोदारं भुवनाभरणं परः ॥ २८ ॥
अथ पित्रा बलोत्सिक्तः सुतः प्रत्यन्तमण्डले ।
गणकोपभयाद्गोपः कर्मान्तोपार्जने धृतः ॥ २९ ॥ 30
कालेन त्रिदिवं याते तस्मिन् मन्त्रिवरे गणैः ।
कनीयसस्तु साधुत्वात् सिंहस्तस्य पदे धृतः ॥ ३० ॥

D 557 गोपः पितुरसंप्राप्य पदं गणविमानितः ।
तद्देशवासविरसः परिहारमचिन्तयत् ॥ ३१ ॥
वास्तव्यं कण्टकाकीर्णे व्याघ्राघ्राते वरं वने ।
अनेकस्वामिसंभिन्नजने न तु विशृङ्खले ॥ ३२ ॥
5 नानामतक्रियालापः कथमाराध्यते गणः ।
समीहितं यदेकस्य तदन्यस्मै न रोचते ॥ ३३ ॥
इतिमानी स संचिन्त्य गत्वा राजगृहं पुरम् ।
बिम्बिसारं नरपतिं गुणश्रियमशिश्रियत् ॥ ३४ ॥
स तेन मानितः प्रीत्या तस्य विश्रम्भभूरभूत् ।
10 चिररुच्येव तत्कालमाभाति गुणसंगतिः ॥ ३५ ॥
राज्ञोऽथ बिम्बिसारस्य वल्लभा पञ्चतां ययौ ।
तद्वियोगाग्निसंतप्तं तं विचिन्त्य स बुद्धिमान् ॥ ३६ ॥
उपचैलां सुतां भ्रातुस्तद्विवाहोचितां वधूम् ।
गूढचारी तदादेशात् वैशालकपुरीं ययौ ॥ ३७ ॥
15 कन्या गणोपभोग्यैत्र न कस्मैचित्प्रदीयते ।
इति वैशालिकैः पूर्वं स्वदेशे नियमः कृतः ॥ ३८ ॥
D 559 तत्पुरे द्वाररक्षायै यक्षस्थानावलम्बिनी ।
परप्रवेशे कुरुते शब्दं घण्टी पटीयसी ॥ ३९ ॥
स प्रविश्य ततो भ्रातुर्गूढमुद्यानचारिणीम् ।
20 उपचैलां समाहर्तुं गतश्चैलामवाप्तवान् ॥ ४० ॥
यातस्तं रथमारुह्य घण्टाशब्दादभिद्रुतम् ।
स हत्वा वीरपुरुषानवाप नृपतेः पुरम् ॥ ४१ ॥
तमूचे देवकन्येयं प्राप्ता विमनसात्मना ।
पितृहन्ता सुतो ह्यस्या निमित्तज्ञेन सूचितः ॥ ४२ ॥
25 तस्मादेषा नरपतेर्महिषी न तवोचिता ।
त्वयि जीवति जीवन्ति प्रजानां सर्वसंपदः ॥ ४३ ॥
इत्युक्तस्तेन तां दृष्ट्वा त्यक्तुं नैव शशाक सः ।
निरुद्धः कर्मणा ह्येव तन्मुखालेख्यलेखया ॥ ४४ ॥
सोऽवदत् क कदा दृष्टः पुत्रेण निहतः पिता ।
30 स्वयं मयाभिषेक्तव्यः सुतो यदि भविष्यति ॥ ४५ ॥
इत्युक्त्वा नृपतिः कन्यां परिणीयाभवत्सुखी ।
कृतकर्मोर्मिनिर्माणे प्रभवन्ति न बुद्धयः ॥ ४६ ॥

D 561

भोगिनस्तस्य कालेन तस्यां सूनुरजायत ।
ज्योतिष्कचरिते यस्य वृत्तमुक्तं पितृद्रुहः ॥ ४७ ॥

तपोवनमृगाधानमृगयाव्यसने वने ।
एवंविधो ह्यभूत्तस्य मुनिशापः सुताकृतिः ॥ ४८ ॥

अत्रान्तरे महान्नाम वैशालिकगणाग्रणीः ।　　5
कन्यामाम्रवनात्प्राप कदलीस्कन्धनिर्गताम् ॥ ४९ ॥

सा तस्य भवने कान्ता वर्धमाना शनैः शनैः ।
विदधे विपुलां प्रीतिं दानचिन्तां च चेतसि ॥ ५० ॥

प्रणयादाम्रपालीति बन्धुभिः सा कृताभिधा ।
सूनुहीनमिव त्यक्त्वा बाल्यं यौवनमाददे ॥ ५१ ॥　　10

तद्विवाहोद्यतस्याथ न सेहे तत्पितुर्गणः ।
गणोपभोग्या कन्येति समयस्य व्यतिक्रमम् ॥ ५२ ॥

पितरं दुःखसंतप्तं समेत्याथ जगाद सा ।
भवामि गणभोग्यैव किं त्वेष समयो यदि ॥ ५३ ॥

एकस्योपरि नान्यस्य प्रवेशः स्वपदे स्थितिः ।　　15
पणः कार्षापणशतैः पञ्चभिः प्रत्यहं मम ॥ ५४ ॥

D 563

सप्ताहेनैव विचयः कार्यो वेश्मनि नान्यदा ।
इत्यस्मिन् समये वध्यः सर्वश्चैव व्यतिक्रमी ॥ ५५ ॥

इति तत्समयं ज्ञात्वा तत्पितुर्वचसा गणः ।
अकरोद् बाढमित्युक्त्वा दृढनिश्चयमादरात् ॥ ५६ ॥　　20

ततः सरत्नभवने वराभरणभूषिते ।
हेमहर्म्यसमारूढा दिदेश दिनचन्द्रिकाम् ॥ ५७ ॥

ततः पणीकृतः कामी यो यस्तां समुपाययौ ।
तस्य तस्याभवत् तस्याः प्रभावेणौजसः क्षयः ॥ ५८ ॥

द्रष्टुमेव न शेकुस्ते किं पुनः स्प्रष्टुमाकुलाः ।　　25
भुजङ्गभोगसंरुद्धां तां चन्दनलतामिव ॥ ५९ ॥

ततः सा सुन्दरी भेजे यौवनस्यापि यौवनम् ।
गुरुणा स्तनभारेण मध्यभङ्गभयप्रदम् ॥ ६० ॥

स्मरसंभोगरहितं तत्तस्या रूपमद्भुतम् ।
श्वभ्रहेमलतापुष्पमिव निष्फलतां ययौ ॥ ६१ ॥　　30

कौतुकाशाविनोदाय नानादेशान्तरागतैः ।
अकारि चित्रकारैर्भूपालप्रतिकृतिर्गृहे ॥ ६२ ॥

D 565
विधाय चित्रलिखितान् सा क्रमेण नरेश्वरान् ।
ददर्श बिम्बिसारस्य रूपं रतिपतेरिव ॥ ६३ ॥

5
तमालोक्यैव सहसा समुद्भूतमनोभवा ।
स येन लिखितस्तत्र तं पप्रच्छ कुतूहलात् ॥ ६४ ॥

कोऽयं सखे प्रीतिलतामाधवो वसुधापतिः ।
प्रीणाति लोचने यस्य सुधापरिचिता रुचिः ॥ ६५ ॥

धन्या का नाम भूभर्तुरस्य प्रणयभागिनी ।
10
लक्ष्यं सौभाग्यजं गर्वमुर्वश्याः संहृतं यया ॥ ६६ ॥

इति पृष्टस्तया स्वैरं तामूचे चित्रकोविदः ।
भूपतिर्बिम्बिसारोऽयं सारं सुकृतसंपदाम् ॥ ६७ ॥

शौर्यरूपतुलारोहे देवाः के नाकनायकाः ।
शङ्कां करोति नैवास्य मन्मथो वा मनोरथम् ॥ ६८ ॥

15
इत्युक्ते तेन सा तस्थौ भूपालन्यस्तलोचना ।
सहसैवाभिलाषेण नवीनाभिमुखीकृता ॥ ६९ ॥

अत्रान्तरे बिम्बिसारः स्वैरवेश्मनि निर्जने ।
कथान्ते गोपमवदत् किंचित्स्मितसिताधरः ॥ ७० ॥

D 567
श्रूयतां यन्मम सखे किंचिन्मनसि वर्तते ।
20
निर्यन्त्रमित्रस्वच्छन्दवादः कोऽपि सुधारसः ॥ ७१ ॥

वैशालिकैर्वरारोहा गणैः साधारणीकृता ।
रम्भोरूः श्रूयते कान्ता रम्भागर्भसमुद्भवा ॥ ७२ ॥

तत्प्रभावविनष्टाशैस्तेजस्विप्रणयोचिता ।
सा तैर्न दूषिताद्यापि मातङ्गैरिव पद्मिनी ॥ ७३ ॥

25
श्रवणादेव सानन्दमपर्युषितकौतुकम् ।
न करोति मनः कस्य तत्स्त्रीरत्नमयोनिजम् ॥ ७४ ॥

अभिलाषि मनस्तस्यां जातं मे सह चक्षुषा ।
तद्गुणश्रुतिधन्याय श्रोत्राय स्पृहयाम्यहम् ॥ ७५ ॥

इत्युक्ते भूमिपतिना गोपस्तं प्रत्यभाषत ।
30
भुजङ्गगणसंरुद्धः स राजन् मान्मथो निधिः ॥ ७६ ॥

अत्यल्पस्खलितं प्राप्य दुःसहापातदुर्गमः ।
एष ते विषमः पन्था दर्शितो विषमेषुणा ॥ ७७ ॥
लभते सा न निर्गन्तुं न युक्तं गमनं च ते ।
किमस्मिन् विरतोपाये वदाम्युभयसंशये ॥ ७८ ॥
इत्युक्तस्तेन नृपतिर्नोत्कण्ठाग्राहमत्यजत् । 5 D 569
विद्वांसोऽप्युचितां नीतिं न स्मरन्ति स्मरातुराः ॥ ७९ ॥
वैशालिकपुरीं यातो गोपेन सहितोऽथ सः ।
प्रविवेशान्यवेशेन मन्दिरं हरिणीदृशः ॥ ८० ॥
सा चित्रदर्शनेनैव दृष्ट्वा परिचितं दृशोः ।
नरनाथं सवैलक्ष्यलक्षणं क्षितिमैक्षत ॥ ८१ ॥ 10
लज्जानिरुत्तरे तस्याः कम्पव्यतिकरे परम् ।
रणन्ती रसना चक्रे स्वागतं नृपतेरिव ॥ ८२ ॥
विलोक्य धन्यतामानी तत्र चित्रे निजं वपुः ।
तां लावण्यनदीं राजा नयनाञ्जलिना पपौ ॥ ८३ ॥
लज्जावेशेन सुन्दर्यामाभिजात्येन भूपतौ । 15
आबद्धमौनयोः क्षिप्रं गोपस्तां सस्मितोऽवदत् ॥ ८४ ॥
अयं ते चित्रलिखिताकारध्यानावधानतः ।
व्यक्तं भक्तिविशेषेण देवः प्रत्यक्षतां गतः ॥ ८५ ॥
त्वयायं लिखितश्चित्रे त्वमनेन तु चेतसि ।
न जाने युवयोः को नु प्रयातः प्रेमदूतताम् ॥ ८६ ॥ 20
इत्यादिभिः कथाबन्धैः परिपूर्णप्रमोदयोः । D 571
यद्यदेव स्मरादिष्टं तत्तदास्वादतां गतम् ॥ ८७ ॥
घण्टारवाकुले लोके राजा प्रच्छन्नकामुकः ।
सप्तरात्रमनालोक्ये तस्थौ तद्भवने रहः ॥ ८८ ॥
लतेव पुष्पिता काले तस्माद्गर्भमवाप्य सा । 25
चक्रे विदितवृत्तान्तं तं लज्जावनता शनैः ॥ ८९ ॥
आसन्ने वेश्मविचये दत्वास्मै नृपतिर्ययौ ।
भाविपुत्रपरिज्ञानप्रत्ययादङ्गुलीयकम् ॥ ९० ॥
याते भास्वद्वपुषि नृपतौ संमते लोचनानां
सद्यः प्रोद्यद्विरहतिमिराक्रान्तिमीलन्मुखाब्जा । 30
साभूत्सायंतनतनुतरापारवाताभिभूता
शोकोच्छ्वासव्यतिकरवती हासहीना निशेव ॥ ९१ ॥

कपोलं पाणिपद्मेन संकल्पेन महीपतिम् ।
नवं तानवमङ्गेन वहन्ती निमिमील सा ॥ ९२ ॥
ततः कालेन कल्याणी प्रतिबिम्बोपमं पितुः ।
अजीजनत्सा तनयं विनयं साधुधीरिव ॥ ९३ ॥
D 573 5 वर्धमाने शनैस्तस्मिन् काले बिम्ब इवैन्दवे ।
बिम्बिसारस्य पुत्रोऽयमिति लोकेषु पप्रथे ॥ ९४ ॥
अपवादपरैस्तैस्तैस्तं प्रत्यनुचितैर्यदा ।
बाधन्ते शिशवः क्रीडाप्रसङ्गेऽमर्षसंयताः ॥ ९५ ॥
ततः सा प्रेषयामास पुत्रं विद्यार्जनोचितम् ।
10 वणिक्सार्थेन महता साङ्गुलीयं पितुः पदम् ॥ ९६ ॥
बिम्बिसारोऽपि संप्राप्य सदृशाकारमात्मजम् ।
हर्षदृप्तः परिष्वज्य चक्रे तस्य परिग्रहम् ॥ ९७ ॥
वृत्तान्ते विश्रुते तस्मिन्नाम्रपाल्याः सकौतुकैः ।
भिक्षुभिर्भगवान् पृष्टस्तत्कथामवदज्जिनः ॥ ९८ ॥
15 पुरे राजगृहे राजवल्लभोद्यानकानने ।
बभूव मालती नाम पूर्वमुद्यानपालिका ॥ ९९ ॥
सा कदाचित् प्रसादार्द्रं पुरः प्राप्तं यदृच्छया ।
प्रत्येकबुद्धं राजर्षिं चूतपुष्पैरपूजयत् ॥ १०० ॥
अयोनिजा नृपस्याहं पत्नी स्यामिति तत्र सा ।
20 प्रणिधानं पुरश्चक्रे तस्य चित्तप्रसादिनी ॥ १०१ ॥
D 575 पुण्यपुष्पफलभोगशालिनी
सैव दिव्यतनुराम्रपालिका ।
इत्युदारचरिता निशम्य ते
भिक्षवः सपदि विस्मयं ययुः ॥ १०२ ॥

25 इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
आम्रपाल्यवदानं नाम त्रिंशतितमः पल्लवः ॥



# २१ जेतवनप्रतिग्रहावदानम् ।

D 577

दृष्टं मुष्टिनिविष्टपारदकणाकारं नराणां धनं
धन्योऽसौ यशसा सहाक्षयपदं यद्यस्य विद्योतते ।
दीनानाथगणार्पणोपकरणीभूतप्रभूतश्रियः
पुण्यारामविहारचैत्यभगवद्बिम्बप्रतिष्ठादिभिः ॥ १ ॥ 5

श्रीमान् बभूव श्रावस्त्यां दत्तो नाम गृहाधिपः ।
सुतस्तस्य सुदत्तोऽभूदाकरः पुण्यसंपदाम् ॥ २ ॥

स बाल्य एवालंकारं याचकेभ्यः सदा ददौ ।
प्राग्जन्मवासनाभ्यासः कस्य केन निवार्यते ॥ ३ ॥

नित्यमाभरणत्यागात्परं पित्रा निवारितः । 10
नदीसमुद्धृतान्यस्मै संदेवान्यान्यदर्शयत् ॥ ४ ॥

निधिदर्शी स सर्वत्र पितरि त्रिदिवं गते ।
दीनानाथप्रदानेन बभूवानाथपिण्डदः ॥ ५ ॥

कृतदानः स कालेन पुत्रवान् पुत्रवत्सलः । D 579
अभूत् पुत्रविवाहार्थी कन्यान्वेपणयत्नवान् ॥ ६ ॥ 15

कन्यकां याचितुं कांचित् पुरं राजगृहं ततः ।
मधुस्कन्धाभिधं दक्षं ब्राह्मणं विससर्ज सः ॥ ७ ॥

आसाद्य मगधान् राजगृहं नगरमेत्य सः ।
महाधनं गृहपतिं ययाचे कन्यकां द्विजः ॥ ८ ॥

अनाथपिण्डदो नाम श्रावस्त्यामस्ति विश्रुतः । 20
तत्पुत्राय सुजाताय कन्यां देहीत्युवाच सः ॥ ९ ॥

सोऽब्रवीदेष संबन्धः परमोऽस्मत्कुलोचितः ।
वंशेऽस्माकं तु कन्यानां शुल्कमादीयते महत् ॥ १० ॥

शतं शतं रथाग्र्याणां गजाश्वाश्वतरस्य च ।
दासीनिचयनिष्कानां दीयतां यदि शक्यते ॥ ११ ॥ 25

इत्युक्ते तेन तं विप्रः सस्मितः प्रत्यभाषत ।
अनाथपिण्डदगृहे दास्ये शुल्कं तदल्पकम् ॥ १२ ॥

ब्राह्मणेनाखिले तस्मिन् कन्याशुल्के प्रतिश्रुते ।
तमादराद्गृहपतिर्भोजनाय न्यमन्त्रयत् ॥ १३ ॥

स भुक्त्वा विविधं तत्र भक्ष्यभोज्यमयन्त्रितः । 30 D 581
रात्रौ विसूचिकाक्रान्तश्चुक्रोश विपुलव्यथः ॥ १४ ॥

येऽन्नमश्नन्ति लौल्येन निशि निद्रासुखापहम् ।
जन्मकर्म कथं कुर्युः परलोकसुखाय ते ॥ १५ ॥
तत्याजाशुचिभीत्या तं गृहात्परिजनो बहिः ।
आस्पदं नैरपेक्ष्यस्य जात्या दासजनः शठः ॥ १६ ॥
5 शुभेन कर्मणा तस्य संप्राप्तस्तेन वर्त्मना ।
समौद्गल्यायनः शारिपुत्रः कारुण्यपेशलः ॥ १७ ॥
तं वंशस्य दलाग्रेण निर्लिख्यापि तथा मृदा ।
प्रक्षाल्य धर्ममादिश्य तौ तस्य ययतुः शनैः ॥ १८ ॥
सोऽपि चित्तं तयोरग्रे प्रसाद्य त्यक्तविग्रहः ।
10 चतुर्महाराजिकेषु देवेषु समजायत ॥ १९ ॥
तत्र विश्रवणादेशान्मर्त्यलोके निकेतने ।
स चक्रे शिबिरद्वारे पूजाधिष्ठानसंनिधिम् ॥ २० ॥
लेखविज्ञातसंबन्धनिश्चयोऽथ यथोदितम् ।
अनाथपिण्डदः शुल्कमादाय स्वयमाययौ ॥ २१ ॥
D 583 15 स संबन्धिगृहं प्राप्य ददर्शाश्चर्यकारिणीम् ।
शिखराकारराजार्हभक्ष्यसंभारसंपदम् ॥ २२ ॥
स विस्मयाद्गृहपतिं पप्रच्छ स्वच्छमानसः ।
भूरिभक्ष्योत्सवः कोऽयमपि राजा निमन्त्रितः ॥ २३ ॥
स तं बभाषे भगवान् बुद्धः संघपरिग्रहः ।
20 मया निमन्त्रितः संघे सोऽयं मम महोत्सवः ॥ २४ ॥
इति बुद्धाभिधानेन जातरोमाञ्चकण्टकः ।
इन्दुस्यन्दिरिवाक्लिन्नः सहसैव बभूव सः ॥ २५ ॥
अविदितपरमार्थे कस्यचिन्नाममात्रे
स्फुरति सहजभावः कोऽपि जन्मानुबन्धः ।
25 अभिनवघननादे व्यक्तहर्षाभिलाषः
स्पृशति ललितनृत्योद्वृत्तवृत्तिं मयूरः ॥ २६ ॥
सोऽवदद्वदनाम्भोजसंजाताभिनवद्युतिः ।
क एष भगवान् बुद्धः कश्च संघोऽभिधीयते ॥ २७ ॥
इति पृष्टो गृहपतिस्तेन प्रोवाच सस्मितः ।
30 अहो बत न जानीषे शास्तारं भुवनत्रये ॥ २८ ॥
D 585 संसारपाशभीतानां शरण्यं शरणैषिणाम् ।
जिनं यस्तं न जानाति स लोके वञ्चितः परम् ॥ २९ ॥

किं तेन मोहलीनेन विफलीकृतजन्मना ।
अज्ञानतरणोपायं वयो येन व्ययीकृतम् ॥ ३० ॥
गोतमो भगवान् बुद्धः शाक्यराजकुलोद्भवः ।
संबुध्यानुत्तरं सम्यक्संबोधिमनगारिकः ॥ ३१ ॥
पश्चात् प्रव्रजितानां च तस्यैवानुग्रहात्परम् । 5
भिक्षूणां गतरागाणां समूहः संघ उच्यते ॥ ३२ ॥
स एष बुद्धप्रमुखः संघः स्वकुशलैषिणा ।
मया पुण्यपणं प्राप्य प्रणयेन निमन्त्रितः ॥ ३३ ॥
इति तद्वचनं श्रुत्वा तत्स्मृत्वानाथपिण्डदः ।
बुद्धालम्बनभावेन निशि निद्रां समाययौ ॥ ३४ ॥ 10
रजन्यां यामशेषायां समाकृष्ट इवोत्सुकः ।
प्रभातमिति स ज्ञात्वा पुरद्वारेण निर्ययौ ॥ ३५ ॥
शिबिकाद्वारमासाद्य संप्राप्त इव देवताम् ।
मधुस्कन्धेन निर्दिष्टं श्रेयःपन्थानमाप्तवान् ॥ ३६ ॥
भगवांस्तं ततः प्राप्य स तृष्णार्त इवामृतम् । 15 D 587
बभूवानुपमास्वादं प्रमोदामोदनिर्वृतः ॥ ३७ ॥
तं दृष्ट्वा सादरं दूरात् छायातरुमिवाध्वगः ।
अवाप गतसंतापः श्रान्तिं विश्रान्तिशीतलाम् ॥ ३८ ॥
तस्य तद्दर्शनेनैव विमलाभिगतं मनः ।
शरत्समागमेनेव घनध्वान्तोज्झितं नभः ॥ ३९ ॥ 20
स कोऽपि पुण्यशीलानामनुभावः प्रसादिनाम् ।
भवन्ति यत्प्रसादेन निर्विघ्नाश्चित्तवृत्तयः ॥ ४० ॥
सोऽचिन्तयदहो मोहविहीनस्य हि मे तथा ।
अनुच्छेदविकारोऽयं जातः प्रशमसंपदः ॥ ४१ ॥
वञ्चितोऽस्मि न यत्पूर्वं दृष्टोऽयं भगवान् मया । 25
नाधन्यानामियं याति मूर्तिर्लोचनगोचरम् ॥ ४२ ॥
अमृतमधुरोदारा दृष्टिर्द्युतिः शशिपेशला
तरुणकरुणायत्ता वृत्तिः प्रसादमयी मतिः ।
अयमतिशयं प्रत्यासन्नः करोति विरागतां
विगतरजसां निःसंसारः प्रियोऽपि परिग्रहः ॥ ४३ ॥ 30
इति चित्तप्रसादेन चिन्तयन्नुपसृत्य सः । D 589
विदधे तस्य सानन्दः पादपद्माभिवन्दनम् ॥ ४४ ॥

भगवानपि तत्प्राप्तिप्रसादानन्दलक्षणम् ।
उवाह वदनच्छायं पूर्णकारुण्यपूरितम् ॥ ४५ ॥
दृष्टिमाश्वासजननीं काममपि तस्य सः ।
विससर्जोज्ज्वलां जन्मरजःशुद्ध्यै सुधानदीम् ॥ ४६ ॥
5 अथास्य भगवान् भद्रां विदधे धर्मदेशनाम् ।
चतुर्णामार्यसत्यानां प्रतिभावविधायिनीम् ॥ ४७ ॥
स शासनाद्धि संव्यस्तसमस्तक्लेशसंततिः ।
निजं जन्म निवेद्यास्मै प्रणतस्तमभाषत ॥ ४८ ॥
अतिक्रान्तोऽस्मि भगवन् भवन्तं शरणं गतः ।
10 विपन्नवासनाभ्यासः संसारे न रमे परम् ॥ ४९ ॥
D 591 करोत्यकुशलं दूरे शुभमाशु प्रयच्छति ।
सूचयत्युचिताचारं महतामवलोकनम् ॥ ५० ॥
सुखार्हं त्वद्विहाराय विहारं परमादरात् ।
रत्नसारपुरोदारं स्वपुरं कारयाम्यहम् ॥ ५१ ॥
15 करोतु तत्र भगवान् सततं स्थित्यनुग्रहम् ।
धनैरासेवितोऽस्माभिः सपर्यापरिचर्यया ॥ ५२ ॥
इत्यर्थनां तथेत्यस्य भगवान् प्रत्यपद्यत ।
प्रणयिप्रार्थनाभङ्गप्रगल्भा न हि साधवः ॥ ५३ ॥
भगवन्तमथामन्त्र्य श्रावस्तीं स पुरीं ययौ ।
20 तदादिष्टेन सहितः शारिपुत्रेण भिक्षुणा ॥ ५४ ॥
तत्र जेतकुमारेण हिरण्यार्घेण भूयसा ।
दत्तं काञ्चनमादाय विहारं तमसूत्रयत् ॥ ५५ ॥
भक्त्युत्साहादथारम्भकृतसाहाय्यकः सुरैः ।
विहारं त्रिदिवाकारं चकारानाथपिण्डदः ॥ ५६ ॥
25 तत्र जेतकुमारोऽपि भक्त्या भगवतः परम् ।
यशःपुण्यप्रतिष्ठायै विदधे द्वारकोष्ठकम् ॥ ५७ ॥
अथ तीर्थ्यास्तमालोक्य विहारारम्भमद्भुतम् ।
सापवादविवादेन चक्रुर्द्वेषाकुलाः कलिम् ॥ ५८ ॥
रक्ताक्षप्रमुखस्तेषां मात्सर्यात्क्षुद्रपण्डितः ।
30 सपक्ष इव कृष्णाहिश्चकितः पुरतः सदा ॥ ५९ ॥
D 593 रुद्धे विहारसंभारे तेन वादजयावधि ।
अनाथपिण्डदगिरा शारिपुत्रः समाययौ ॥ ६० ॥

रक्ताक्षोऽथ तमाहूय प्रभावोत्कर्षदर्शने ।
इन्द्रजालबलोत्फुल्लं सहकारमदर्शयत् ॥ ६१ ॥
शारिपुत्रप्रभावोत्थैर्विपुलैस्तन्मुखानिलैः ।
उन्मूलितः शकलतां तीर्थ्योत्साह इवाप सः ॥ ६२ ॥
रक्ताक्षविहितां फुल्लकमलां पद्मिनीं ततः । 5
पङ्कशेषां द्विपश्चक्रे शारिपुत्रविनिर्मितः ॥ ६३ ॥
रक्ताक्षवक्षोनिक्षिप्तः सप्तशीर्षमहोरगः ।
शारिपुत्रेण निक्षिप्तस्तार्क्ष्यपक्षाग्रमारुतैः ॥ ६४ ॥
तदाहूतोऽथ वेतालः शारिपुत्रेण कीलितः ।
प्रेरितो मन्त्रवीर्येण रक्ताक्षं हन्तुमुद्ययौ ॥ ६५ ॥ 10
वेतालाभिहतत्रासान्नश्यन्मानमदज्वरः ।
शरणं पादपतितः शारिपुत्रं जगाम सः ॥ ६६ ॥
रक्ताक्षस्तेन भङ्गेन शरण्यं शरणं गतः ।
प्रव्रज्यायां वीतरागः शुद्धां बोधिमवाप्तवान् ॥ ६७ ॥
तीर्थ्यास्त्वन्ये परिद्वेषक्रोधपारमितांशवः । 15 D 595
तत्र कर्मकरव्याजात्तस्थुर्भिक्षुवधोद्यताः ॥ ६८ ॥
तेऽथ धर्मद्रुहः काले शारिपुत्रेण लक्षिताः ।
तद्दृष्टिपातमात्रेण बभूवुर्मैत्रमानसाः ॥ ६९ ॥
आशयानुशयं धातुं प्रकृतिं च विचार्य सः ।
धर्मदेशनया तेषां दिदेशानुत्तरां दशाम् ॥ ७० ॥ 20
अथ तस्य विहारस्य निर्विघ्नारम्भकर्मणि ।
अनाथपिण्डदं प्राह शारिपुत्रः स्मिताननः ॥ ७१ ॥
विहारसूत्रपातस्य तुल्य एव क्षणे महान् ।
हैमो विहारः संवृत्तस्तुषिते देवसद्मनि ॥ ७२ ॥
एतदाकर्ण्य संजातप्रसादद्विगुणान्तरः । 25
हेमरत्नवरागारं विहारं समकारयत् ॥ ७३ ॥
विभवैरथ राजार्हैः पथि तेनोपकल्पितैः ।
विज्ञप्तस्त्रिदिवैः सार्धमाययौ भगवान् जिनः ॥ ७४ ॥
तदागमनहर्षेण प्रसन्ने भुवनत्रये ।
अनाथपिण्डदस्तस्मै वारिधारामपातयत् ॥ ७५ ॥ 30
तस्मिन् यदा न प्रदेशे वारिधारा पपात सा । D 597
तदा भगवतो वाक्यात् त्वरितं पतितान्यतः ॥ ७६ ॥

तं दृष्ट्वा कौतुकात् पृष्टो भिक्षुभिर्भगवान् पुनः ।
उवाच श्रूयतामेतद् वारिस्तम्भस्य कारणम् ॥ ७७ ॥

अनेन पूर्वबुद्धेभ्यो अस्मिन्नेवेदमास्पदम् ।
प्रतिपादितमित्येषा वारिधारान्यतश्च्युता ॥ ७८ ॥

5 अनेनैव पुरा सम्यक्संबुद्धाय विपश्यिने ।
अयमेव वरारामप्रदेशः प्रतिपादितः ॥ ७९ ॥

बुद्धाय शिखिने प्रादात् पुष्यजन्मन्ययं पुनः ।
ततो ददौ विश्वभुवे जिनाय रघुजन्मनि ॥ ८० ॥

भवदत्ताभिधो भूत्वा ककुच्छन्दाय दत्तवान् ।
10 ददौ बृहस्पतिर्भूत्वा कनकाख्याय तायिने ॥ ८१ ॥

काश्यपाय पुनश्चायं प्रादादाषाढजन्मनि ।
अनेनैवाधुना मह्यं देशोऽयं प्रतिपादितः ॥ ८२ ॥

कालेन सुधनाख्योऽयं मैत्रेयाय प्रदास्यति ।
सत्त्ववान् क्षान्तिशीलत्वान्निधानान्येष पश्यति ॥ ८३ ॥

D 599 15 पुनश्चायं गृहपतिर्भूत्वा हेमप्रदाभिधः ।
चक्रे प्रत्येकबुद्धस्य संस्कारं परिनिर्वृतौ ॥ ८४ ॥

रत्नकुम्भे तदस्थीनि धृत्वा तत्प्रणिधानतः ।
अधुना रत्नकोशार्हः संजातोऽयं सुवर्णभाक् ॥ ८५ ॥

श्रुत्वेति शास्तुर्वचनाभिधानं
20 ते भिक्षवः सारमिवामृतस्य ।
कर्तुः प्रतिष्ठार्जितपूर्णपुण्य-
पुष्पाधिवासेन भृशं ननन्दुः ॥ ८६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
जेतवनप्रतिग्रहावदानं नाम एकविंशः पल्लवः ॥

# २२ पितापुत्रसमादानम् ।

D 601

अहो महार्हं मणिवन्महत्त्वं
भव्या भजन्ते गुणगौरवेण ।
विना गुणं यद्वपुषां गुरुत्वं
स्थूलोपलानामिव निष्फलं तत् ॥ १ ॥ 5

श्रीमान् पुरा शाक्यपुरे नरेन्द्रः
शुद्धोदनः शुद्धिसुधानिधानम् ।
वैराग्ययोगात्सुगतत्वमाप्तं
स्मृत्वा सुतं सोत्सुकतामवाप ॥ २ ॥

सोऽचिन्तयत्पुण्यगुणाधिवासं 10
सरस्वतीवाससरोरुहश्रि ।
मनःप्रसादस्य विलाससौधं
द्रक्ष्यामि सूनोर्वदनं कदाहम् ॥ ३ ॥

एहीति तद्दर्शनलालसेन
ये ये मया जेतवनं विसृष्टाः । 15
ते ते तदालोकननिर्निमेषं D 603
तत्रैव तिष्ठन्त्यमृतं पिबन्तः ॥ ४ ॥

संप्रेषितस्तस्य मया स नाययौ
योऽप्यात्मतुल्यः प्रणयादुदायी ।
स लेखहस्तस्त्रिदिवाभिरामे 20
तत्रैव लेखत्वमिवाभियातः ॥ ५ ॥

संदेशवाक्यं प्रहितं मया यत्
तद्विस्मृतं तस्य मुखेन नूनम् ।
सर्वो हि नाम स्वहिताभिलाषी
धत्ते परार्थे किल शीतलत्वम् ॥ ६ ॥ 25

विलोकनेनैत्य निषिञ्च्य तूर्णं
पीयूषपूरेण ममाङ्गसङ्गम् ।
निःसङ्गतो विश्रमतां मुहूर्तं
दयाविधेयः कुरु बन्धुकार्यम् ॥ ७ ॥

इत्येतदाकर्ण्य कथां स कुर्यात् 30
क्षणं विलम्बं मम दर्शनेऽपि ।

तच्चेतसः पल्लवपेशलस्य
न हि स्वभावः प्रणयावभङ्गः ॥ ८ ॥

मनोरथेनेति पुरः प्रयाते
तद्दर्शनायेव धराधिनाथे ।
5 प्रव्रज्यया व्यञ्जिततत्प्रसादः
समाययौ हर्षरसादुदायी ॥ ९ ॥

दृष्ट्वा तमानन्दविपूर्णमानसं
प्रव्रज्यया तत्सदृशानुभावम् ।
उत्कण्ठितः कुण्ठितधैर्यवृत्तिः
10 संमोहमूर्च्छां नृपतिः प्रपेदे ॥ १० ॥

स लब्धसंज्ञः शिशिरैः पयोभिः
पप्रच्छ तं किं नु समेष्यतीति ।
सोऽप्यब्रवीद्देव दिनैर्भवन्त-
मसंभृतैः सादरमेष्यतीति ॥ ११ ॥

15 ततः प्रयातेषु दिनेषु केषु
व्योम्ना शनैर्भिक्षुगणानुयातः ।
सहाययौ नाकसदां निकायैः
सर्वार्थसिद्धैर्भगवान् कुमारः ॥ १२ ॥

द्युसुन्दरीपाणिसरोजमुक्त-
20 मन्दारमालाकलितश्चकाशे ।
स्वर्गीयगङ्गास्फुटफेनकूट-
विलासहासाङ्क इवामराद्रिः ॥ १३ ॥

संघट्टभिन्नाभ्रसखैः स्खलद्भिः
सशब्दजाम्बूनदकिङ्किणीकैः ।
25 बभुर्विमानैः ककुभां मुखानि
भक्त्येव शास्तुर्विहितस्तवानि ॥ १४ ॥

निरन्तरैरन्तरिवार्कतारैः
सुरैः सविद्याधरसिद्धसंघैः ।
पर्याप्तसंसक्तसितातपत्रै-
30 र्व्याप्तः समाप्तिं गगनं जगाम ॥ १५ ॥

तं सर्वलोकोपकृतिप्रपन्नं
सर्वाकृतिं सर्वमयावभासम् ।
समापतन्तं नभसोऽथ दिग्भ्यः
क्षितेश्च सर्वे ददृशुः क्षणेन ॥ १६ ॥

प्रहर्षराशिं जनलोचनानां 5
पुण्यप्रमाणं सुकृतोत्सवानाम् ।
लोकस्तमालोकनिधिं विलोक्य
समुल्लसन्नुच्छलिताद्भुतोर्मिः ॥ १७ ॥

आश्चर्यभूतं रुचिरप्रभाव- D 609
मुदायिना सूचितमाकलय्य । 10
जगद्गुरुं भूमिपतिः कुमारं
कृताञ्जलिस्तं प्रणनाम दूरात् ॥ १८ ॥

अथावतीर्यार्यजनानुयातः
संपूज्यमानः प्रणयेन राज्ञा ।
स्फीतप्रभाभासितदिग्विभागां 15
न्यग्रोधिनीं रत्नभुवं विवेश ॥ १९ ॥

हेमासनं शासनसंनिविष्ट-
लोकत्रयः संगतपादपीठम् ।
स तत्र रत्नाङ्कुरचित्रपत्रं
भास्वद्वपुर्मेरुमिवारुरोह ॥ २० ॥ 20

तन्मानसेन्दोर्नयनामृतौघं
मनोरथप्रार्थनयोपयातम् ।
विलोकयन्निर्वृतिनिर्निमेषः
क्षणं क्षितीशस्त्रिदशत्वमाप ॥ २१ ॥

स तं जगादाश्रुनिरुद्धकण्ठः 25
सोत्कर्षहर्षाकुलितं कुमारम् ।
हाराग्ररत्नप्रतिबिम्बसक्तं D 611
प्रवेशयन् प्रीतिरसादिवान्तः ॥ २२ ॥

संतोषशीताचलवत् स्वभावात्
सर्वे रमन्ते कुशलस्थलीषु । 30
कुतस्त्वयास्माकमयं तु कस्मात्
सत्सूपकारी विरहोपदेशः ॥ २३ ॥

स्नेहात्प्रमोदाद्गुणगौरवाच्च
धीर्धावतीयं त्वयि मे प्रसह्य ।
आलिङ्गनाय स्थिरसंगमाय
पादप्रणामाय च तुल्यमेव ॥ २४ ॥
5 यद्वस्तु किंचिद्गदितं मया तत्
श्रोतव्यमेव प्रणयोपरोधात् ।
गुणोज्झितं वा विरसक्रमं वा
न स्नेहमोहस्य भवत्यवाच्यम् ॥ २५ ॥
प्रत्यर्णरत्नप्रतिबिम्बितार्क-
10 प्रौढप्रभाप्रावरणान्यमूनि ।
त्वं हेमहर्म्याणि विहाय कस्मात्
विगाहसे शून्यवनान्तराणि ॥ २६ ॥
D 613 कान्ताकरावर्जितहेमकुम्भ-
सत्सौरभाम्भःप्रवराभिषिक्तः ।
15 एकः कथं स्नासि विकासिपांशु-
संतप्ततोयासु मरुस्थलीषु ॥ २७ ॥
गण्डस्थलात् कुण्डलरत्नकान्ति
किं लम्बितं मण्डनमेव वेत्सि ।
कस्मादकस्मात्तव निःसुखस्य
20 न चन्दनं नन्दनमिन्दुशुभ्रम् ॥ २८ ॥
महाविताने शयने नृपार्हे
शेषे न किं शेषविशेषशुभ्रे ।
लक्ष्मीनवालिङ्गनभोगयोग्या
कथं तनुस्ते सहते कुशय्याम् ॥ २९ ॥
25 कान्तास्मितोर्मिप्रतिमांशुकार्हं
किं चीवरस्योचितमेतदङ्गम् ।
पाणौ च लीलाकमलास्पदेऽस्मिन्
पात्रं कथं ते प्रियमद्य जातम् ॥ ३० ॥
अयं विहारस्तव कँण्ठपीठः
30 सोत्कण्ठकान्ताभुजबन्धनार्हः ।
D 615 संभोगलक्ष्मीक्षपितप्रमोदः
करोत्यकस्मात् प्रणयावभङ्गम् ॥ ३१ ॥

रूपं विलक्षीकृतपुष्पचापं
मत्तेभकुम्भोच्चकुचा विभूतिः ।
रतेर्विलासोपवनं वयश्च
केनासमस्ते कलितो विरागः ॥ ३२ ॥
श्रुत्वेति तं शीलनिधिर्बभाषे		5
शशाङ्कलेखाललितस्मितेन ।
संक्रान्तनानानृपरक्तरागां
कुर्वन्नलक्षामिव राजलक्ष्मीम् ॥ ३३ ॥
राजन् जरारोगहतेव न स्या-
त्तरङ्गलोला यदि जीववृत्तिः ।		10
तत्कस्य न स्यादनिशं प्रहर्ष-
पीयूषवर्षी विषयाभिलाषः ॥ ३४ ॥
शमामृतास्वादनसुस्थिराणा-
मपातनं शून्यवनान्तभूमेः ।
विभूतिलीलामदविह्वलानां		15
हर्म्याणि पर्यन्तनिपातनानि ॥ ३५ ॥



सकुङ्कुमैः स्नान्ति नृपाः पयोभिः
सरागतां यैः सततं प्रयान्ति ।
संतोषशीलस्तु मनःप्रसाद-
शुद्धाम्बुधौता विमलीभवन्ति ॥ ३६ ॥		20
श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणाकुलानां
परोपकारेण न चन्दनेन ॥ ३७ ॥
एतानि मोहाहतवल्लभानि		25
संसक्तमुक्तांशुसितस्मितानि ।
सतां न भोग्यानि भवन्ति भूभृ-
दुच्छिष्टशिष्टानि विभूषणानि ॥ ३८ ॥
रागातुराणां रिपुतापितानां
निद्रा धनध्यानवतां न नाम ।		30
शय्यासु सुस्पर्शवतीषु राज्ञां
सर्वत्र शान्तः सुखमेव शेते ॥ ३९ ॥

निर्मोककान्तेन वरांशुकेन
भुजङ्गवृत्तिर्न तु चीवरेण ।
D 619 पात्रं पवित्राणि समाप्लुतानि
पीयूषमैत्राण्यशनानि सूते ॥ ४० ॥
5 छत्राणि वक्रं भृशमप्रकाशं
मनोविलोलं व्यजनानिलौघाः ।
संसक्तजाड्यं हृदयं नृपाणां
कुर्वन्ति हारा हरिचन्दनार्द्राः ॥ ४१ ॥
वियोगरोगानुगता विभूतिः
10 कान्ताः क्षणान्ता विरसो विलासः ।
यस्मिन्नपायः सततानुशायी
स कस्य भोगः सुभगोपयोगः ॥ ४२ ॥
जाड्यं सजृम्भं जनयत्यजस्रं
तनोति तृष्णाभ्रममोहमूर्च्छाः ।
15 करोत्यसह्यं सरसत्वमेव
भोगोपभोगः प्रसभप्रयोगः ॥ ४३ ॥
यदा सुखश्रीर्नवचन्द्रलेखा
प्रभातपुष्पाण्यपि यौवनानि ।
कर्मोर्मिमालाग्रहणं शरीरं
20 तदा ममायं गमितोऽनुरागः ॥ ४४ ॥
D 621 सचामराः सध्वजपुञ्जपट्टाः
सवाजिवाला द्विपकर्णतालाः ।
स्वभावलोलाः किल राजलक्ष्म्यः
सर्वे विलासाः क्षणभङ्गसङ्गाः ॥ ४५ ॥
25 उक्त्वेति तत्तत्कुशलाय राज्ञ-
श्चित्तप्रसादं परमं विधाय ।
स शान्तिकल्लोलसुधाप्रवाहं
किरन् दृशा पार्षदमाल्लुलोके ॥ ४६ ॥
मनीषिणां शाक्यकुलोद्गतानां
30 सप्तायुतानि प्रतिपाद्य धर्मम् ।
चक्रे सहस्राणि च सप्त तत्र
संप्राप्तपर्याप्तविशेषभाञ्जि ॥ ४७ ॥

शुक्लोदनाद्यैः कुशलोपपन्नैः
गणेऽथ तत्तुल्यसहस्रसंख्यैः ।
द्रोणोदनाद्यैरमृतोदनाद्यै-
श्चित्तप्रसादः सुमहानवाप्तः ॥ ४८ ॥

केचिद्ययुः श्रावकबोधियुक्त- 5
प्रत्येकबोधौ निरताश्च केचित् ।
सम्यक् तथानुत्तरबोधिसक्ताः D 623
परे बभूवुर्गगनप्रसन्नाः ॥ ४९ ॥

स्रोतःपरिप्राप्तफलं ततोऽन्ये
सकृत्तथागामिफलं तथान्ये । 10
अन्येऽप्यनागामिफलं तदापु-
रर्हत्फलं क्लेशविमुक्तिमन्ये ॥ ५० ॥

एकस्तु तत्रार्जितपापशाप-
स्तमःसमूहोपहितप्रमोहः ।
मायेयमित्याह हसन् जनानां 15
सत्यस्थितिं संसदि देवदत्तः ॥ ५१ ॥

नृपं तु वात्सल्यनिलीनमेव
पुत्रोदयात्प्रत्युपजातदर्पम् ।
मौद्गल्यभिक्षुर्जिनशासनेन
महर्द्धिभिर्वीतमदं चकार ॥ ५२ ॥ 20

दृष्ट्वापि राजा भगवत्प्रभावं
नात्यद्भुतं पौरुषमेव मेने ।
अभ्यासलीनानि जनस्य नूनं
सोत्कर्षकृत्यानि न विस्मयाय ॥ ५३ ॥

अथापरेद्युर्भगवान् सुरेन्द्र- 25 D 625
संपादिते हेममहाविमाने ।
सुमेरुशीर्ष्णीव समानकान्तौ
सिंहासने रत्नमये न्यषीदत् ॥ ५४ ॥

ब्रह्मेन्द्रमुख्येषु ततः सुरेषु
तत्रोपविष्टेषु पृथुप्रभेषु । 30
बभुस्तदुष्णीषशिखाविलासै-
श्चन्द्रांशुमालाजटिला इवाशाः ॥ ५५ ॥

अन्योन्यसंघट्टविलोलहारै-
धनावहारैस्त्रिदशैर्विशद्भिः ।
निरन्तरां तां भुवमेत्य राजा
द्वारेषु मार्गान्न चतुर्षु लेभे ॥ ५६ ॥

5 सम्भ्रमैस्तत्र कुबेरमुख्यै-
र्निवार्यमाणाभिमतप्रवेशः ।
विच्छायवक्त्रः स्वलिताभिधायी
भूभृत्परं निष्प्रतिभो बभूव ॥ ५७ ॥

प्रवेशितस्तैर्जिनशासनेन
10 कदाचिदासाद्य तदग्रभूमिम् ।
D 627 शुद्धोदनस्तु प्रणिपत्य मूर्ध्ना
चित्तप्रसादेन पुरोऽस्य तस्थौ ॥ ५८ ॥

शास्ता तु तस्मै चतुरार्यसत्य-
प्रबोधिकां धर्मकथां दिदेश ।
15 ज्ञानेन या विंशतिशृङ्गमस्य
सत्कायदृग्भूधरमप्यभाङ्क्षीत् ॥ ५९ ॥

ततः स गत्वा कृतकृत्यजन्मा
शुक्लोदनं प्राप्य भजस्व राज्यम् ।
स्वस्यात्रतीत्तं भगवत्प्रदिष्टं
20 तच्छासनं मोदयितुं न राज्यम् ॥ ६० ॥

द्रोणोदने राज्यपराङ्मुखेऽपि
वैराग्ययोगादमृतोदने च ।
जग्राह शुद्धोदनसंप्रदिष्टां
तां राजलक्ष्मीमथ भद्रकाख्यः ॥ ६१ ॥

25 राजार्हभोगैरथ पूजयित्वा
जिनं जनेशः शुचिसंप्रणीतैः ।
न्यग्रोधधाम प्रतिपाद्य चास्मै
शुद्धोदनं शुद्धमनोरथोऽभूत् ॥ ६२ ॥

D 629 द्रोणोदनस्यापि सुतौ युवानौ
30 राजाज्ञया प्रेरणया च मातुः ।
एकस्तु यः प्रव्रजितोऽनिरुद्धः
परो महान्नाम गृही बभूव ॥ ६३ ॥

अथाभवच्चेतसि भद्रकस्य
　राज्ञो विरक्तस्य वनाभिलाषः ।
विवेकभाजां प्रशमप्रवृत्तं
　नवापि लक्ष्मीर्न मनो रुणद्धि ॥ ६४ ॥

ततः समाहूय स देवदत्तं　5
　राज्याभिषेकप्रतिपन्नचित्तम् ।
उवाच मे प्रव्रजनस्य कालः
　समागतः किं भवताभिधेयम् ॥ ६५ ॥

तं प्रत्युवाचात्तविवेकदम्भः
　सुसंवृतः संसदि देवदत्तः ।　10
राजन्न राज्येऽस्ति ममाभिलाषः
　प्रव्रज्यया त्वत्सदृशो भवामि ॥ ६६ ॥

श्रुत्वेति राजा कुटिलस्य तस्य
　मिथ्याविनीतस्य कदर्थवाक्यम् ।
उदीरितं शाक्यगणस्तवायं　15　D 631
　संकल्पसाक्षीति हसन्नुवाच ॥ ६७ ॥

अथार्थतापोपहतः प्रदध्यौ
　भोगानुरागादिति देवदत्तः ।
मया किमेतदविपातमुक्तं
　भजेत वा प्रव्रजितोऽपि राज्यम् ॥ ६८ ॥　20

राज्यं समुत्सृज्य निजं व्रजन्तः
　शाक्यं कुमाराः सह भद्रकाद्याः ।
शुद्धोदनं निर्ययुरार्यवृत्त-
　प्रीतिं पुरस्कृत्य रथैर्द्विपैश्च ॥ ६९ ॥

व्रजत्सु सर्वेष्वथ देवदत्तः　25
　किरीटसक्तं पृथुपद्मरागम् ।
जहार रक्ताक्तमिवामिषार्थी
　श्येनः प्रभापल्लविताम्बरार्कम् ॥ ७० ॥

नैमित्तिकैरुक्तमथास्य लक्ष्म
　दृष्ट्वा तदुग्रं नरकप्रयाणम् ।　30
चित्तं सदोषं किल दुर्निमित्तं
　निमित्तमन्यत् पुनरुक्तमेव ॥ ७१ ॥

D 633

कोकालिखण्डोत्कटमोरकाणां
तिथ्यादिनाम्नां मददुर्मदानाम् ।
संसूचितान्यत्यधिकानि तत्र
तथाविधानैर्बहुलक्षणानि ॥ ७२ ॥

5

भूपप्रमोदादथ भद्रकोऽपि
तैर्देवदत्तप्रमुखैः सहैव ।
प्रव्रज्यया चीवरपात्रयोगात्
चकार वैराग्यमयीमिव क्ष्माम् ॥ ७३ ॥

राज्ञस्तथा राजकुमारकाणा-
10
मुत्सृष्टहाराङ्गदकुण्डलानाम् ।
साम्नो विरागादवतार्य तेषां
केशानुपाली किल कल्पकोऽभूत् ॥ ७४ ॥

मूर्खः स नीचोऽपि जिनाज्ञयैव
प्रव्रज्यया पूज्यतरो बभूव ।
15
चित्तप्रसादस्य परस्य मन्ये
न कारणं पण्डितता न जातिः ॥ ७५ ॥

सामीचिकायामथ भद्रकोऽपि
ज्ञात्वा नृपः पार्षदिकं तमेनम् ।
D 635
नीचस्य पादौ कथमस्य वन्दे
20
महीपतिः सन्निति निश्चलोऽभूत् ॥ ७६ ॥

तमब्रवीदस्खलिताभिमानं
विकल्पभिन्नं भगवान् विहस्य ।
प्रव्रज्यया मोहमहानुबन्धी
संत्यज्यते जातिमयोऽभिमानः ॥ ७७ ॥

25
श्रुत्वेति राज्ञा सह राजपुत्रैः
कृते प्रणामे पृथिवी चकम्पे ।
न देवदत्तः परुषाभिधायी
पदौ ववन्दे भगवद्गिरास्य ॥ ७८ ॥

कम्पात् क्षितेर्विस्मितमानसेन
30
पृष्टस्ततो भिक्षुगणेन शास्ता ।
उवाच राजा किल कल्पकस्य
जन्मान्तरेऽप्यस्य कृतः प्रणामः ॥ ७९ ॥

पुरा युवा काशिपुरे विलोक्य
भद्राभिधानां गणिकां दरिद्रः ।
सेवां व्यधात् सुन्दरकस्तदास्यै
रागो हि सर्वव्यसनोपदेष्टा ॥ ८० ॥

तया विसृष्टः कुसुमोच्चयाय 5 D 637
पुनः पुनर्भृङ्ग इवाधिकार्थी ।
तत्सङ्गमानङ्गमनोरथेन
श्रान्तः स बभ्राम वनान्तरेषु ॥ ८१ ॥

अत्रान्तरे श्रान्ततरः क्षितीशः
प्राप्तो वनान्तं मृगयारसेन । 10
तं ब्रह्मदत्तः प्रसमीक्ष्य गीतं
तस्याशृणोच्छिन्नतनुर्लताभिः ॥ ८२ ॥

नवनवकुसुमाशया किमेवं
मधुकर तापहतोऽसि गच्छ तूर्णम् ।
विकसितकमलाननाब्जिनी सा 15
भवति हि संकुचिता दिनावसाने ॥ ८३ ॥

तस्या हि गीतं नृपतिर्निशम्य
स्मितप्रभाघट्टितहारकान्तिः ।
उवाच तं तीव्रकरार्कतापः
कोऽयं सखे गीतरसाभियोगः ॥ ८४ ॥ 20

सोऽप्यब्रवीद्भूमिपते न नाम
तप्तो रविस्तप्ततरस्तु कामः ।
स्वकर्मदुःखानि विहन्ति लोके D 639
न ग्रीष्मदग्धानि मरुस्थलानि ॥ ८५ ॥

इत्यर्थवद्वाक्यगुणार्पणेन 25
स भूपतेर्वल्लभतामवाप ।
संवादसंस्पर्शसुभाषितं हि
केषां च सत्कारपदं न याति ॥ ८६ ॥

तेनाथ राजा विजने श्रमातुरः
शीतोपचारैरपनीततापः । 30
प्रीत्या तमादाय ततः सहैव
स्वराजधानीमगमत् कृतज्ञः ॥ ८७ ॥

तत्रास्य जीवप्रद इत्युदन्त-
संतोष संपूरितचित्तवृत्तिः।
राज्यार्धदानाभिमुखः स तस्थौ
चित्तानुवृत्तस्य किमस्य देयम्॥ ८८॥

5 राज्यार्धदानप्रसृतेऽथ तस्मिन्
नाचिन्तयत् सुन्दरकः कृपायाम्।
भद्रां विना राज्यसुखेन किं मे
धन्यो हि तत्प्रीतिसुधाभिषिक्तः॥ ८९॥

D 641 मह्यं न राज्याद्यपि रोचतेऽर्ध-
10 मखण्डिताल्पापि हि शोभते श्रीः।
एकार्थयोगे हि सदा विवादः
द्वयोर्हि भोगैः कलिरेव मूर्तः॥ ९०॥

तस्मान्नृपं कुण्ठमहं निपात्य
समस्तराज्येन भवामि पूर्णः।
15 क्षणं विचिन्त्येत्यनुतापतप्तः
तीव्रं मनः स्वस्य पुनः प्रदध्यौ॥ ९१॥

किं चिन्तितं निन्द्यपरं मयैतत्
कोऽयं प्रकारः खलु तीक्ष्णतायाः।
कृतघ्नसंकल्पकलङ्कलेपा-
20 दहो नु लज्जा निजचेतसोऽपि॥ ९२॥

स्वस्त्यस्तु राज्याय नमः सुखेभ्यः
संमोहमाता क्षमतां च लक्ष्मीः।
येषामनास्वादितचिन्तिताना-
मेवंविधा धीः प्रथमः स्वभावः॥ ९३॥

25 भ्रमं विधत्ते विदधाति मूर्च्छां
निपातयत्येव तमस्तनोति।
D 643 आघ्रातमात्रैव करोति पुंसा-
महो विनाशं विषवल्लरी श्रीः॥ ९४॥

चिरं विचिन्त्येति स जातचित्तः
30 प्रत्येकबोधिर्विमलः प्रभाते।
अभ्यर्थ्यमानोऽपि नरेश्वरेण
राज्यं न जग्राह निवृत्ततृष्णः॥ ९५॥

प्रत्येकबुद्धत्वमवाप्तमेनं
　　कालेन दृष्ट्वा नृपतिर्महर्द्धिः ।
तत्पादपद्मच्युतमौलिमाल्य-
　　श्चित्तप्रसादोचितमित्यवोचत् ॥ ९६ ॥

स कोऽपि सत्कर्मविपाकजन्मा　　5
　　वन्द्यो विवेकः प्रशमाभिषेकः ।
यस्य प्रभावाद्विरतस्पृहाणां
　　त्याज्येव रत्नाकरमेखला भूः ॥ ९७ ॥

श्रुत्वेति राज्ञा कथितं तदर्थ-
　　जातं तदभ्यर्थनया विधाय ।　　10
तत्कल्पकः शान्तिपदं प्रपेदे
　　सेवान्तरङ्गः किल गङ्गपालः ॥ ९८ ॥

प्राप्तं तमप्युत्तमकर्मयोगात्　　D 645
　　प्रव्रज्यया सज्जनपूज्यभावम् ।
राजा ववन्दे प्रणतः पृथिव्याः　　15
　　कम्पस्तदाभूदपि पङ्क्तिकारः ॥ ९९ ॥

सोऽयं राजा विहितविनतिर्भद्रको ब्रह्मदत्तो
　　पश्योपाली स किल कुशली कल्पको गङ्गपालः ।
इत्याश्चर्यं भगवदुदितं भिक्षवस्ते निशम्य
　　स्वच्छं चित्तं सुकृतशरणे मेनिरे हेतुमेव ॥ १०० ॥　　20

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पितापुत्रसमादानं नाम द्वाविंशतितमः पल्लवः ॥



17

# २३ विश्वंतरावदानम् ।

चिन्तारत्नादधिकरुचयः सर्वलोकेष्वनिन्द्या
वन्द्यास्तेऽन्यैः पुरुषमणयः केऽप्यपूर्वप्रभावाः ।
येषां नैव प्रियमपि परं पुत्रदारादि दत्वा
5 सत्त्वार्थानां भवति वदनम्लानता दैन्यदूती ॥ १ ॥

भगवान् भिक्षुभिः पृष्टः पुरा शाक्यपुरे जिनः ।
जगाद पूर्ववृत्तान्तं देवदत्तकथान्तरे ॥ २ ॥
पुरी बभूव विश्वाख्या विश्वासवसतिः श्रियः ।
विश्वोपकारसक्तस्य सुकृतस्येव जन्मभूः ॥ ३ ॥
10 संजयाख्योऽभवत् तस्याममित्रतिमिरांशुमान् ।
नेत्रानन्दसुधासूतिर्विचित्रचरितो नृपः ॥ ४ ॥
तस्य विश्वंतरो नाम वदान्यस्तनयोऽभवत् ।
अपूर्वत्यागिना येन हृतं कल्पतरोर्यशः ॥ ५ ॥
ईर्ष्याविरहितास्तुल्यं विदग्धेन प्रसाधिताः ।
15 सत्येन भारती येन दानेन श्रीः श्रुतेन धीः ॥ ६ ॥
9 अद्यापि यस्य दिक्कान्ताकर्णाभरणतां गतम् ।
विभाति केतकीगर्भपलाशविशदं यशः ॥ ७ ॥
स कदाचिद्ददौ दिव्यरत्नालंकारमर्थिने ।
रथं विजयसाम्राज्यमनोरथहरं त्विषा ॥ ८ ॥
20 दत्ते रथवरे तस्मिन् विस्मयेनाखिलो जनः ।
बभूवाक्रान्तहृदयश्चिन्तया च नरेश्वरः ॥ ९ ॥
महामात्यानथाहूय हर्षहीनो महीपतिः ।
उवाचोपचितोद्वेगचिन्ताक्रान्तमनोरथः ॥ १० ॥
दत्तो रथः कुमारेण स जैत्रः शत्रुमर्दनः ।
25 यत्प्रभावार्जिता सेयं महारथवरूथिनी ॥ ११ ॥
लक्ष्मीः सुखनिषण्णा मे याता निश्चलतां तया ।
रथे सौर्यपथे तस्मिन् जयकुञ्जे च कुञ्जरे ॥ १२ ॥
इति राजवचः श्रुत्वा तमभाषन्त मन्त्रिणः ।
राजन् दोषस्तवैवायं वात्सल्येन प्रमाद्यतः ॥ १३ ॥
30 धर्मः कस्य न हर्षाय दानं कस्य न संमतम् ।
किं तु मूलहृताद्वृक्षान्निवर्तन्ते फलार्थिनः ॥ १४ ॥

विक्रीतः परदेशे च रथस्तेन द्विजन्मना । D 651
इत्युक्त्वा मन्त्रिणः सर्वे शल्यविद्धा इवाभवन् ॥ १५ ॥
अथ कालेन संप्राप्ते वसन्ते मदनोत्सवे ।
विपाके सुकृतस्येव हृदयानन्ददायिनि ॥ १६ ॥
स्वयंग्रहोपजीव्यस्य मधोर्मधुकरार्थिनः । 5
लोकः पुष्पवनैर्यातो यशोभिरिव शुभ्रताम् ॥ १७ ॥
अशोकं लोकसच्छायमुपकारोद्यतं द्रुमम् ।
मधौ विधूतं संनद्धे कलिकालं कृतं जगत् ॥ १८ ॥
राजपुत्रः समारुह्य कुञ्जरं राजवर्धनम् ।
ययौ फुल्लान् वने द्रष्टुमर्थिकल्पतरुस्तरून् ॥ १९ ॥ 10
व्रजन्तं प्रति सामन्तप्रयुक्तास्तं द्विजाः पथि ।
बभाषिरे समभ्येत्य स्वस्तिवादपुरःसराः ॥ २० ॥
चिन्तामणिर्गीयसे त्वं श्लाघ्यो जगति जङ्गमः ।
यस्य संदर्शनेनार्थी गाढमालिङ्ग्यते श्रिया ॥ २१ ॥
द्वावेव विश्रुतोत्कर्षविशेषौ भद्रजन्मनि । 15
दानार्द्रहस्तस्त्वं लोके गजश्चायं स्थिरोन्नतिः ॥ २२ ॥
अस्मभ्यं सुकृतोदार कुञ्जरोऽयं प्रदीयताम् । D 653
त्वदन्येन वदान्येन दातुमेष न शक्यते ॥ २३ ॥
इत्यर्थितस्तैः सोत्साहः स तेभ्यस्तु ददौ द्विपम् ।
सजीवमिव साम्राज्यं सशङ्खध्वजचामरम् ॥ २४ ॥ 20
दत्वा बोधिप्रधानेन प्रणिधानेन शुद्धधीः ।
रथरत्नं द्विपेन्द्रं च सोऽभूदानन्दनिर्भरः ॥ २५ ॥
श्रुत्वैव नृपतिर्दत्तं विश्रुतं जयकुञ्जरम् ।
रक्षाप्राकाररहितां राजलक्ष्मीममन्यत ॥ २६ ॥
स राज्यभ्रंशभीतेन कुपितेन महीभुजा । 25
निष्कासितः कुमारोऽथ प्रतस्थे प्रणिपत्य तम् ॥ २७ ॥
माद्रीदयितया सार्धं जालिनं नाम दारकम् ।
कृष्णाभिधां तथा कन्यामादाय स ययौ वनम् ॥ २८ ॥
वनेऽपि शेषं स ददौ वाहनादिकमर्थिने ।
समं हि महतां सत्त्वं संपत्सु च विपत्सु च ॥ २९ ॥ 30
माद्र्यां कदाचिद्यातायां पुष्पमूलफलाप्तये ।
ब्राह्मणः कश्चिदभ्येत्य राजपुत्रमभाषत ॥ ३० ॥

D 655 परिचारकहीनाय चतुरौ बालकाविमौ ।
देहि मह्यं महासत्त्व सर्वदो ह्यसि विश्रुतः ॥ ३१ ॥
श्रुत्वैतदविचार्यैव दारकौ दयितौ परम् ।
दत्वा स तस्मै सहसा सेहे तद्विरहव्यथाम् ॥ ३२ ॥
5 धनपुत्रकलत्रादि लोके कस्य न वल्लभम् ।
दानादन्यद्वदान्यानां दयितं न दयावताम् ॥ ३३ ॥
अथ माद्री समभ्येत्य बालकौ बालवत्सला ।
अपश्यन्ती पुरः पत्युः पतितापन्नमूर्च्छिता ॥ ३४ ॥
सा लब्धसंज्ञा दीप्तेन व्याप्ता शोककृशानुना ।
10 शिशुप्रदानवृत्तान्तं श्रुत्वैवाभूत्प्रलापिनी ॥ ३५ ॥
तस्याश्चेतसि दुःखाग्निरपत्यस्नेहदुःसहः ।
प्रियप्रेमानुसृत्यैव प्रययौ पुटपाकताम् ॥ ३६ ॥
अत्रान्तरे समभ्येत्य विप्ररूपः सुरेश्वरः ।
भृत्यार्थी दयितां पत्नीं राजपुत्रमयाचत ॥ ३७ ॥
15 याचितस्तेन सहसा शुचं जायावियोगजाम् ।
धिया संस्तभ्य सत्त्वाब्धिः स तस्मै वितताार ताम् ॥ ३८ ॥
D 657 सद्यःप्रदानतरलां संत्रस्तां हरिणीमिव ।
सोऽवददयितामन्तः कलयन् बोधिवासनाम् ॥ ३९ ॥
समाश्वासिहि कल्याणि न शोकं कर्तुमर्हसि ।
20 स्वप्नप्रणयकल्पोऽयमसत्यः प्रियसंगमः ॥ ४० ॥
शुश्रूषया द्विजस्यास्य धर्मे ते रमतां मतिः ।
विलोललोकयात्रायां धर्मः स्थिरसुहृत् सताम् ॥ ४१ ॥
दृष्टाः सर्वे स्वजनसुजना बान्धवाश्चानुभूताः
न्यस्ता कण्ठे क्षणपरिमलम्लायिनी मित्रमाला ।
25 दारे पुत्रे क्षपितमनिशं यौवनं जीवितं च
प्राप्तो नाप्तस्थिरपरिचयः कोऽपि धर्माहतेऽन्यः ॥ ४२ ॥
इत्युक्त्वा वल्लभां लोभपरित्यागादुवाह सः ।
द्युतिं वदनपद्मेन धैर्यवृत्तिं च चेतसा ॥ ४३ ॥
वियोगशोकविकलां माद्रीं दृष्ट्वा कृपाकुलः ।
30 निजरूपं समाधाय शचीपतिरुवाच ताम् ॥ ४४ ॥
विषादं मा कृथाः पुत्रि देवोऽहं त्रिदशेश्वरः ।
अर्थिभ्यस्त्वां ददात्येप तस्मादसि मयार्थिता ॥ ४५ ॥

अधुना सैव पत्युस्त्वं न्यासीभूता मयार्पिता । D 659
तं ददात्येष नान्यस्मै परस्वं दीयते कथम् ॥ ४६ ॥

करिष्यामि तवावश्यं दारकाभ्यां समागमम् ।
इत्युदीर्य सहस्राक्षः सहसान्तरधीयत ॥ ४७ ॥

अथ तौ दारकौ विप्रः समादायार्थलिप्सया । 5
विश्वामित्रपुरं गत्वा लोभाद्विक्रेतुमुद्यतः ॥ ४८ ॥

विश्वामित्रः परिज्ञाय राजपुत्रस्य दारकौ ।
जग्राह महतार्थेन बाष्पसंरुद्धलोचनः ॥ ४९ ॥

कालेन त्रिदिवं याते विश्वामित्रमहीपतौ । 10
भेजे विश्वंतरो राज्यं पौरामात्यगणार्थितः ॥ ५० ॥

राज्ये विरक्तस्य तस्य दानव्यसनिनः परम् ।
सत्त्वेन वर्धमानर्द्धेर्न कश्चिद् याचकोऽभवत् ॥ ५१ ॥

तद्वित्तपूर्णविभवो ब्राह्मणः सोऽपि जम्बुकः । D 661
कृतघ्नः स्वप्रभावान्मे संपदित्यभ्यधाज्जनम् ॥ ५२ ॥ 15

विश्वंतरः स एवाहं देवदत्तः स च द्विजः ।
उक्त्वेति चक्रे भगवान् भिक्षूणां दानदेशनाम् ॥ ५३ ॥

आलम्बनं श्वभ्रशतावपाते
घोरान्धकारे सुचिरप्रकाशः ।
आश्वासनं दुःसहदुःखकाले 20
दानं नराणां परलोकबन्धुः ॥ ५४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
विश्वंतरावदानं नाम त्रयोविंशः पल्लवः ॥



# २४ अभिनिष्क्रमणावदानम् ।

D 663

हसति सकललोकालोकसर्गाय भानुः
परमममृतवृष्ट्यै पूर्णतामेति चन्द्रः ।
इयति जगति पूज्यं जन्म गृह्णाति कश्चित्
विपुलकुशलसेतुः सत्त्वसंतारणाय ॥ १ ॥ 5

पुरा शुद्धोदनः श्रीमान् राजा शाक्यपुरेऽभवत् ।
यशःशशाङ्कजनकः सुधासिन्धुरिवापरः ॥ २ ॥

खलासक्ता स्वभावेन लक्ष्मीर्गुणिगणार्पिता ।
आश्चर्यकारिणा येन कृता सत्पक्षपातिनी ॥ ३ ॥

अद्याप्यखिलदिक्तीर्थवनासक्तैर्विवेकिभिः । 10
यशोभिः शुचिभिर्यस्य मुनिव्रतमिवोह्यते ॥ ४ ॥

स्यामहं शुद्धमातेति पुरा प्रणिधितः किल ।
विश्वकर्मसुतो मर्त्यमाजगामामलद्युतिः ॥ ५ ॥

कीर्तिः सत्पुरुषस्येव तस्याभूद्वल्लभा परम् ।
महामायाभिधा देवी चन्द्रस्येव कुमुद्वती ॥ ६ ॥ 15

D 665

सापश्यद्दन्तिनं श्वेतं स्वप्ने कुक्षौ विहायसा ।
गतमारोहणं शैले प्रणतिं च महाजनात् ॥ ७ ॥

अत्रान्तरे बोधिसत्त्वस्तुषितात् त्रिदशालयात् ।
गर्भं तस्याः समापेदे स्वयं लोकानुकम्पया ॥ ८ ॥

वहन्ती बोधिसत्त्वं सा गर्भे भुवननन्दनम् । 20
इन्दुं दुग्धाब्धिवेलेव बभूव पाण्डुरद्युतिः ॥ ९ ॥

इक्ष्वाकुराजवंश्येन तेन गर्भस्थितेन सा ।
भूर्निधानवतीवाभूद् भव्यलक्षणलक्षिता ॥ १० ॥

बभूव दोहदस्तस्या दानपुण्यमयोदयः ।
अङ्कुरेऽप्यविसंवादि सहकारस्य सौरभम् ॥ ११ ॥ 25

अथ कालेन संपूर्णं सा लुम्बिनीवने स्थिता ।
असूत तनयं देवी दिवाकरमिवादितिः ॥ १२ ॥

मातुर्गर्भमलास्पृष्टं कुक्षिं भित्त्वा स निर्गतः ।
तां चक्रेऽथ स्वभावेन स्वस्थाङ्गीं विगतव्यथाम् ॥ १३ ॥

निर्गच्छन्नेव रुद्धोऽसौ बलजिज्ञासया क्षणम् । 30
शक्रेण वज्रसाराङ्गस्तस्याशक्यत्वमाययौ ॥ १४ ॥

जातमात्रः शिशुर्गत्वा स्वयं सप्त पदानि सः । D 667
दिशो विलोकयन्नूचे सुव्यक्ताक्षरया गिरा ॥ १५ ॥
इयं निर्वृतिः पूर्वा च गतिर्लोकेषु दक्षिणा ।
पश्चिमा जातिरप्येषा संसारादियमुत्तरा ॥ १६ ॥
इति तस्य ब्रुवाणस्य पृथिवी समकम्पत । 5
तमक्षयबलं धर्तुमशक्तेव जगद्गुरुम् ॥ १७ ॥
छत्रं तस्य यशः शुभ्रं सत्त्वस्मेरं सचामरम् ।
व्योमाम्बुधाराधौतस्य जगृहुस्तस्य देवताः ॥ १८ ॥
अस्मिन्नवसरे पृष्टः स्वस्रीयेणासिताभिधः ।
नारदेन प्रभां दृष्ट्वा किष्किन्धाद्रिस्थितो मुनिः ॥ १९ ॥ 10
कस्मादर्कशतालोक इवालोकः प्रदृश्यते ।
तमोदरिद्रा येनेति गिरयः सगुहागृहाः ॥ २० ॥
विस्मयादिति तेनोक्तः सोऽवदद्दिव्यलोचनः ।
जातः पुण्यप्रभासोऽयं बोधिसत्त्वस्य जन्मनि ॥ २१ ॥
अचिरेणैव तं वत्स द्रक्ष्यावः कुशलाप्तये । 15
इत्युक्त्वा मुनिरानन्दाद् विश्रान्तिसुखितोऽभवत् ॥ २२ ॥
पुत्रजन्मनि सर्वार्थसिद्धिं शुद्धोदनः परम् । D 669
दृष्ट्वा सर्वार्थसिद्धोऽयमिति नामास्य निर्ममे ॥ २३ ॥
शाक्यवर्धननामाभूद् यक्षः शाक्यपुराश्रयः ।
यत्प्रणामेन शाक्यानां शिशवो निरुपद्रवाः ॥ २४ ॥ 20
तत्स्थित्या प्रेषितः पित्रा प्रणामाय सगुह्यकः ।
तं बोधिसत्त्वमालोक्य निपपातास्य पादयोः ॥ २५ ॥
अथोत्सङ्गे समादाय हृष्टस्तं पृथिवीपतिः ।
लक्षणानि निमित्तज्ञैस्तस्य देहे व्यलोकयत् ॥ २६ ॥
लक्षणज्ञास्ततः सर्वे नृपमूचुः सविस्मयाः । 25
देव दिव्यकुमारोऽयं लक्षणैरुपलक्ष्यते ॥ २७ ॥
जायते लक्षणैरेतैर्विश्वविश्रान्तशासनः ।
शक्राधिपश्चक्रवर्ती भगवान् स तथागतः ॥ २८ ॥
दीर्घाङ्गुलिदलौ चक्रलाञ्छनौ सुप्रतिष्ठितौ ।
अरुणौ चरणावस्य कान्तौ कमलकोमलौ ॥ २९ ॥ 30
राजहंस इव प्रांशुः सजालाङ्गुलिपल्लवः ।
एष जानुयुगः श्रीमानाजानुभुजभूषितः ॥ ३० ॥

D 771

सकोशबस्तिगुह्यश्च न्यग्रोधपरिमण्डलः।
दक्षिणावर्तरोमाङ्कः परिणाहसमोन्नतिः॥ ३१॥
रजोमललवास्पृष्टस्तप्तजाम्बूनदद्युतिः।
हस्तपादांसकण्ठाग्रस्पष्टसप्तच्छदाकृतिः॥ ३२॥
5 सिंहपूर्वार्धकायश्च बृहत्स्पष्टाङ्गविग्रहः।
चत्वारिंशत्समाप्रोतशुक्लदन्तः सुनासिकः॥ ३३॥
दीर्घप्रतनुजिह्वश्च मेघदुन्दुभिनिस्वनः।
अभिनीलाक्षगोपक्ष्मः सहजोष्णीषमस्तकः॥ ३४॥
सितोर्णाङ्को भ्रुवोर्भागः स्वस्तिकोरःस्थलोज्ज्वलः।
10 लेखाशङ्खाब्जहस्तोऽयं छत्राकारशिराः शिशुः॥ ३५॥
राजन्नयं ते तनयश्चक्रवर्ती भविष्यति।
सम्यक्संबोधिसंबुद्धः सर्वज्ञो वा भविष्यति॥ ३६॥
इत्युक्त्वा तेषु जातेषु लेभे हर्षं महीपतिः।
सप्तभिर्दिवसैः शास्तुर्जननी त्रिदिवं ययौ॥ ३७॥
15 तस्य जन्मनि शाक्यानां मुनीनामिव शान्तता।
दृष्टा यदा शाक्यमुनिर्नामाभूत्स तदा शिशुः॥ ३८॥

D 773

देवानामपि देवोऽयमिति निश्चित्य तेजसा।
देवातिदेव इत्यस्य नाम चक्रे महीपतिः॥ ३९॥
नारदेनाथ सहितस्तत्त्वदर्शी तपोवनात्।
20 तं समभ्याययौ द्रष्टुमादरादसितो मुनिः॥ ४०॥
स बोधिसत्त्वं बालार्कमिव कल्पप्रकाशनम्।
दृष्ट्वा विकासिवक्त्रश्रीर्लेभे कमलतुल्यताम्॥ ४१॥
सोऽब्रवीद्विहितातिथ्यं नृपतिं प्रणतं मुनिः।
राजन् गुणगणेनेव स्पृहणीयोऽसि सूनुना॥ ४२॥
25 एतानि लक्षणान्यस्य मोक्षलक्ष्मीसमागमम्।
वदन्ति चक्रवर्तिश्रीःफलं नैषां विनश्वरम्॥ ४३॥
अस्य बोधिप्रभावेण संबुद्धस्य मुखाम्बुजम्।
धन्यः पद्माकरस्येव नेत्रपात्रं करिष्यति॥ ४४॥
विबुधाः शुद्धसत्त्वस्य बोधिदुग्धमहोदधेः।
30 धन्या वागमृतैरस्य भविष्यन्त्युपजीविनः॥ ४५॥
पुण्यभाजि जगत्यस्मिन्नेक एवास्मि वञ्चितः।
एतत्संदर्शनं यस्य पूर्णकालस्य दुर्लभम्॥ ४६॥

इत्युक्त्वा नृपमामन्त्र्य गत्वा व्योम्ना तपोवनम् ।     D 675
सुप्रसन्नं मनः कृत्वा देहत्यागमचिन्तयत् ॥ ४७ ॥
स पर्यन्तोपदेशाय नारदेनाभिचोदितः ।
तमुवाचामृतं वत्स कुमारः कथयिष्यति ॥ ४८ ॥
अधिगम्यामृतं तस्मान्नृपसूनोरनामयम् ।     5
तरिष्यसि भवाम्बोधिमित्युक्त्वा तनुमत्यजत् ॥ ४९ ॥
शरीरसत्क्रियां तस्य कृत्वा सपदि नारदः ।
ययौ वाराणसीं सिद्धिं लेभे कात्यायनाभिधाम् ॥ ५० ॥
वर्धमानः कुमारोऽथ सर्वविद्यासु पारगः ।
लिपिप्रवीणोऽभिनवां लिपिं ब्राह्मीं विनिर्ममे ॥ ५१ ॥     10
नागायुतसमप्राणे तस्मिन् जगति विश्रुते ।
वैशालिकैः प्रियायास्मै प्रेषितो मत्तकुञ्जरः ॥ ५२ ॥
भविष्यति चक्रवर्तीत्यस्य प्राप्तमुपायनम् ।
देवदत्तः परिद्वेषात् तं जघान महागजम् ॥ ५३ ॥
च्युतं चकर्ष द्विरदं नन्दः सप्त पदानि तम् ।     15
कुमारस्तु तदुत्क्षिप्य प्राकाराद् बहिरक्षिपत् ॥ ५४ ॥
एकनाराचनिर्भिन्नसप्ततालमहीतलः ।     D 677
छेद्यभेद्यास्त्रशस्त्रेषु स एवातिशयं ययौ ॥ ५५ ॥
ततस्तुल्यगुणां पत्नीं राजसूनुर्यशोधराम् ।
अवाप विश्रुतां लोके शुद्धशील इवोन्नतिम् ॥ ५६ ॥     20
अत्रान्तरे महावातविच्युतः सप्तयोजनः ।
सरित्प्रवाहसंरोधं विदधे विपुलद्रुमः ॥ ५७ ॥
सा स्फारतरुसंरुद्धा रोहिका नाम निम्नगा ।
शीलभ्रष्टेव वनिता प्रययौ प्रतिलोमताम् ॥ ५८ ॥
राजपुत्रस्तमुत्क्षिप्य भङ्क्त्वा विक्षिप्य तं द्रुमम् ।     25
न्यवारयत् प्रजामत्स्यजलकल्लोलविप्लवम् ॥ ५९ ॥
ततः कदाचिदुद्याने हंसं निशितयन्त्रिणा ।
देवदत्तेन निहतं कुमारः समजीवयत् ॥ ६० ॥
संतापं तद्विवादेन देवदत्तोऽधिकं ययौ ।
न सहन्ते हि कुटिलास्तुल्यकुलगुणोन्नतिम् ॥ ६१ ॥     30
कदाचिद् गोपिका नाम कुमारं राजकन्यका ।
कन्दर्परूपमालोक्य किमप्यौत्सुक्यमाययौ ॥ ६२ ॥

D 679

शुद्धोदनः सुतस्यैतां ज्ञात्वा चित्तोचितां वधूम् ।
अपूरयद्विवाहेन मन्मथस्य मनोरथम् ॥ ६३ ॥
नैमित्तिकास्ततोऽभ्येत्य नृपमूचुः सुनिश्चयाः ।
पुत्रस्ते चक्रवर्ती वा मुनिर्वा सप्तमेऽहनि ॥ ६४ ॥
5 तच्छ्रुत्वा नृपतिः सूनोश्चक्रवर्तिपदाप्तये ।
प्रव्रज्याचकितश्चिन्तां दिनसंख्यामयीं ययौ ॥ ६५ ॥
लोलां सर्वः श्रियं वेत्ति शान्तस्थिरसुखामपि ।
तथापि भोगरक्तानां संपत्स्वेवादरः परम् ॥ ६६ ॥
ततः कदाचिदुद्यानविहाराय नृपात्मजः ।
10 प्रययौ रथमारुह्य वल्गुतुङ्गतुरङ्गमम् ॥ ६७ ॥
स विवर्णं जराजीर्णं कीर्णशीर्णशिरोरुहम् ।
सुशुष्कपरुषाकारं ददर्श पुरुषं पथि ॥ ६८ ॥
स तं दृष्ट्वा निजं कायमालोक्याचिन्तयच्चिरम् ।
अहो पर्याप्तपाकोऽयं कायस्यास्य जुगुप्सितः ॥ ६९ ॥
15 वयः पर्याप्तमाप्तोऽपि पर्याप्तं नाश्रयत्ययम् ।
अतीव पलितव्याजाज्जरा वृद्धं हसत्यसौ ॥ ७० ॥

D 681

शरीरे संततस्नायुपाशप्रोतास्थिपञ्जरे ।
वृद्धः पुष्णाति मन्येऽहमहो मोहविहङ्गमम् ॥ ७१ ॥
सारथे किं करोत्येष किं न याति तपोवनम् ।
20 संकोचमेति वृद्धस्य देहेन सह सा मतिः ॥ ७२ ॥
वृद्धोऽवलम्बते यष्टिं न तु धर्ममयीं धियम् ।
जराकुटिलकायस्य स्वभावो निर्विवेकता ॥ ७३ ॥
जुगुप्सां जनयत्येष वृद्धः प्रस्खलिताक्षरैः ।
वचोभिश्च्युतदन्ताभैर्गलल्लालालवाकुलैः ॥ ७४ ॥
25 नष्टा दृष्टिः कृशः कायः शक्तिर्लुप्ता हता श्रुतिः ।
तथापि मोहाद् दृष्टैव वृद्धस्य तरुणी प्रिया ॥ ७५ ॥
धत्ते धवलतां वृद्धः किमेतामतिगर्हिताम् ।
लोला परं विरक्तापि यद्यस्यातिप्रिया तनुः ॥ ७६ ॥
इति चिन्तयतस्तस्य निर्वेदः समजायत ।
30 मन्यमानस्य सापायं कायं निचयमापदाम् ॥ ७७ ॥
पुनश्च समयेऽन्यस्मिन्नपश्यद् व्याधितं नरम् ।
विपक्वकृणपप्रायं सपूयमिव पाण्डरम् ॥ ७८ ॥

स प्रदध्यौ तमालोक्य समुद्दिश्य निजां तनुम्। D 683
अहो नु सहजैवास्मिन् काये रोगगणोद्गतिः ॥ ७९ ॥
इदमेव महच्चित्रमियं मांसमयी तनुः।
न याति क्लेदवैक्लव्यं क्षणं पर्युषितेऽपि यत् ॥ ८० ॥
इति ध्यात्वा स सोद्वेगः शरीरविचिकित्सया। 5
बभूव राज्यसंभोगरागे विगलितादरः ॥ ८१ ॥
अथान्यस्मिन् क्षणे माल्यवस्त्राच्छादितविग्रहम्।
ददर्श देहसत्कारव्यग्रबन्धुजनं शवम् ॥ ८२ ॥
तं दृष्ट्वा सहसोद्वेगदयादुःखघृणाकुलः।
चिरं निःसारसंसारपरिहारमचिन्तयत् ॥ ८३ ॥ 10
एष प्रेतवनं याति संसक्तां हृदये वहन्।
दीर्घां प्रस्थानयात्रायां मालां कर्ममयीमिव ॥ ८४ ॥
अहो नु विषयाभ्यासविलासाध्यवसायिनाम्।
नृणामन्त्यक्षणे कष्टा काष्ठपाषाणतुल्यता ॥ ८५ ॥
उद्वेगवारिभवसागरबुद्बुदेऽस्मिन् 15
कालानिलाकुलितकर्मलताग्रपुष्पे।
मायावधूनयनविभ्रमसंविभागे D 685
पुंसां क एष वपुषि स्थिरताभिमानः ॥ ८६ ॥
नोक्तं किंचित् परहितयुतं न श्रुतं धर्मयुक्तं
नैव घ्रातं कुशलकुसुमं सत्यरूपं न दृष्टम्। 20
नैव स्पृष्टं शमपदमिति व्यक्तमासक्तचिन्ता-
विश्रान्तोऽयं वहति सहसा निश्चलत्वं गतायुः ॥ ८७ ॥
राजसूनुर्विचिन्त्येति शरीरं विपदाप्लुतम्।
अशेषविषयासङ्गे परां निःस्नेहतां ययौ ॥ ८८ ॥
अथाग्रे निर्मितं देवैः स शुद्धावासकायिकैः। 25
व्यलोकयत् प्रव्रजितं पात्रकाषायधारिणम् ॥ ८९ ॥
तं दृष्ट्वैव बभूवास्य प्रव्रज्याभिमुखी मतिः।
ईप्सितालोकनप्रीत्या स्वभावो हि विभाव्यते ॥ ९० ॥
वैराग्यकारणं तत्र नृपसूनोः पदे पदे।
विलोक्य सारथिः सर्वं क्षितिपाय न्यवेदयत् ॥ ९१ ॥ 30
कुमारोऽथ पितुर्वाक्यात् ग्रामालोकनकौतुकी।
व्रजन् पथि निधानानि विवृतानि व्यलोकयत् ॥ ९२ ॥

तत्पूर्वपुरुषन्यस्तैः स्त्रीकरैरुत्थितान्यपि ।
यदा स नाग्रहीत्तानि तदा विविशुरम्बुधिम् ॥ ९३ ॥
ततः स कर्षकान् पांशुव्याप्तपाण्डुशिरोरुहान् ।
विदीर्णपाणिचरणान् क्षुत्पिपासाश्रमातुरान् ॥ ९४ ॥
5 हलकुद्दालविषमोल्लेखपक्षव्रणार्दितान् ।
विलोक्य क्लेशविवशान् बभूव करुणाकुलः ॥ ९५ ॥
विधाय दयया तेषां द्रविणैरदरिद्रताम् ।
स वृषाणां वृषरतः क्लेशमुक्तिमकारयत् ॥ ९६ ॥
ततः प्रतिनिवृत्तोऽथ सानुजः पार्थिवात्मजः ।
10 मध्याह्नपृथुसंतापे तरलस्तरणित्विषः ॥ ९७ ॥
रथघोषोन्मुखशिखिश्यामीकृतदिगन्तरः ।
स्वेदवारिकणाकीर्णः प्रभास्निग्धवनस्थलीम् ॥ ९८ ॥
सोऽवरुह्य रथात्तत्र गण्डस्खलितकुण्डलः ।
विश्रान्त्यै विश्रुतयशा जम्बुच्छायामशिश्रियत् ॥ ९९ ॥
15 स बभारोरसि व्यक्तां स्वेदाम्बुकणसंततिम् ।
वपुराश्लेषललितां हारस्येव कुटुम्बिनीम् ॥ १०० ॥
छायासु परिवृत्तासु शनकैः सर्वशाखिनाम् ।
तस्य जम्बूतरुच्छाया न चचाल तनुस्तनोः ॥ १०१ ॥
सा तस्य शीतलच्छाया तापक्लान्तिमवारयत् ।
20 संसारविरतस्येव तीव्रवैराग्यवासना ॥ १०२ ॥
पुत्रदर्शनसोत्कण्ठस्तं देशमथ भूपतिः ।
आजगाम गजोत्सर्पत्रस्तभ्रमरचामरः ॥ १०३ ॥
छायां स निश्चलां दृष्ट्वा कुमारस्य प्रभावतः ।
गौरवाद्भुतसंप्राप्तः प्रणतं प्रणनाम तम् ॥ १०४ ॥
25 ततः स सहितः पित्रा नगरं गन्तुमुद्यतः ।
अपश्यत् पुरपर्यन्ते श्मशानं शवसंकुलम् ॥ १०५ ॥
स दृष्ट्वा कुणपाकीर्णमशिवं शिवकाननम् ।
सोद्वेगं सारथिं प्राह स्थगितस्यन्दनः क्षणम् ॥ १०६ ॥
सारथे पश्य जन्तूनां कायापायमतीं दशाम् ।
30 दृष्ट्वेदमपि रागार्द्रं मनो मोहप्रमादिनाम् ॥ १०७ ॥
परस्त्रीदर्शनात्तृप्तं नेत्रमास्वाद्य सादरम् ।
अस्यासत्यवती जिह्वा पश्य काकेन कृष्यते ॥ १०८ ॥

अस्याः स्तनमुखन्यस्तनखोल्लेखसुखस्थितिः । D 691
खण्डयत्यधरं गृध्रः कामीव मदनिर्भरः ॥ १०९ ॥
एते दृष्टनिषक्तवायसशकुन्निष्ठीविनः पादपा
मूर्च्छन्तीव विपाकपूयकुणपाघ्राणेन निष्कूणिताः ।
दृष्ट्वा गृध्रविदार्यमाणमसकृत् कीर्णार्द्रतन्त्रं शवं 5
भूयो वातविलोलपल्लवकरैराच्छादयन्तीव च ॥ ११० ॥
क्षीबस्येवाचलस्य द्रुतहृतहृदया जम्बुकी कण्ठसक्ता
रक्ताभिव्यक्तकामा कमपि नखमुखोल्लेखमासूत्रयन्ती ।
आस्वाद्यास्वाद्य यूनः क्षणमधरदलं दत्तदन्तव्रणाङ्कं
लग्नानङ्गक्रियायामियमतिरभसोत्कर्षमाविष्करोति ॥ १११ ॥ 10
इत्युक्त्वा जातविरतिर्भवबीभत्सकुत्सया ।
कलयन् क्लेशनिर्वाणं प्रविवेश पुरान्तरम् ॥ ११२ ॥
तत्र हर्म्यगतापश्यत् तं कन्याभिजनोज्ज्वला । D 693
मृगजा नाम मृगजामोदिनी मृगलोचना ॥ ११३ ॥
सरागतरला दृष्टिः श्रोत्रसंचारिणी परम् । 15
अभूत्तद्दर्शने तस्याः सहसैव विरेकिणी ॥ ११४ ॥
सा तदालोकनेनैव बाला लज्जासहिष्णुना ।
स्मरेणेव समाकृष्टा सखीं प्राह पुरःस्थिताम् ॥ ११५ ॥
का धन्या ललना लोके स्पर्शेनास्य शशित्विषः ।
यस्या मदनसंतप्ता तनुर्निर्वाणमेष्यति ॥ ११६ ॥ 20
निर्वाणशब्दं श्रुत्वैव राजपुत्रः समीहितम् ।
तां ददर्शोन्मुखः पद्मवनानीव दिशन् दृशा ॥ ११७ ॥
स तस्यास्तेन वचसा वपुषा च प्रसादितः ।
हारं सुवृत्तं चित्तं च चिक्षेपास्यै गुणोज्ज्वलम् ॥ ११८ ॥
आलोकनानुकूल्येन भावं विज्ञाय भूपतिः । 25
पुत्रस्यान्तःपुरपदे तामादाय न्यवेशयत् ॥ ११९ ॥
षण्णां कान्तासहस्राणां वृतमन्तःपुरं ततः ।
विवेश राजतनयः प्रियां शान्तिं विचिन्तयन् ॥ १२० ॥
अत्रान्तरे नरपतिं प्राहुर्नैमित्तिकाः स्फुटम् ।
मुनिर्वा चक्रवर्ती वा प्रातस्ते भविता सुतः ॥ १२१ ॥ 30
ततः संचिन्त्य नृपतिः प्रव्रज्यां चकितः परम् । D 695
अकारयत् पुरद्वारगुप्तिं रुद्धगमागमाम् ॥ १२२ ॥

द्रोणोदनमुखान् भ्रातॄन् द्वारेषु विनिवेश्य सः ।
नगरस्य स्वयं मध्ये तथा सामात्यसैनिकः ॥ १२३ ॥
राजपुत्रादथ प्राप्तगर्भा देवी यशोधरा ।
बभाषे शारदीव द्यौः प्रत्यासन्नेन्दुपाण्डुरा ॥ १२४ ॥
5 एकरात्रावशेषेऽथ नगरद्वाररक्षणे ।
शमप्रवृत्तार्कमभूत् प्रव्रज्याभिमुखं दिनम् ॥ १२५ ॥
चिरं विचर्य संसारं शान्तिं याते दिवस्पतौ ।
काषायाम्बरमालम्ब्य ययौ संध्यावदृश्यताम् ॥ १२६ ॥
अशेषाशातमोमोहविरामविमलां शनैः ।
10 इन्दुर्गामुदितश्चक्रे पूर्णालोकविलोकिनीम् ॥ १२७ ॥
सरागतापे नभसश्चेतसीव गते रवौ ।
शुद्धेन्दुहृदयस्याभूत् प्रसादः कोऽप्यविप्लवः ॥ १२८ ॥
D 697 अथास्मिन्नन्तरे कान्तामंततान्तःपुरोदरे ।
रत्नहर्म्यप्रविष्टेन्दुद्युतिसंदोहहासिनि ॥ १२९ ॥
15 निःसारविरसं सर्वं राजसूनुर्विलोकयन् ।
जगाद गगनस्वच्छस्वच्छन्दोच्छलितस्मृतिः ॥ १३० ॥
गणोऽयं नारीणां मदनदहनोल्कापरिकरः
परित्याज्यस्तीव्रव्यसनशतसंतापसचिवः ।
इदानीं युक्ता मे तरुतललताशीतलतरे
20 परित्यक्तागारप्रशमसुखसारे परिणतिः ॥ १३१ ॥
एताश्चन्द्रद्युतिमदमया यामि नार्यो वनेऽस्मिन्
निद्रामुद्रानियमितदृशः संस्तरस्रस्तवस्त्राः ।
स्वप्नोत्पन्नानुचितवचनाः केशसंछादितांसाः
क्षिप्रं मन्दानिलविचलितान् लज्जयन्तीव दीपान् ॥ १३२ ॥
25 सरलस्रस्तगात्राणां निर्लज्जानां विवाससाम् ।
सुप्तानां च मृतानां च भेदः को नाम देहिनाम् ॥ १३३ ॥
D 699 इति तस्य ब्रुवाणस्य संजाते गमनोद्यमे ।
मिथः कथा समभवन्नगरद्वाररक्षिणाम् ॥ १३४ ॥
भो भोः कः कोऽत्र जागर्ति जाग्रतो नास्ति विप्लवः ।
30 प्रभुचित्तग्रहव्यग्राः समग्रा एव जाग्रति ॥ १३५ ॥
जागर्ति संसारगृहे मनीषी मोहान्धकारे स्वपिति प्रमत्तः ।
प्रजागरो जीवितमेव लोके मृतस्य सुप्तस्य च को विशेषः ॥ १३६ ॥

इति हर्म्यस्थितः श्रुत्वा रात्रौ राजसुतः कथाः ।
प्रस्थितं सत्पथेनेव निजं मेने मनोरथम् ॥ १३७ ॥
निवृत्तेर्लक्षणं दृष्ट्वा स स्वप्नं क्षणनिद्रया ।
अनुत्तरज्ञाननिधिं प्रत्यासन्नममन्यत ॥ १३८ ॥
ततः प्रबुद्धा सहसा त्रस्ता देवी यशोधरा । 5
तत्कालोपनतं स्वप्नं दयिताय न्यवेदयत् ॥ १३९ ॥
पर्यङ्काभरणाङ्गानि स्वप्ने भग्नानि मे विभो ।
श्रीवैजन्ती मया दृष्टा चन्द्रार्कौ च तिरोहितौ ॥ १४० ॥
इत्याकर्ण्य स तामूचे मुग्धे सत्यविवर्जितः ।
संसार एव स्वप्नोऽयं स्वप्ने स्वप्नोऽपि कीदृशः ॥ १४१ ॥ 10
स्वप्नेऽद्य नाभिसंजाता लता व्याप्ता विहायसा । D 701
मेरूपधानशिरसा पूर्वपश्चिमवारिधौ ॥ १४२ ॥
भुजाभ्यां चरणाभ्यां च दक्षिणाब्धिर्मया धृतः ।
भद्रे स्वप्नः शुभोऽयं ते स्त्रीणां भर्तृशुभं शुभम् ॥ १४३ ॥
इत्युक्ते बोधिसत्त्वेन नोचे किंचिद् यशोधरा । 15
पुनश्च निद्राभिमुखी बभूव मीलितेक्षणा ॥ १४४ ॥
शक्रब्रह्ममुखाः सर्वे समेत्याथ सुधाभुजः ।
चक्रिरे बोधिसत्त्वस्य सत्त्वोत्साहप्रपूरणम् ॥ १४५ ॥
तैर्देवपुत्राश्चत्वारः समादिष्टा महाजवाः ।
सहाया गमने तस्य भूशैलाब्धिधृतिक्षमाः ॥ १४६ ॥ 20
शक्रादिष्टेन यक्षेण पाञ्चिकाख्येन निर्मितैः ।
सहर्म्यासक्तसोपानैरवतीर्य विनिर्ययौ ॥ १४७ ॥
सुप्तं सारथिमादाय छन्दकाख्यं प्रबोध्य सः ।
उत्साहमिव जग्राह कण्ठकाख्यं तुरङ्गमम् ॥ १४८ ॥
तं तीक्ष्णरुचिरं लक्ष्मीकटाक्षतरलं हरिम् । 25
स चक्रे संयमालीनं मूर्ध्नि संस्पृश्य पाणिना ॥ १४९ ॥
शमोद्यमे सुमनसा स कोऽप्यन्तर्बहिः समः । D 703
शिशवोऽपि विमुञ्चन्ति यत्प्रभावेण चापलम् ॥ १५० ॥
बलजिज्ञासया न्यस्तं तेनाथ चरणं क्षितौ ।
न ते कम्पयितुं शेकुर्देवपुत्राः सविस्मयाः ॥ १५१ ॥ 30
छन्दकेन सहारुह्य निस्तरङ्गं तुरङ्गमम् ।
स जगाहे महद्व्योम विमलं स्वमिवाशयम् ॥ १५२ ॥

प्रययौ तरलावर्तिनर्तितोष्णीषपल्लवः।
संसर्पिपवनोल्लासैः शोकोच्छ्वास इव श्रियः॥ १५३॥
तस्याभरणरत्नांशुलेखाभिः शबलं नभः।
जग्राह सूत्रपत्रालीविचित्रमिव चीवरम्॥ १५४॥
5 कीर्णाश्रुबिन्दुकलिता विलोलनयनोत्पलाः।
व्रजन्तं ददृशुर्दृश्यास्तमन्तःपुरदेवताः॥ १५५॥
संसारमिव विस्तीर्णं पुरं सनृपबान्धवम्।
दूरात् प्रदक्षिणीकृत्य क्षम्यतामित्यभाषत॥ १५६॥
क्षपायां क्षणशेषायां जने निद्राभिमुद्रिते।
10 तं ददर्श महानाम प्रबुद्धो राजबान्धवः॥ १५७॥
D 705 दिवि दृष्ट्वा व्रजन्तं तं शशाङ्कशङ्कया हृतः।
ऊचे चिरं विचार्योच्चैर्बाष्पाञ्चितविलोचनः॥ १५८॥
चित्रमेतद् विरक्तत्वं बन्धुजीवोपमस्य ते।
कुमार रुचिराकार न युक्तं युक्तकारणम्॥ १५९॥
15 वंशोत्कर्षविशेषार्थी निबद्धाशः पिता त्वयि।
कस्मान्निराशः क्रियते सर्वाशाभरण त्वया॥ १६०॥
इति शाक्यस्य महतः श्रुत्वा वाक्यं नृपात्मजः।
तमूचे बान्धवप्रीतिर्बन्धो बन्धनशृङ्खला॥ १६१॥
अयं कायः क्षयं याति मिथ्यागृहसुखप्रियः।
20 विषयोग्रविषार्तानाममृतायतनं वनम्॥ १६२॥
हस्ताकृष्टविषफणिफणभृन्मस्तकन्यस्तमृत्युः
कण्ठाबद्धोत्कटविषलतापल्लवालोलमालः।
दीप्ताङ्गारप्रकरगहनं गाहते दुर्गमार्गं
संसारेऽस्मिन् विषयनिचये सप्रमोदः प्रमादी॥ १६३॥
25 इत्युदीर्य व्रजन् व्योम्ना विलङ्घ्य नगरं क्षणात्।
बहिर्भूतलमभ्येत्य स ययौ वाजिना जवात्॥ १६४॥
D 707 महता शाक्यमुख्येन बोधितस्याथ भूपतेः।
अन्तःपुरे च कान्तानामुद्भूतः करुणः स्वरः॥ १६५॥
अथ ब्रह्मेन्द्रधनदप्रमुखस्त्रिदशैर्वृतः।
30 राजसूनुर्वनं प्राप गत्वा द्वादशयोजनम्॥ १६६॥
अवरुह्याथ तुरगात् विमुच्याभरणानि सः।
उवाच सूचितानन्दश्छन्दकं वदनत्विषा॥ १६७॥
गृहीत्वाभरणानि त्वं हयं च व्रज मन्दिरम्।
नेदानीमस्ति मे कृत्यमेतैर्मायानिबन्धनैः॥ १६८॥

वनेऽस्मिन्नहमेकाकी शमसंतोषबान्धवः ।
एकः संजायते जन्तुरेक एव विपद्यते ॥ १६९ ॥
विषमविषययोगं भोगमुत्सृज्य रे कः
सरसरति विशेषक्लेशशोषप्रवृत्तः ।
परिभवभुवनेऽस्मिन्नेष नः संनिवेशः 5
शमितमदनकान्तिः शान्तिमेव श्रयामि ॥ १७० ॥
इत्युक्त्वाभरणान्यस्य दीप्तान्यङ्के मुमोच सः ।
त्यक्तशोकान्वितानीव मुक्तापकणसंचये ॥ १७१ ॥
चूडां निष्कृष्य खड्गेन स चिक्षेप नभःस्थले । D
शक्रश्च तं समादाय निनाय दिवमादरात् ॥ १७२ ॥ 10
केशः क्लेश इवोत्कृत्तो यत्र तेन महात्मना ।
केशप्रतिग्रहं चैत्यं सद्भिस्तत्र निवेशितम् ॥ १७३ ॥
छन्दकोऽप्यश्वमादाय प्रयातः सप्तभिर्दिनैः ।
शनैः प्राप पुरोपान्तं शोकार्तः समचिन्तयत् ॥ १७४ ॥
शून्यं तुरगमादाय परित्यज्य नृपात्मजम् । 15
द्रष्टुं शक्नोमि नृपतिं कथं पुत्रप्रलापिनम् ॥ १७५ ॥
विचिन्त्येति हयं त्यक्त्वा स तत्रैव व्यलम्बत ।
शून्यासनः पुरं वाजी मूर्तः शोक इवाविशत् ॥ १७६ ॥
तं दृष्ट्वान्तःपुरजनः सामात्यश्च महीपतिः ।
प्रतिप्रलापमुखराश्चक्रिरे निखिला दिशः ॥ १७७ ॥ 20
उद्धूतार्तस्वरैः कण्ठैः सोत्कण्ठैः स विषादवान् ।
सर्वैर्गृहीतकीर्णाश्रुर्वाजी जीवितमत्यजत् ॥ १७८ ॥
स बोधिसत्त्वसंस्पर्शपुण्यप्राप्तिपवित्रितः ।
जग्राह ब्राह्मणकुले जन्म संसारमुक्तये ॥ १७९ ॥
शक्रदत्तं कुमारस्तु यत्र काषायमग्रहीत् । 25 E
काषायग्रहणं तत्र चैत्यं चक्रे महाजनः ॥ १८० ॥
विभवमभववृत्त्यै जन्म जन्मप्रमुक्त्यै
विजनमपि जनानां मोहगर्तान्निवृत्त्यै ।
इति स कुशलकामः काममुत्सृज्य भेजे
गुणकृतजनरागः श्लाघ्यतां त्यक्तरागः ॥ १८१ ॥ 30

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलताया-
मभिनिष्क्रमणावदानं चतुर्विंशः पल्लवः ॥



D 713

# २५ मारविद्रावणावदानम् ।

जयन्ति ते जन्मभयप्रमुक्ता
भवप्रभावाभिभवाभियुक्ताः ।
यैः सुन्दरीलोचनचक्रवर्ती
मारः कृतः शासनदेशवर्ती ॥ १ ॥

ततस्तपोवने चास्मिन् बोधिसत्त्वे तपोजुषि ।
तदुपस्थापकाः पञ्च वाराणस्यां प्रवव्रजुः ॥ २ ॥
स्पृहणीयो मुनीन्द्राणामथ शाक्यमुनिः शनैः ।
स्वयं सेनायनीग्रामं जनचारिकया ययौ ॥ ३ ॥
तत्र सेनाभिधानस्य कन्ये गृहपतेः सुते ।
नन्दा नन्दबलाख्या च चारुवृत्ते बभूवतुः ॥ ४ ॥
शुद्धोदनस्य भूभर्तुस्ते श्रुत्वा विश्रुतं सुतम् ।
चक्राते तद्विवाहार्थं व्रतं द्वादशवार्षिकम् ॥ ५ ॥
आमोदिनीनां हृदये सदा सूत्रवदास्थितः ।
मालानामिव बालानामभिलाषः स्वभावजः ॥ ६ ॥

D 715

धेनूनां पीतदुग्धानां दुग्धं ताभ्यां पुनः पुनः ।
गृहीत्वा स्फटिकस्थाल्या व्रतान्ते पायसं शुभम् ॥ ७ ॥
विधिवत्पायसे सिद्धे विप्ररूपः सुरेश्वरः ।
तं समभ्याययौ देशं देवश्च कमलासनः ॥ ८ ॥
हर्षादतिथिभागेऽथ कन्यकाभ्यां समुद्धृते ।
शक्रोऽवदत्सर्वगुणोदयायाग्रे प्रदीयताम् ॥ ९ ॥
मत्तोऽयमधिकस्तावद्ब्राह्मणः प्रथमोऽपि च ।
इत्युक्ते सुरराजेन प्रोवाच चतुराननः ॥ १० ॥
मत्तोऽधिको देव आस्ते शुद्धावासनिकायिकः ।
इत्युक्ते ब्रह्मणा तेऽपि जगदुर्गगनस्थिताः ॥ ११ ॥
सर्वप्रतिविशिष्टोऽसौ बोधिसत्त्वस्तपःकृशः ।
नद्यां निराजनाख्यायां विगाह्य सलिले स्थितः ॥ १२ ॥
एतदाकर्ण्य कन्याभ्यामाहूय मणिभाजने ।
अवतीर्यार्पितं भक्त्या तदस्मै मधुपायसम् ॥ १३ ॥
बोधिसत्त्वस्तदादाय रत्नपात्रीं ददौ तयोः ।
दत्तेयं न पुनर्ग्राह्येत्युक्त्वा जगृहतुर्न ते ॥ १४ ॥

सा तेन नद्यां निक्षिप्ता नागैर्नीता प्रभावती ।　　D 717
विक्षोभ्याप्याहृता तेभ्यस्तार्क्ष्यरूपेण वज्रिणा ॥ १५ ॥
प्रसादी बोधिसत्त्वोऽथ कन्यायुगलमभ्यधात् ।
दानस्य प्रणिधानेन भवत्योः किं समीहितम् ॥ १६ ॥
ते तमूचतुरानन्दनिधिः शुद्धोदनात्मजः ।　　5
सर्वार्थसिद्धोऽभिमतः कुमारः पतिरावयोः ॥ १७ ॥
उद्यमं मारलीलायाः सरसं तद्वचस्तयोः ।
न लिलिम्प मनस्तस्य पाद्मं दलमिवोदके ॥ १८ ॥
स जगाद कुमारोऽसौ न किं प्रव्रजितः श्रुतः ।
न तस्य लोलनयनाः प्रियाः श्रिय इव स्त्रियः ॥ १९ ॥　　10
इत्यनीप्सितमाकर्ण्य दीर्घं निश्वस्य कन्यके ।
ऊचतुर्दानधर्मोऽयं सिद्धौ तस्यैव जायताम् ॥ २० ॥
अदृष्टस्नेहसंश्लिष्टः प्रविष्टोऽन्तः पराङ्मुखः ।
न नाम सुचिराभ्यस्तः पक्षपातो निवर्तते ॥ २१ ॥
इति तद्वचनं श्रुत्वा बोधिसत्त्वः प्रसन्नधीः ।　　15
प्रयातस्ते समामन्त्र्य विश्रान्त्यै काननान्तरम् ॥ २२ ॥
पायसामृतभागेन लब्धदिव्यबलोदयः ।　　D 719
प्रच्छायतरुसुच्छायमारुरोह महीधरम् ॥ २३ ॥
पर्यङ्कबन्धमाधाय तत्र तस्मिन् सुखं स्थिते ।
अहंकार इवात्युच्चशिराः सोऽद्रिर्व्यशीर्यत ॥ २४ ॥　　20
विशीर्णभूधरे तस्मिन् स प्रदध्यौ विषण्णधीः ।
सपक्षालानि कर्माणि मया कानि कृतान्यहो ॥ २५ ॥
इति चिन्ताशतोच्छ्वासं तमूचुर्व्योमदेवताः ।
न त्वया विहितं साधो कर्म किंचिदसांप्रतम् ॥ २६ ॥
अच्छिन्नोत्तमकुशलं धर्तुं न क्षमते क्षितिः ।　　25
स त्वमुत्तमकुशलः प्रोच्चशैलशताद्गुरुः ॥ २७ ॥
निरञ्जनीं समुत्तीर्य सरितं व्रज निश्चलम् ।
सिद्धिदं बोधिसत्त्वानां देशं वज्रासनाभिधम् ॥ २८ ॥
देवतादिष्टमार्गेण प्रस्थितस्यास्य भूतले ।
पादन्यासैरभूत्तस्य हेमपद्मपरंपरा ॥ २९ ॥　　30
पृथिवी व्रजतस्तस्य प्रोल्लसत्सलिलाकुला ।
रणन्ती कांस्यपात्रीव प्रोन्ननाम ननाम च ॥ ३० ॥

D 721

तानि तानि निमित्तानि प्रवृत्तानि ददर्श सः ।
येषामनुत्तरज्ञाननिधानसाधनं फलम् ॥ ३१ ॥
निरञ्जनाय भुवने नागोऽन्धः कालिकाभिधः ।
बुद्धोत्पादितदृग्भूमेः शब्दमाकर्ण्य निर्ययौ ॥ ३२ ॥
5 सर्वलक्षणसंपन्नं दीप्तजाम्बूनदद्युतिम् ।
स बोधिसत्त्वमालोक्य प्रोवाच रचिताञ्जलिः ॥ ३३ ॥
नलिननयन कान्तस्त्वं वने यौवनेऽस्मिन्
विहरसि विरहार्ति संपदामर्पयित्वा ।
अशमशमविशेषोन्मेषसंतोषहेतु-
10 र्भवसि भवसमुद्रे देहिनां सत्यसेतुः ॥ ३४ ॥
अथामुञ्चन्त्येते भयतरलतामत्र हरिणाः
यथा लीलाचक्रं विहरति समीपे खगगणः ।
ससत्त्वासत्त्वानां किमपि हृदयाश्वाससदनं
तथा मन्ये बौद्धं वपुरिदमनायाससुखदम् ॥ ३५ ॥

D 723

15 करिकलभकः पद्मप्रीत्या करोति हरेः करं
सुखयति शिखी स्निग्धालापं कलापशिखानिलैः ।
भवति हरिणी लोलापाङ्गा पुरः प्रणयोन्मुखी
प्रशमसमयस्येयं पुण्यप्रसादमयी स्थितिः ॥ ३६ ॥
अद्यैव बुद्धत्वमवाप्य शुद्धं
20 त्वं बोधिमेष्यस्य(?)खिलां त्रिलोकीम् ।
सद्यःप्रसादप्रमदावदातां
कुमुद्वतीं पूर्ण इवामृतांशुः ॥ ३७ ॥
अन्योन्यं दिननाथदीप्तमहसः सद्यस्तवालोकना-
ल्लोकानां कमलप्रबोधकलया दिव्यप्रकाशस्पृशाम् ।
25 निर्याती हृदयान्निबद्धमधुपश्रेणीव संबन्धन-
त्रस्तान्तर्न पुनः करिष्यति पदं मोहान्धकारावलिः ॥ ३८ ॥
इति ब्रुवाणां विनयान्नागराजः प्रसन्नधीः ।
बोधिसत्त्वं समाभाष्य समुत्तीर्य नदीं ययौ ॥ ३९ ॥

D 725

वज्रासनपदं प्राप्य बोधिमूलमनाकुलम् ।
30 दक्षिणाग्रैः कुशैश्चक्रे शक्रदत्तैः स संस्तरम् ॥ ४० ॥
तत्रोपविश्य पर्यङ्कबद्धो निश्चलनिश्चयः ।
मन्थावसानविश्रान्तः स दुग्धाब्धिरिवाबभौ ॥ ४१ ॥

असाधारः क्षमाधारः स धीरसरलाकृतिः ।
रुरुचे काञ्चनरुचिः परो मेरुरिवाचलः ॥ ४२ ॥
असावक्षयपर्यन्तः पर्यङ्कोऽयं मम स्थिरः ।
बबन्धेति स संकल्पं कृत्वा प्रतिमुखीं स्मृतिम् ॥ ४३ ॥
अत्रान्तरे समभ्येत्य मारः संयममत्सरः ।　　5
लेखहारस्तत्र तूर्णं बोधिसत्त्वमभापत ॥ ४४ ॥
अकामकामता केयं लोके बन्धनदा मता ।
अकालकलिकाकारा मतिस्ते कास्य कामना ॥ ४५ ॥
गृहीतं हतशङ्केन देवदत्तेन ते पुरम् ।
निरुद्धान्तःपुरश्रेणीबद्धः शुद्धोदनो नृपः ॥ ४६ ॥　　10
इति श्रुत्वैव वचनं शोकामर्षविषोज्झितः ।
अशिक्षितविकारेण चेतसा स व्यचिन्तयत् ॥ ४७ ॥
अहो बतान्तरायं मे मारः कर्तुं समुद्यतः ।　　D 727
नर्तयत्येष दुर्वृत्तः शिखण्डिक्रीडयाजगत् ॥ ४८ ॥
मार मार विरामस्ते दौर्जन्यस्य न जायते ।　　15
एकेन हिंसायज्ञेन प्राप्तेयं कम्रता त्वया ॥ ४९ ॥
यज्ञदानतपःश्लाघां नात्मनः कर्तुमुत्सहे ।
स्वगुणोदीरणम्लानं पुण्यपुष्पं हि शीर्यति ॥ ५० ॥
इति निर्भर्त्सितस्तेन चित्तस्तेनः शरीरिणाम् ।
सामर्षः प्रययौ मारः समारम्भाद् हतोद्यमः ॥ ५१ ॥　　20
अथादृश्यन्त ललिता लालित्याञ्चितलोचनाः ।
भ्रमद्भृङ्गतरङ्गिण्यः कान्ताश्चूतलता इव ॥ ५२ ॥
चारुतच्चरितातृप्तास्तिस्रस्ताः कामकन्यकाः ।
सरागं पादनलिनीन्यासैश्चक्रुस्तपोवनम् ॥ ५३ ॥
विलोचनेन हरिणी करिणी गतिविभ्रमैः ।　　25
तत्र ताभिर्मुखाम्भोजैर्नलिनी मलिनीकृता ॥ ५४ ॥
यौवनाभरणैरङ्गैरनुरागविलेपनैः ।
लावण्यवसनैस्तासां कामोऽभूदप्यचेतसाम् ॥ ५५ ॥
वज्रासनसमाधानध्याननिश्चललोचनम् ।　　D 729
तं विलोक्याभवत् तासां विस्मयध्यानधारणा ॥ ५६ ॥　　30
सा बोधिसत्त्वसंकल्पान् मदरागमयं वयः ।
परित्यज्यैव सहसा सलज्जा भेजिरे जराम् ॥ ५७ ॥

प्रतीपगमनात्तासामथ भग्नमनोरथः।
मन्मथः प्रथितारम्भः सैन्यसंभारमाददे ॥ ५८ ॥
सर्वप्रहरणैर्व्याप्तं नानाप्राणिमुखैर्भयैः।
षट्त्रिंशत्कोटिविपुलं बलं तस्य समुद्ययौ ॥ ५९ ॥
5 स्वयमाकर्णनिष्कृष्टकोपक्रूरशरासनः।
मारः स्फारविकारेण बोधिसत्त्वं समाद्रवत् ॥ ६० ॥
शस्त्रवृष्टिस्तदुत्सृष्टा सह पांशुविपाश्मभिः।
प्रययौ बोधिसत्त्वस्य मन्दाराम्बुजतुल्यताम् ॥ ६१ ॥
पुनर्मारबलोत्सृष्टा शस्त्रवृष्टिर्धृतक्षमे।
10 चक्रिरे देवतास्तस्य वज्रप्रतिसमाश्रयम् ॥ ६२ ॥
स्मरोऽपि नष्टसंकल्पः समाधेः श्रोत्रकण्टकम्।
घण्टापटुरटत्पत्रं निर्ममे स्फटिकद्रुमम् ॥ ६३ ॥
D 731 तं तारमुखरं वृक्षं मारं च सबलायुधम्।
चक्रवाटे समुत्क्षिप्य चिक्षिपुर्व्योमदेवताः ॥ ६४ ॥
15 भगवानथ संप्राप्तप्रसन्नज्ञाननिर्मलः।
सर्ववित्सर्वगः सर्वजातिस्मृतिपरोऽभवत् ॥ ६५ ॥
स तत्रानुत्तरज्ञानसम्यक्संबोधिमापितः।
ददर्श सर्वभूतानि गतिं कर्मोर्मिनिर्मिताम् ॥ ६६ ॥
अथ शाक्यपुरे मारः प्रवादमसृजद्दिवः।
20 बोधिसत्त्वः प्रयातोऽस्तं तपःक्लेशवशादिति ॥ ६७ ॥
तत्र शुद्धोदनो राजा पुत्रस्नेहविषातुरः।
निपपात तमाकर्ण्य वज्राहत इव क्षितौ ॥ ६८ ॥
अन्तःपुरं सहनृपे प्राणत्यागकृतक्षणे।
सुवृत्तपक्षपातिन्यस्तमूचुर्व्योमदेवताः ॥ ६९ ॥
25 पुत्रस्तवामृतं पीत्वा सम्यक्संबुद्धतां गतः।
तेनावलोकितस्यापि नास्ते मृत्युभयं कुतः ॥ ७० ॥
इति सान्तःपुरामात्यः श्रुत्वा नरपतिर्वचः।
अभूत्प्रत्यागतप्राणः सुधासिक्त इव क्षणात् ॥ ७१ ॥
D 783 तस्मिन् महोत्सवानन्दे बोधिसत्त्ववधूः सुतम्।
30 कान्तं यशोधरासूत राहुग्रस्ते निशाकरे ॥ ७२ ॥
राहुलाख्यः स बालोऽपि नृपतेर्जन्मशङ्किनः।
जनन्या सशिलः शुद्ध्यै निक्षिप्तोऽम्भसि पुप्लुवे ॥ ७३ ॥

भगवानपि सप्ताहं स्थितो निश्चलविग्रहः ।
वज्रपर्यङ्कबन्धेन देवानां विस्मयं व्यधात् ॥ ७४ ॥
स ब्रह्मकायिकाख्याभ्यां देवताभ्यां विरोधितः ।
अवदत्परमानन्दसुधासंदोहसुन्दरः ॥ ७५ ॥
अहो बत मया ज्ञाता पूर्वमेषा सुखस्थितिः । 5
यया सुरासुरैश्वर्यसुखं दुःखगणायते ॥ ७६ ॥
लावण्याम्भःप्लाविताङ्गास्तरुण्यः
पीयूषार्द्रः स्वर्गसंभोगवर्गः ।
अस्याशेषत्यागहेलासुखस्य
स्पर्धाबन्धे पांशुनिःसार एव ॥ ७७ ॥ 10
संतप्तोऽहं विषयविषमक्लेशसंसारपान्थः
क्लान्तः शान्त्याश्रितिमुपगतश्चन्दनच्छाययेव ।
संजातेयं सकलकरणव्यापिनी निर्वृतिर्मे
विश्रान्तानां शमहिमवने किं सुखस्योपमानम् ॥ ७८ ॥
अस्मिन्नवसरे पुण्यपरिपाकेण तद्वनम् । 15 D 735
वणिजौ पृथुसार्थेन प्राप्तौ त्रपुसभल्लिकौ ॥ ७९ ॥
देवताप्रेरितौ भक्त्या भगवन्तमुपेत्य तौ ।
प्रणतौ पिण्डपातोऽयं गृह्यतामित्यभाषताम् ॥ ८० ॥
दयाविधेयः सर्वज्ञस्तदाकर्ण्य व्यचिन्तयत् ।
पूर्वैः पात्रे गृहीतोऽयं न पाणौ पात्रवर्जिते ॥ ८१ ॥ 20
इति चिन्तयतस्तस्य महाराजाभिधाः सुराः ।
दत्वा स्फटिकपात्राणि चत्वारि त्रिदिवं ययुः ॥ ८२ ॥
कृत्वाथ भगवान् पात्रे पिण्डपातप्रतिग्रहम् ।
अनुग्रहं तयोश्चक्रे शरण्यत्रयशासनात् ॥ ८३ ॥
विततसुकृतसाक्षी पुण्यनिक्षेपदक्षः 25
क्षयितविपदशेषः प्रार्थनाकल्पवृक्षः ।
भवति कुशलमूलैः कस्यचिद्भाग्यभाजः
शुभपरिणतिदीक्षादक्षिणः साधुसङ्गः ॥ ८४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मारविद्रावणावदानं नाम पञ्चविंशः पल्लवः ॥ 30



D 737

# २६ शाक्योत्पत्तिः ।

वंशः स कोऽपि विपुलः कुशलानुबन्धी
यश्चारुवृत्तमुचितं गुणसंग्रहस्य ।
रत्नं विशुद्धरुचिसूचितसत्प्रकाशं
5 मुक्तामयं जगदलंकरणं प्रसूते ॥ १ ॥

न्यग्रोधाराममनिरतं पुरा कपिलवास्तुनि ।
शाक्याः स्ववंशं पप्रच्छुर्भगवन्तं तथागतम् ॥ २ ॥
तैः पृष्टः स्वकुलोत्पत्तिं स मौद्गल्यायनं पुरः ।
वक्तुं न्ययुङ्क्त कृत्वास्य विमलज्ञानदर्शनम् ॥ ३ ॥
10 स विलोक्य यथातत्त्वमतीतं ज्ञानचक्षुषा ।
तानवोचत संस्मृत्य श्रूयतां शाक्यसंभवः ॥ ४ ॥
अशेषेऽस्मिन् जलमये जगत्येकार्णवे पुरा ।
स्थिते पवनसंस्पर्शात्पयः पय इवाभवत् ॥ ५ ॥
जले तस्मिन् घनतया याते कठिनतां शनैः ।
15 अभूद्वर्णरसस्पर्शशब्दगन्धमयी मही ॥ ६ ॥
D 739
तस्यामाभास्वरा देवाश्च्युताः कर्मपरिक्षयात् ।
तत्तुल्यवर्णसंभूताः सत्त्वाः सत्त्वबलाधिकाः ॥ ७ ॥
अङ्गुल्या रसमास्वाद्य तत्तृष्णातीव्रमोहिताः ।
आहारदोषात्संप्रापुर्गुरुरूक्षविवर्णताम् ॥ ८ ॥
20 अन्नप्रसविनी तेषां क्रमेणाभूद्वसुंधरा ।
तमोभिश्च विलुप्तानां क्षेत्रागारपरिग्रहा ॥ ९ ॥
ततस्तेषां क्षतत्राणात् क्षत्रियः क्षितिपालने ।
महासंमतनामाभूज्जनस्य महतो मतः ॥ १० ॥
तस्यान्वये महत्यासीन्नृपः श्रीमानुपोषधः ।
25 अम्लानकीर्तिकुसुमः पारिजात इवोदधौ ॥ ११ ॥
चक्रवर्ती सुतस्तस्य मान्धाताभूदयोनिजः ।
जगत्येकातपत्रस्य यस्य वंशो महानभूत् ॥ १२ ॥
वंशे सहस्रवंशस्य कृकिस्तस्याभवन्नृपः ।
चित्तप्रसादमकरोद् भगवान् यस्य काश्यपः ॥ १३ ॥
30 इक्ष्वाकुरन्वये तस्य तस्य चाभूद् विरूढकः ।
प्रीत्या कनीयसः सूनोर्ज्येष्ठास्तेन विवासिताः ॥ १४ ॥

एकीभूय ततः सर्वे स्वदेशविगतस्पृहाः । D 741
कुमाराः कपिलाख्यस्य महर्षेराश्रमं ययुः ॥ १५ ॥
ध्यानकालान्तरायाणां बाल्यादुच्चैः प्रलापिनाम् ।
सोऽन्यत्र निर्ममे तेषां पुरं कपिलवास्त्विति ॥ १६ ॥
कालेन पुत्रवात्सल्यादनुतापेन भूपतिः । 5
आनीयन्तां कुमारास्ते सचिवानित्यभाषत ॥ १७ ॥
तमूचुर्मन्त्रिणः सर्वे राजन् प्राप्तपुरोत्तमाः ।
प्रत्यानेतुमशक्यास्ते जातापत्यपृथुश्रियः ॥ १८ ॥
इति तेषां पितुस्तत्र शक्याशक्यविचिन्तने ।
बभूवुः शाक्यसंज्ञास्ते नृपुरस्तेषु वंशकृत् ॥ १९ ॥ 10
तद्वंशेषु पञ्चपञ्चसहस्रेषु महीभुजाम् ।
अतीतेषु क्षितिपतिः श्रीमान् दशरथोऽभवत् ॥ २० ॥
तस्यान्वये सिंहहनुर्बभूव पृथिवीपतिः ।
न रणे सिंहमिव यं संहिरे राजकुञ्जराः ॥ २१ ॥
ज्येष्ठः शुद्धोदनस्तस्य सुतः शुक्लोदनः परः । 15
द्रोणोदनस्तदनुजः कर्नीयानमृतोदनः ॥ २२ ॥
कन्याश्चतस्रः शुद्धाख्या शुक्ला द्रोणामृता तथा । D 743
शुद्धोदनस्य भगवान् सूनुर्नन्दस्तथापरः ॥ २३ ॥
शुक्लोदनस्य तनयौ द्वौ तिष्याख्योऽथ भद्रिकः ।
द्रोणोदनस्य द्वौ पुत्रावनिरुद्धो महांस्तथा ॥ २४ ॥ 20
आनन्ददेवदत्ताख्यावमृतोदनसंभवौ ।
शुद्धासुतः सुप्रशुद्धः शुक्लासूनुश्च मालिकः ॥ २५ ॥
द्रोणापुत्रश्च भद्राणिर्वैशाल्याख्योऽमृतासुतः ।
राहुलो भगवत्सूनुर्यस्मिन् वंशः प्रतिष्ठितः ॥ २६ ॥
इत्युज्ज्वलज्ञानमयेन तेन 25
वंशं यथावत्कथितं निशम्य ।
शाक्या बभूवुर्भगवत्प्रभावैः
संभावितोत्कर्षविशेषशुद्धाः ॥ २७ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शाक्योत्पत्तिर्नाम षड्विंशः पल्लवः ॥ 30

D 745

# २७ श्रोणकोटीविंशावदानम् ।

स कोऽपि सत्त्वस्य विवेकबन्धोः
पुण्योपसन्नस्य महान् प्रभावः ।
नापैति यः कायशतेषु पुंसः
5 कस्तूरिकामोद इवांशुकस्य ॥ १ ॥
जिने सर्वजगज्जन्तुसंतापकरुणाह्रदे ।
पुरे राजगृहे वेणुवनान्तरविहारिणि ॥ २ ॥
श्रीमानभूद्भूमिपतिश्चम्पायां पोतलाभिधः ।
जहार धनदर्पान्ध्यं धनेन धनदस्य यः ॥ ३ ॥
10 अजायत सुतस्तस्य मनोरथशतान्वितः ।
धनानामीप्सितावाप्त्यै सुखसख्यो विभूतयः ॥ ४ ॥
श्रवणर्क्षेण जातस्य स सूनोस्तस्य जन्मनि ।
प्रीत्या ददौ दरिद्रस्य कोटीनां विंशतिं तदा ॥ ५ ॥
स श्रोणकोटीविंशाख्यः शिशुः ख्यातस्तदाभवत् ।
15 विभवः सुकृतेनैव येन वंशो विभूषितः ॥ ६ ॥
D 747 प्राप्तविद्यः स सर्वार्थैः सह वृद्धिमुपागतः ।
चकार सुखविश्रान्तिं व्यवहारधरः पितुः ॥ ७ ॥
स कदाचित्प्रभापुञ्जमिव सूर्यस्य मण्डलात् ।
अवतीर्णं पुरप्राप्तं मौद्गल्यायनमब्रवीत् ॥ ८ ॥
20 को भवानर्कसंकाशः प्रकाशितदिगन्तरः ।
त्रिदशेशः शशाङ्को वा देवो वा द्रविणेश्वरः ॥ ९ ॥
स तं बभाषे न सुरः शिष्यो भगवतस्त्वहम् ।
बुद्धस्य विबुधाधीशवन्द्यमानगुणश्रियः ॥ १० ॥
स्वच्छं तस्य प्रयच्छन्तं पिण्डपातं महामुनेः ।
25 सत्त्वशुद्धोदयावाप्तं भोग्यं भगवतः प्रियम् ॥ ११ ॥
इति श्रोणस्य भगवन्नाम्ना श्रवणगामिना ।
रविभक्तस्य जात्यापि रोमाञ्चः समजायत ॥ १२ ॥
प्राग्जन्मवासनायुक्तः स्वभावो यस्य यः स्थितः ।
स तस्योदीरणेनापि स्फुट एव विभाव्यते ॥ १३ ॥
30 स तस्मै विंशतिस्थालीभागं नाकजनोचितम् ।
प्राहिणोद्भक्तिसंसक्तश्रद्धायुक्तेन चेतसा ॥ १४ ॥
D 749 ततस्तं प्रेषितं तेन भगवान् भक्तिसंसदा ।
अनुग्रहाग्रहव्यग्रः समग्रं स्वयमग्रहीत् ॥ १५ ॥

अस्मिन्नवसरे भक्त्या स्थालीभागं नृपोचितम्।
समादाय स्वयं राजा बिम्बिसारः समाययौ ॥ १६ ॥
श्रोणप्रहितभोगानामामोदं तत्र पार्थिवः।
आघ्राय शक्रप्रहितं सर्वं दिव्यममन्यत ॥ १७ ॥
पात्रशेषं भगवता दत्तमास्वाद्य भूपतिः। 5
श्रोणेन प्रेषितं श्रुत्वा तदनु विस्मयं ययौ ॥ १८ ॥
भगवन्तं प्रणम्याथ राजधानीं नरेश्वरः।
प्रविश्याचिन्तयत्स्फीतां दिव्यां श्रोणस्य संपदम् ॥ १९ ॥
गच्छामि तं स्वयं गत्वा द्रष्टव्योऽसौ महायशाः।
इति निश्चित्य सचिवैः स यात्रारम्भमादिशत् ॥ २० ॥ 10
पोतलः क्षितिपं ज्ञात्वा स्वयमागमनोद्यतम्।
नीतिज्ञं पुत्रमेकान्ते श्रोणकोटीमभाषत ॥ २१ ॥
पुत्र त्वां द्रष्टुमायाति वर्णाश्रमगुरुर्नृपः।
इत्येष भृशमुत्कर्षः सदोषः प्रतिभाति मे ॥ २२ ॥
क्षितीशा लक्षतां यातं पक्षपातोद्यता इव। 15
अविलम्बितमाघ्नन्ति शरा इव गुणच्युताः ॥ २३ ॥
भृत्यानामपि विद्वेष्यो भवत्यतिशयोन्नतिः।
अभिमानैकसाराणां किं पुनः पृथिवीभुजाम् ॥ २४ ॥
रूपे वयसि सौभाग्ये प्रभावे विभवे श्रुते।
स्वसुतस्यापि संघर्षान्नोत्कर्षं सहते जनः ॥ २५ ॥ 20
जने द्वेषमये पुत्र गुणमाच्छाद्य जीव्यते।
आच्छादितगुणः पद्मः प्रियस्तीक्ष्णरुचेरपि ॥ २६ ॥
उद्धतः कस्य न द्वेष्यः प्रणतः कस्य न प्रियः।
द्रुमं पातयति स्तब्धं नम्रं रक्षति मारुतः ॥ २७ ॥
स चाभिगम्यो भूपालस्त्वां यदि स्वयमेष्यति। 25
तदेष दर्पमोहस्ते श्रेयसे न भविष्यति ॥ २८ ॥
तस्मादितः स्वयं गत्वा प्रणम्यं प्रणम प्रभुम्।
नक्षत्रराशिसदृशं दत्त्वा हारमुपायनम् ॥ २९ ॥
पितुः श्रुत्वेति वचनं श्रोणकोटीर्महीपतिम्।
प्रययौ नावमारुह्य द्रष्टुं रत्नविभूषितः ॥ ३० ॥ 30
स राजधानीमासाद्य प्राप्य दृष्ट्वा च भूपतिम्।
ददौ हारं प्रणम्यास्मै हर्षहासमिव श्रियः ॥ ३१ ॥

तं दृष्ट्वा स्वयमायातं नृपतिः स्निग्धया दृशा।
हेमरोमाङ्कचरणं विस्मयादित्यभाषत॥ ३२॥
अहो पुण्यमहेशाख्यः कोऽपि त्वं सत्त्वबान्धवः।
यस्य संदर्शनेनैव मनोवृत्तिः प्रसीदति॥ ३३॥
5 गुणेभ्यः परमैश्वर्यमैश्वर्यात्सुखमुत्तमम्।
सुखेभ्यः परमारोग्यमारोग्यात्साधुसंगमः॥ ३४॥
अपि दृष्टस्त्वया साधो भगवान् वेणुकानने।
तत्पादपद्मयुगलं द्रष्टुमर्हसि मे मतः॥ ३५॥
इत्युक्ते क्षितिनाथेन सौजन्यात्पक्षपातिना।
10 तं श्रोणकोटीविंशोऽपि प्रणयात्प्रत्यभाषत॥ ३६॥
अस्मादतुल्यकल्याणात्प्रसादाद्देवदेव ते।
अधुना योग्यतायाता भगवद्दर्शने मम॥ ३७॥
इत्युक्ते तेन सहितः प्रतस्थौ स्थितिकोविदः।
भक्त्या तथागतं द्रष्टुं पद्भ्यामेव महीपतिः॥ ३८॥
D 755 15 अस्पृष्टपादस्य भुवा श्रोणस्याजन्मवासरात्।
महार्हवस्त्रैः प्रस्थाने भृत्यैराच्छादिता मही॥ ३९॥
भगवद्भक्तिविनयाद्गौरवाच्च स भूपतेः।
वस्त्राण्यवारयद्भृत्यैर्लज्जमान इव क्षितौ॥ ४०॥
वारितेष्वथ वस्त्रेषु दिव्यवस्त्रैर्वृता मही।
20 अप्रयत्नोपकरणाः संपदः पुण्यशालिनाम्॥ ४१॥
निवार्य दिव्यवस्त्राणि भूमौ तेनार्पिते पदे।
विचचालाचला पृथ्वी सशैलवनसागरा॥ ४२॥
ततः स भूमिपतिना सह प्राप्य जिनाश्रमम्।
भगवन्तं विलोक्यास्य विदधे पादवन्दनम्॥ ४३॥
25 उपविष्टस्य तस्याग्रे हृष्टस्यालोकनामृतैः।
चक्रे शमविवेकस्य भगवानभिषेचनम्॥ ४४॥
आशयानुशयं धातुं प्रकृतिं च विचार्य सः।
सत्यसंदर्शनायास्य विदधे धर्मदेशनाम्॥ ४५॥
सत्कायदृष्टिशैलोऽस्य तया विंशतिशृङ्गवान्।
30 ज्ञानवज्रेण निर्भिन्नः स्रोतःप्राप्तिपदस्पृशः॥ ४६॥
D 757 प्रव्रज्यायां ततस्तस्य जातायां सहसा स्वयम्।
भगवन्तं प्रणम्याथ विस्मितः प्रययौ नृपः॥ ४७॥

तीव्रव्रतेऽपि श्रोणस्य कदाचित्समजायत ।
वासनाशेषसंस्काराद्बन्धुभोगसुखस्मृतिः ॥ ४८ ॥
स तमाहूय भगवान् विलक्षं प्राह सस्मितः ।
कोऽयं परिवितर्कस्ते प्रतिसंलीनचेतसः ॥ ४९ ॥
विश्लिष्टात्यन्तकृष्टा वा तन्त्री भवति विस्वरा । 5
समा माधुर्यमायाति तस्मात्साम्यं समाश्रयेत् ॥ ५० ॥
इत्यादेशाद्भगवतः सर्वसाम्यमुपागतः ।
स प्राप विमलज्ञानं पश्चात्तापविवर्जितः ॥ ५१ ॥
तस्य तामद्भुतां सिद्धिं विलोक्य पृथुविस्मयाः ।
पप्रच्छुर्भिक्षवः सर्वे भगवन्तं स चाभ्यधात् ॥ ५२ ॥ 10
श्रोणस्य श्रूयतां श्रेयःकर्म जन्मान्तरार्जितम् ।
न ह्यपुण्यानुभावानां भवन्त्यद्भुतसंपदः ॥ ५३ ॥
विपश्यी भगवान् सम्यक्संबुद्धः सुगतः पुरा ।
पुरीं बन्धुमतीं नाम जनचारिकया ययौ ॥ ५४ ॥
तत्र भक्त्या सुकृतिभिर्भक्तायोपनिमन्त्रितः । 15 D 759
वारेण प्रत्यहं गेहं ययौ तेषां सहानुगः ॥ ५५ ॥
ततो दरिद्रः संप्राप्तवारो ब्राह्मणदारकः ।
इन्द्रसोमाभिधश्चक्रे यत्नात् तद्योग्यभोजनम् ॥ ५६ ॥
स प्रयत्नेन महता भोज्यं भक्तिपवित्रितम् ।
आच्छाद्य वस्त्रैर्वसुधां प्रह्वस्तस्मै न्यवेदयत् ॥ ५७ ॥ 20
तद्भोगप्रणिधानेन जातः सोऽयं महाधनः ।
सौवर्णरोमचरणः श्रोणकोटी सुरोपमः ॥ ५८ ॥
न वस्त्ररहिता भूमिः स्पृष्टानेन कदाचन ।
कम्पस्तच्चरणस्पर्शादत एवाभवद्भुवः ॥ ५९ ॥
इति सुगतवचः सुधावदातं 25
दशनमयूखमिवोन्मिषत्स्वभावम् ।
प्रणिहितहृदयः परं निपीय
स्थिरकुशलाय बभूव भिक्षुसंघः ॥ ६० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
श्रोणकोटीविंशावदानं सप्तविंशः पल्लवः ॥ 30

## २८ धनपालावदानम् ।

दौर्जन्यदुःसहविशालखलापकारै-
नैंवाशये विकृतिरस्ति महाशयानाम् ।
व्यालोल्बणक्षितिभृदाकुलितोऽपि सिन्धु-
नैंवोत्ससर्ज हृदयादमृतस्वभावम् ॥ १ ॥
पुरे पुरा राजगृहे भगवान् वेणुकानने ।
कलन्दकनिवासाख्ये विजहार मनोहरे ॥ २ ॥
तत्र वित्रासितानेकशत्रुनिस्त्रिंशबान्धवः ।
अजातशत्रुनामाभूद् बिम्बिसारसुतो नृपः ॥ ३ ॥
शाक्यवंश्यः सुहृत्तस्य देवदत्ताभिधोऽभवत् ।
क्षुद्रमन्त्रेण यस्यासीत् स वेताल इवोत्कटः ॥ ४ ॥
स कदाचित्सुखासीनं रहः प्राह महीपतिम् ।
न राजन् फलितोऽद्यापि ममापि त्वत्समाश्रयः ॥ ५ ॥
मिथ्योपचाररहितः सुखनिर्यन्त्रतन्त्रयोः ।
मिथो मनोरथत्राणान्मित्रशब्दः प्रवर्तते ॥ ६ ॥
य एष शाक्यश्रमणः सुखे वेणुवने स्थितः ।
तं हत्वा प्राप्तुमिच्छामि तत्पदं देववन्दितम् ॥ ७ ॥
क्षीयते न यया शत्रुर्लभ्यते न यया यशः ।
वर्धते न यया मानः किं तया मित्रसंपदा ॥ ८ ॥
महाधनाभिधानेन तत्पौरेण निमन्त्रितः ।
स पुरं प्रातरागन्ता दाम्भिकः सह भिक्षुभिः ॥ ९ ॥
राजमार्गं प्रविशतः स तस्य व्यालकुञ्जरः ।
उत्सृज्यतामभिमुखः क्रोधान्धो धनपालकः ॥ १० ॥
इत्युक्ते देवदत्तेन नृपतिर्मित्रवत्सलः ।
बुद्धप्रभावं संचिन्त्य नाह किंचिदवाङ्मुखः ॥ ११ ॥
देवदत्तोऽपि निर्गत्य राजसौहार्ददुर्मदः ।
प्राह हस्तिमहामात्रं हारं दत्वास्य तोषणम् ॥ १२ ॥
श्रमणः प्रातरागन्ता पुरं भिक्षुशतैर्वृतः ।
प्रेरणीयस्त्वया तस्मै गज इत्याह भूपतिः ॥ १३ ॥
देवदत्तवचः श्रुत्वा तथेत्यूचे द्विपाधिपः ।
श्रेणी हि मेषमूर्खाणामेकयातानुपातिनी ॥ १४ ॥

ज्ञात्वापि तमभिप्रायं सर्वज्ञः पापचेतसाम्। D 765
प्रातः समाययौ सार्धं भिक्षूणां पञ्चभिः शतैः ॥ १५ ॥
अथ हस्तिपकोत्सृष्टः कृष्टप्रासादपादपः।
तमभ्यधावदाविद्धः क्रोधान्धः क्रूरकुञ्जरः ॥ १६ ॥
अनायत्तः परिचयादङ्कुशस्य गुरोरपि। 5
खलविद्वानिव द्वेषी मदेन मलिनीकृतः ॥ १७ ॥
सेवाव्यसनसक्तानामसकृत्कर्णचापलात्।
प्राणापहारी भृङ्गाणां भृत्यानामिव दुष्पतिः ॥ १८ ॥
मन्दरोपद्रवे तस्मिन् द्रुमद्रोहिण्यभिद्रुते।
विद्रुते सहसा लोके हाहाकारो महानभूत् ॥ १९ ॥ 10
तस्याश्वत्कर्णतालानिलतुलितसरत्सान्द्रसिन्दूरपूरैः
संपूर्णे राजमार्गे च्युतचकितवधूरक्तवस्त्रासमानैः।
उद्दण्डोच्चण्डशुण्डभ्रमणरवलसत्साध्वसायासिताशा
व्यालोलालकाभभ्रमरमिलद्विभ्रमः संभ्रमोऽभूत् ॥ २० ॥
पुरप्रमाथव्यथिते जने कोलाहलाकुले। 15
आरुरोह महाहर्म्यं देवदत्तः प्रमत्तधीः ॥ २१ ॥ D 767
भगवद्ग्रहणं द्रष्टुं सोऽभवद्भृशमुत्सुकः।
उन्मूलनेन गुणिनां मातङ्गः परितुष्यति ॥ २२ ॥
विद्रुतेषु गजत्रासात् तेषु सर्वेषु भिक्षुषु।
आनन्द एक एवाभूद् भिक्षुर्भगवतोऽन्तिके ॥ २३ ॥ 20
तत्र पञ्चाननाः पञ्च निर्ययुर्भगवत्करात्।
करालकेसरसटास्तन्नखांशुचिता इव ॥ २४ ॥
द्विपस्तद्गन्धमाघ्राय दर्पापस्मारवारणम्।
अभूत् स्रुतशकृन्मूत्रः सहसैव पराङ्मुखः ॥ २५ ॥
जवेन विद्रुतस्तत्र दन्ती दर्पदरिद्रताम्। 25
प्राप्तः प्रदीप्तदहनाः स ददर्श दिशो दश ॥ २६ ॥
स विलोक्य जालवह्निज्वलज्ज्वालाकुलं जगत्।
पादपद्मान्तिकं शास्तुः शीतलं समुपाययौ ॥ २७ ॥
संकोचाभिरुचेः सचिन्तमनसः प्रध्वस्तवक्त्रद्युते-
र्दैन्यापन्नविहीनदानमधुपप्रारब्धकोलाहलः। 30
लोभान्धस्य महाव्ययोत्सव इव क्लेशोष्मनिश्वासिन-
स्तस्याभूत्परितापनिश्लथगतेर्भारायमाणः करः ॥ २८ ॥

D 769 तं पादमूलमायान्तं भीतं कारुण्यसागरः।
शास्ता करेण पस्पर्श चक्रस्वस्तिकलक्ष्मणा ॥ २९ ॥
कुम्भविन्यस्तहस्तस्तं प्रोवाच भगवान् जिनः।
पुत्र स्वकर्मणैवेमां प्राप्तोऽसि त्वमिमां दशाम् ॥ ३० ॥
5 विवेकालोकजलदः कायोऽयं मांसभूधरः।
भारस्ते मोहसंभारः पापादुपनतः परः ॥ ३१ ॥
इत्युक्ते करुणार्द्रेण भीतो भगवता गजः।
स लब्धश्वासमालानलीनो निश्चलतां ययौ ॥ ३२ ॥
देवदत्तस्य संकल्पे कुञ्जरे च महोत्कटे।
10 भग्ने निर्विघ्नहर्षोऽभूत्समुद्गताद्भुतो जनः ॥ ३३ ॥
ततः कृत्वा गृहपतेर्गृहे भोज्यप्रतिग्रहम्।
भगवान् भिक्षुभिः सार्धं काननं गन्तुमुद्ययौ ॥ ३४ ॥
अभिसृत्य गजेन्द्रोऽपि जिनस्य चरणाब्जयोः।
कृत्वा करेण संस्पर्शं वपुस्तत्याज कौञ्जरम् ॥ ३५ ॥
15 चातुर्महाराजिकेषु देवेषु विशदद्युतिः।
उपपन्नः स सहसा सुगतं द्रष्टुमाययौ ॥ ३६ ॥
D 771 स्वमाश्रमपदं प्राप्तं भगवन्तमुपेत्य सः।
प्रणनामार्कसंकाशं प्रदीप्तमणिकुण्डलः ॥ ३७ ॥
तस्य केयूरमुकुटप्रभापल्लवपूरिताः।
20 शक्रचापैरिव व्याप्ता विरेजुर्घनराजयः ॥ ३८ ॥
विनयादुपविश्याग्रे स शास्तुः स्रस्तकल्मषः।
तं दिव्यपुष्पैराकीर्य सत्त्वशुभ्रैरभाषत ॥ ३९ ॥
भगवन् भवतः पादपद्मसंस्पर्शनेन मे।
दुर्दशादुःखसंतापः शान्तः संतोषशालिनः ॥ ४० ॥
25 शमश्लाघ्या कापि व्यसनविषदोषोष्मशमनी
सुधावृष्टिर्दृष्टिर्बत भगवतः स्निग्धमधुरा।
यया स्पृष्टस्पृष्टं खरतरविकारव्यतिकरं
विमुच्यान्तःशान्तिं श्रयति हतमोहः पशुरपि ॥ ४१ ॥
इति तस्य ब्रुवाणस्य भगवान् भवशान्तये।
30 सत्यदर्शनसंशुद्धां विदधे धर्मदेशनाम् ॥ ४२ ॥
मौलिमुक्तांशुशुभ्रेण शिरसा चरणद्वयम्।
स शास्तुः प्रययौ नत्वा हसन्निव भवभ्रमम् ॥ ४३ ॥

D 773

गते तस्मिन् मुखशशिप्रकाशितनभस्तले ।
भगवान् भिक्षुभिः पृष्टस्तद्वृत्तान्तमभाषत ॥ ४४ ॥
पूर्वकल्पान्तरे शास्तुः काश्यपाख्यस्य शासने ।
अभूत्प्रव्रजितोऽप्येष शिक्षापदनिरादरः ॥ ४५ ॥
अनादरात्कुञ्जरताभोगः संघोपसेवनात् । 5
सत्यदृष्टिबलेनान्ते संप्राप्तः शासनग्रहः ॥ ४६ ॥
प्राग्जन्मविहितं कर्म कस्यचिन्न निवर्तते ।
कर्मोपदिष्टसंबन्धभक्तिभोगैः सचेतसः ॥ ४७ ॥
तस्मिन् व्यतिकरे घोरे सर्वैस्त्यक्तोऽस्मि भिक्षुभिः ।
न त्वानन्देन तत्रापि श्रूयतां पूर्वसंगतिः ॥ ४८ ॥ 10
शशाङ्कशीतसरसि भ्रातरौ रुचिरौ पुरा ।
पूर्णमुखः सुखश्चेति राजहंसौ बभूवतुः ॥ ४९ ॥
कदाचिद्ब्रह्मदत्तस्य वाराणस्यां महीपतेः ।
ब्रह्ममतीं पुष्करिणीं रम्यां पूर्णमुखो ययौ ॥ ५० ॥
स तस्यां लोलकमलकिञ्जल्कपरिपिञ्जरः । 15
विजहार सरोजिन्यां हंसानां पञ्चभिः शतैः ॥ ५१ ॥

D 775

पूर्वपुण्यानुभावेन तं रूपातिशयोज्ज्वलम् ।
ददर्श कार्याण्युत्सृज्य जनो निश्चललोचनः ॥ ५२ ॥
तं श्रुत्वा भूपतिस्तत्र स्थितं तद्दर्शनोत्सुकः ।
कुशलान् ग्रहणे तस्य व्यसृजज्जालजीविनः ॥ ५३ ॥ 20
तस्मिन् गृहीते नलिनीलीलास्मितसितत्विषि ।
शतानि पञ्च हंसानां त्यक्त्वा तं प्रययुर्जवात् ॥ ५४ ॥
एकस्तु तस्य सौजन्यादबद्धोऽपि सुबद्धवत् ।
तदर्थं व्यथितस्तस्थौ प्रेमपाशवशीकृतः ॥ ५५ ॥
ततस्तैः प्रापितं राजा राजहंसं विलोक्य तम् । 25
स्नेहबद्धं द्वितीयं च विस्मितस्ताववलोकयत् ॥ ५६ ॥
हंसः पूर्णमुखः सोऽहमानन्दस्तस्य चानुगः ।
गतास्तदद्य च त्यक्त्वा मां हंसा एव भिक्षवः ॥ ५७ ॥
पूर्वस्मिन्नभवत्काले वाराणस्यां महीपतिः ।
तुष्टिर्नाम मनःपट्टे लिखितं यद्यशः परैः ॥ ५८ ॥ 30
सहस्रयोधस्तस्याभूद् दाक्षिणात्यो निरत्ययः ।
करदण्डीति विख्यातः संग्रामाग्रेसरः प्रियः ॥ ५९ ॥

D 777

कदाचिद् घोरसमरे पञ्चामात्यशतानि तम् ।
नृपं त्यक्त्वा ययुर्भीत्या करदण्डी तु नात्यजत् ॥ ६० ॥
अहमेव स भूपालः सचिवास्ते च भिक्षवः ।
करदण्डी स एवायमानन्दो न जहाति माम् ॥ ६१ ॥
5
जन्मान्तरेऽपि सिंहोऽहं मासं कूपे निपातितः ।
उपेक्षितः क्षणाद्भृत्यैः शृगालैर्येऽद्य भिक्षवः ॥ ६२ ॥
एकेन च नखैः खातं दीर्घं कृत्वास्मि मोक्षितः ।
जम्बुकेन स एवायमानन्दोऽद्य ममानुगः ॥ ६३ ॥
कूटपाशनिबद्धस्य मृगयूथपतेः पुरा ।
10
लुब्धकागमने एव जग्मुस्तदनुगा मृगाः ॥ ६४ ॥
अनुरक्ता न तत्याज तं मृगी साश्रुलोचना ।
प्रीतिशृङ्खलया बद्धा याता निस्पन्दतामिव ॥ ६५ ॥
अथ लुब्धकमायान्तं दृष्ट्वा मृगवधोद्यतम् ।
सावदन्मम बाणेन प्रथमं हर जीवितम् ॥ ६६ ॥
15
इति स्पष्टगिरा तस्याः स्नेहेन च स विस्मितः ।
मुमोच लुब्धकः प्रीत्या हरिणं हरिणीसखम् ॥ ६७ ॥

D 779

मृगयूथपतिः सोऽहमानन्दः सा कुरङ्गिका ।
इत्येष प्रीतिसंबन्धः प्राग्वृत्तमनुवर्तते ॥ ६८ ॥
श्रुत्वेति वाक्यं सुगतस्य सर्वे
लज्जानिलीना इव भिक्षवस्ते ।
20
सानन्दमानन्दमुखारविन्दं
प्रभाभिरामं ददृशुः स्पृहार्द्राः ॥ ६९ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
धनपालावदानं अष्टाविंशः पल्लवः ॥



# २९ काशीसुन्दरावदानम् ।

जयति स सत्त्वविशेषः सत्त्ववतां सर्वसत्त्वसुखहेतुः । D 781
देहदलनेऽपि शमयति कोपाग्निं शान्तिमुच्चैर्यः ॥ १ ॥

धर्मोपदेशे भगवान् कौण्डिन्यस्याग्रवर्तिनः ।
भिक्षोः कथाप्रसङ्गेन पृष्टो भिक्षुभिरभ्यधात् ॥ २ ॥ 5

ब्रह्मदत्तस्य तनयो वाराणस्यां महीपतेः ।
काशिसुन्दरनामा च कालभूश्च बभूवतुः ॥ ३ ॥

यौवराज्यभरैकार्हः कुमारः काशिसुन्दरः ।
धर्माधर्ममयं राज्यं विचार्याचिन्तयच्चिरम् ॥ ४ ॥

क्षणक्षयिणि तारुण्ये जीविते वीचिचञ्चले । 10
राज्ये स्वप्नविवाहेऽस्मिन् मोहमूले न मे मतिः ॥ ५ ॥

रागप्रलापबहुले मायामोहमहे मुहुः ।
वेश्यारोदननिःसारे संसारे नास्ति सत्यता ॥ ६ ॥

प्रव्रज्यामनघस्तस्मादगारादनगारिकम् । D 783
निस्त्रिंशवृत्तिसंसक्ताभिरागः किं विभूतिभिः ॥ ७ ॥ 15

राजसूनुर्विचिन्त्येति विवेकविमलाशयः ।
उवाचाभ्येत्य भूपालमरण्यगमनोत्सुकः ॥ ८ ॥

मम संभोगवर्गोऽयं राजन्नैवोपयुज्यते ।
यौवराज्याभिषेकार्हः समारम्भो निवार्यताम् ॥ ९ ॥

क्रोधाग्नितप्ताः सुतरामेतास्तात न मे मताः । 20
बद्धबन्धभयायासजनन्यो राजसंपदः ॥ १० ॥

व्याप्ताः क्रूरतराचारैर्ज्वलिताः पार्थिवश्रियः ।
कुर्वन्ति कस्य नोद्वेगं श्मशानाग्निशिखा इव ॥ ११ ॥

छत्रसंछादिता लोकाश्चामरानिललोलिताः ।
पतन्ति पातकश्वभ्रे मदक्षीबाः क्षितीश्वराः ॥ १२ ॥ 25

मृदुभोगांशुकाभ्याससुकुमारे महीभुजाम् ।
काये पतति पर्यन्ते क्लेशः कुलिशदारुणः ॥ १३ ॥

चिन्तासंततसंतापतीव्रतृष्णाप्रलापिनाम् ।
राज्यज्वरजुषां नैषां मोहमूर्च्छा निवर्तते ॥ १४ ॥

वक्राणां रन्ध्रदीप्तानां द्विजिह्वानां पदे पदे । D 785 30
छिद्रसंदर्शिनां राज्ञां व्यापारः परमारणम् ॥ १५ ॥

नृपवंशशतोच्छिष्टां मन्यते मामनन्यगाम् ।
इतीव श्रीः क्षितीशानां हारचामरहासिनी ॥ १६ ॥
व्यञ्जितव्यजनोच्छ्वासा लक्ष्मीर्मुक्ताश्रुसंततिः ।
राज्ञां मोहाभृतातीतभूपतिस्मरणादिव ॥ १७ ॥
5 तस्माद्व्रजामि प्रव्रज्याविवर्जितजनस्थितिः ।
संतोषशीतलच्छायं संतापशमनं वनम् ॥ १८ ॥
अविश्रान्तस्य संसारपथपान्थस्य दुर्वहः ।
कायोऽस्य यत्सदापायः किं पुनः पृथिवीभरः ॥ १९ ॥
इति पुत्रवचः श्रुत्वा भूपतिर्भृशमप्रियम् ।
10 प्रव्रज्याशब्दचकितः सोद्वेगस्तमभाषत ॥ २० ॥
अस्य वंशस्य महतः साम्राज्यस्य च वृद्धये ।
आशानिबद्धवृद्धेन त्वयि पुत्र मया परम् ॥ २१ ॥
वत्स संकल्पभङ्गं मे न काले कर्तुमर्हसि ।
इदं तव महच्छायं यौवनं न वनोचितम् ॥ २२ ॥
D 787 15 समग्राभ्यासयुक्तानां शक्तानां साधुदर्शने ।
जितेन्द्रियाणां सर्वत्र नृपाणामभवनं तपः ॥ २३ ॥
स्वपदेऽपि सरोजस्य निःसङ्गसलिलस्थितिः ।
दृष्टा वनेऽप्यशोकस्य ललनाचरणाहतिः ॥ २४ ॥
स्वगेहसुलभैर्भोगैर्यावद्दृष्टिविसूचिका ।
20 तावदेते परित्यक्तुं शक्यन्ते विषयाः क्षणम् ॥ २५ ॥
सुखमन्तः परित्यज्य स्वजनं गृहनिर्गतः ।
अभ्यस्तभोगविरहक्लेशं न सहते जनः ॥ २६ ॥
श्रूयते स्मर्यते धर्मः क्रियते च सुखाद् गृहे ।
वने शुष्यन्ति शुष्काणां श्रवणस्मरणक्रियाः ॥ २७ ॥
25 क्षरत्क्षतजपादस्य दर्भसंदर्भसूचिभिः ।
ततः किं दुःखमपरं परलोके भविष्यति ॥ २८ ॥
भुञ्जानं जनमीक्षन्ते याताश्चर्मास्थिशेषताम् ।
परदत्तं सदाश्नन्ति प्रेता इव तपस्विनः ॥ २९ ॥
वने निवसनं पुत्र पांशुप्रावरणं समम् ।
30 पालनं ब्रह्मचर्यस्य मकराकरशोषणम् ॥ ३० ॥
D 789 दावाग्निधूमविकटभ्रुकुटीमुखेषु
गोनासवासघनघूकगुहागृहेषु ।

सिंहाहतद्विरदलोहितलोहितेषु
त्यक्त्वा गृहं भवति कस्य धृतिर्वनेषु ॥ ३१ ॥
कामी संयममिच्छति स्मरति च श्यामारतेः संयमी
तृप्तस्तीव्रतरव्रतेषु रमते भक्ष्यं क्षुधा काङ्क्षति ।
एकाकी जनमीहते जनघनोद्वेगी वनं वाञ्छति 5
त्यक्त्वान्वेषणतत्पराः पुनरपि प्राप्यात्रमानं जनाः ॥ ३२ ॥
न मां पुत्र परित्यज्य गहनं गन्तुमर्हसि ।
भवन्तु तव शत्रूणां वनवासमनोरथाः ॥ ३३ ॥
व्यक्तमौक्तिकहासिन्यः करवाललता इव ।
त्यक्ता न पुनरायान्ति मानिन्यो नृपसंपदः ॥ ३४ ॥ 10
इत्युक्तोऽप्यसकृत् पित्रा निश्चयान्न चचाल सः ।
वज्ररत्नशिखाकल्पः संकल्पो हि महात्मनाम् ॥ ३५ ॥
जननीभिरमात्यैश्च बन्धुपौरमहत्तमैः ।
स प्रार्थितोऽप्यभून्मौनी निराहारो दिनत्रयम् ॥ ३६ ॥
राजभोगी तपस्वी वा जीवत्येष निजेच्छया । 15 D 791
कामानुवर्ती लोकोऽयमित्यूचुः सचिवा नृपम् ॥ ३७ ॥
स कथंचिदनुज्ञातः साश्रुनेत्रेण भूभुजा ।
ययौ पौरजनाक्रन्दमौनी मुनितपोवनम् ॥ ३८ ॥
वैराग्यपरिपाकेण तत्र मैत्रीपवित्रिताम् ।
भेजे स सर्वसत्त्वेषु विवेकदयितां दयाम् ॥ ३९ ॥ 20
बभूवुस्तत्प्रभावेण तत्र सर्ववनौकसाम् ।
जातिवैरानलत्यागशीतलाश्चित्तवृत्तयः ॥ ४० ॥
त्यक्ते प्राणवधे प्रसक्तहरिणीवृन्दैः पुलिन्दैः परं
सिंहैर्वारणदारणव्युपरमे सर्वाङ्गसङ्गीकृते ।
मायूरावरणैर्दरिद्रजघना मुक्ताकलापोज्झिता- 25
स्तत्रोच्छ्वासविरागशुष्यदधरा जाताः किराताङ्गनाः ॥ ४१ ॥
क्षमां त्यक्त्वाब्धिवसनां सर्वभूतक्षमाश्रितः ।
सोऽभवत् क्षान्तिवादीति विश्रुतः काशिसुन्दरः ॥ ४२ ॥
अत्रान्तरे महीहर्षे ब्रह्मदत्ते दिवं गते ।
उद्वेग इव भूतानां भूपालः कलिभूरभूत् ॥ ४३ ॥ 30
अथादभ्रभ्रमद्भृङ्गभ्रूभङ्गमलिनाननः । D 793
मुनिसंयमविद्वेषी वसन्तः प्रत्यदृश्यत ॥ ४४ ॥

मदनोन्मादभूतस्य प्रोद्भूतस्य मृगीदृशाम् ।
मानविध्वंसदूतस्य चूतस्य रुरुचे रुचिः ॥ ४५ ॥
रक्ताशोकस्य पार्श्वस्थलतालिङ्गनशङ्कितः ।
ईर्ष्यालुरिव पुष्पाणि जहार मलयानिलः ॥ ४६ ॥
5 उद्यानयौवने तस्मिन् काले कोकिलसंकुले ।
सान्तःपुरो नृपः प्रायाद् वनालोकनकौतुकी ॥ ४७ ॥
नानावर्णपतत्पुष्पप्रकारप्रचितानि सः ।
पश्यन् वनानि रम्याणि शनैः प्राप तपोवनम् ॥ ४८ ॥
वनस्थलीषु कान्तासु तत्र कन्यासखश्चिरम् ।
10 विहृत्य रतिविश्रान्तः क्षणं निद्रामवाप्तवान् ॥ ४९ ॥
अपूर्वकुसुमस्मेराश्चिन्वानास्तत्र मञ्जरीः ।
अन्तःपुराङ्गनाश्चेरुः संचारिण्यो लता इव ॥ ५० ॥
अत्रान्तरे क्षान्तिवादी विविक्तोद्देशनिर्वृतः ।
एकान्ते निश्चलस्तस्थौ शान्तिमन्तर्विचिन्तयन् ॥ ५१ ॥
D 795 15 अमन्दानन्दनिष्यन्दी वन्दनीयो मनीषिणाम् ।
कृशोऽप्यकृशसौन्दर्यः शशीव प्रथमोदितः ॥ ५२ ॥
परिणाममनोज्ञेन रेखासंस्थानशोभिना ।
पुराणचित्ररूपेण नैव शून्या तदाकृतिः ॥ ५३ ॥
तं दृष्ट्वा राजललनाश्चित्तदर्पणमार्जनम् ।
20 तत्रैव निश्चलास्तस्थुस्ताश्चित्रलिखिता इव ॥ ५४ ॥
प्रबुद्धोऽथ नृपः क्षिप्रं नापश्यद्दयिताः पुरः ।
ददर्श वनमन्विष्य परिवार्य स्थिता मुनिम् ॥ ५५ ॥
भुजङ्गस्ता विलोक्यैव श्वसन्नीर्ष्याविषाकुलः ।
विससर्ज वचोरूपहलाहलमिवोत्कटम् ॥ ५६ ॥
25 कस्त्वं मुनिव्यञ्जनया चित्रकृत्रिममात्रया ।
मुष्णासि मुग्धहृदया नूनं नारीप्रतारकः ॥ ५७ ॥
परस्त्रीहरणे ध्यानं जपस्तद्विघ्नवारणे ।
धूर्तानां परमोपायः सरलाश्वासनं तपः ॥ ५८ ॥
मुखमाधुर्यधूर्तस्य वृत्तिर्वल्कलिनस्तव ।
30 अहो नु मोहजननी वने विषतरोरिव ॥ ५९ ॥
D 797 मुनिकल्पसमाकल्पश्चरितं पुनरीदृशम् ।
सिद्धिं संभावितां वापि वेत्ति कस्तत्त्वमान्तरम् ॥ ६० ॥

इत्युक्ते भूभुजा क्रोधादक्रोधमधुराशयः ।
निर्विकारेण मनसा क्षान्तिवादी जगाद तम् ॥ ६१ ॥
क्षान्तिवादी मुनिरहं न मां शङ्कितुमर्हसि ।
एतासु निर्विशेषो मे कान्तासु च लतासु च ॥ ६२ ॥
इति तेनोक्तमाकर्ण्य क्षान्तं पश्यामि तेऽधुना । 5
इति ब्रुवाणश्चिच्छेद हस्तौ तस्यासिना नृपः ॥ ६३ ॥
विशसेऽपि क्षमाशीलं निर्विकारं विलोक्य तम् ।
चकर्त चरणौ तस्य प्रशमाय समत्सरः ॥ ६४ ॥
प्रदिशन्त्यशिवं मार्गे जिह्वया दूषयन्ति च ।
लुम्पन्त्यङ्गानि पर्यन्ते खलाः कौलेयका इव ॥ ६५ ॥ 10
ताडनेऽपि क्षमासक्ताः स्कन्धच्छेदेऽपि मौनिनः ।
शीतलास्तीव्रतापेऽपि सरलाः सरला इव ॥ ६६ ॥
निकृत्तपाणिचरणः स संस्तभ्य पृथुव्यथाम् ।
रक्षन् मन्युमनःक्षोभं क्षमया समचिन्तयत् ॥ ६७ ॥
त्यक्तान्यकर्मणानेन च्छिन्नान्यङ्गानि मे यथा । 15 D 799
संसारविषमक्लेशच्छेदं कुर्यामहं तथा ॥ ६८ ॥
कोपमोहादवज्ञाय नृपतौ भ्रातरं मुनिम् ।
पुरीं प्रयाते रजसा शोकम्लानेव भूरभूत् ॥ ६९ ॥
ततस्तद्दुःखकुपिता राज्ञे तत्क्षान्तिदेवता ।
चक्रे नगर्यां दुर्भिक्षमरकावृष्टिविप्लवम् ॥ ७० ॥ 20
नैमित्तिकेभ्यो विज्ञाय राजा मुनिपराभवात् ।
देवताकोपजं दोषं तं प्रसादयितुं ययौ ॥ ७१ ॥
निपत्य पादयोस्तस्य क्षमस्वेत्यभिधाय सः ।
पश्चात्तापविषादेन निश्चेतन इवाभवत् ॥ ७२ ॥
तमब्रवीत्क्षान्तिवादी राजन् मन्युर्न मेऽण्वपि । 25
कर्मरेखापरिच्छेदादीदृशी भवितव्यता ॥ ७३ ॥
सर्वाणि न गणयति स्वच्छन्दा भवितव्यता ।
न धैर्यं न गुणं नार्थं न तपो नापि गौरवम् ॥ ७४ ॥
अन्तःस्थितप्रसवबीजपरंपराणि
भिन्नानि कालपरिपाकविचित्रितानि । 30
जन्मस्थले विपुलमूलबलस्य जन्तु- D 801
र्भुङ्क्ते फलानि निजकर्ममहीरुहस्य ॥ ७५ ॥

त्वयि तस्मान्न मे कश्चिद् विकारोऽस्ति महीपते।
सत्येनानेन मे पश्य रुधिरं क्षीरतां गतम्॥ ७६॥
अङ्गच्छेदेऽप्यकलुषि बभूव यदि मे मनः।
सत्येनैतेन श्लिष्टानि तान्येवाङ्गानि सन्तु मे॥ ७७॥
5 इति शुद्धधियस्तस्य तीव्रसत्योपयाचनात्।
श्लिष्टान्यङ्गानि तान्येव सहसा स्वास्थ्यमाययुः॥ ७८॥
मुकुटस्पृष्टचरणस्तमुवाच नृपस्ततः।
मुने महाप्रभावोऽसि तपसा तत्किमिच्छसि॥ ७९॥
पुण्यहस्तावलम्बेन मोहान्धं करुणानिधे।
10 पापावसाने पतितं मां त्वमुद्धर्तुमर्हसि॥ ८०॥
इत्यर्थितः क्षितीशेन प्रत्यभाषत तं मुनिः।
संतारणाय मग्नानां बद्धानामपि मुक्तये॥ ८१॥
आश्वासनाय भीतानां निर्वाणाय विमुह्यताम्।
राजन्ननुत्तरां सम्यक्संबोधिं महमर्थये॥ ८२॥
D 803 15 यदा तु सम्यक्संबोधिं तामवाप्नोष्यनुत्तराम्।
मोहच्छेदं करिष्यामि तदा ज्ञानासिना तव॥ ८३॥
प्रययौ मुनिरित्युक्त्वा तमामन्त्र्य स्वमाश्रमम्।
तमेव मनसा ध्यायन् राजधानीं नृपोऽप्यगात्॥ ८४॥
क्षान्तिवादी स एवाहं कौण्डिन्यः कालभूरयम्।
20 आसाद्य सम्यक्संबोधिमुद्धृतोऽयं मयाधुना॥ ८५॥
इति सुगतमुखारविन्दनिर्मित-
मधुरमधुप्रतिमं वचः प्रसन्नम्।
भ्रमरभव इवोदितप्रमोदः
किमपि बभूव निपीय भिक्षुसंघः॥ ८६॥

25 इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
काशीसुन्दरावदानं नाम ऊनत्रिंशः पल्लवः॥

## ३० सुवर्णपार्श्वावदानम् ।

श्लाघ्यः कोऽपि स सत्त्वसारसरलः सौजन्यपुण्यस्थिति- D 805
निन्द्यः कोऽपि स धर्ममार्गगमने विघ्नः कृतघ्नः परम् ।
चित्रं यच्चरितं विचार्य सुचिरं रोमाञ्चचर्चाचित-
स्तुल्यं याति जनः सबाष्पनयनस्तद्वर्णने मूकताम् ॥ १ ॥ 5

देवदत्तप्रसङ्गेन भिक्षुभिर्भगवान् पुरा ।
पृष्टः कथामकथयत् पूर्ववृत्तान्तसंश्रयाम् ॥ २ ॥
महेन्द्रसेननामाभूद् वाराणस्यां नरेश्वरः ।
ययुः क्षितीश्वराः सर्वे यस्य लक्ष्म्या विलक्षताम् ॥ ३ ॥

चन्द्रप्रभाभवत्तस्य दिव्यकीर्तिरिव प्रिया । 10
यस्याः पत्युः प्रभावेण स्वप्नाः सत्यत्वमाययुः ॥ ४ ॥
बभूव समये तस्मिन् मृगयूथपतिर्वने ।
सुवर्णपार्श्व इत्याप्तनामा हेममयच्छविः ॥ ५ ॥

नीलरत्नोदरास्फारमुक्ताहारनिभप्रभा ।
अभूद्दृष्टिच्छटा यस्य भूषणं काननश्रियः ॥ ६ ॥ 15
प्रवालवल्लिशृङ्गस्य चित्ररत्नचितत्वचः । D 807
तस्याश्चर्यसुधाम्भोधिलहरी रुरुचे रुचिः ॥ ७ ॥
बोधिसत्त्वावतारस्य तस्य कान्तमभूद्वपुः ।
पूर्वं सुकृतचित्रस्य लक्षणं हि सुरूपता ॥ ८ ॥

दीर्घदृष्टिर्बभूवास्य वयस्यो वृद्धवायसः । 20
लुब्धकान्वेषणत्रासे दिग्विलोकनतत्परः ॥ ९ ॥
तौ कथाभिर्मिथः प्रीत्या विविक्तेषु विजह्रतुः ।
प्राक्पुण्यैर्जायते वाणी तिरश्चामपि मानुषी ॥ १० ॥
स कदाचिज्जलान्वेषी यूथनाथः सहानुगैः ।
तटिन्या वेणुमालिन्याः पुलिनं समुपाययौ ॥ ११ ॥ 25
तस्य तारतरं श्रुत्वा दीर्घमाक्रन्दनिस्वनम् ।
हरिणा दुद्रुवुः सर्वे ग्रीवावलनविभ्रमैः ॥ १२ ॥
सुवर्णपार्श्वस्तु तदा कृपापाशवशीकृतः ।
तत्रैव निश्चलस्तस्थौ मर्मविद्ध इवेषुणा ॥ १३ ॥
तदुद्धरणसंनद्धं दीर्घदृष्टिं विलोक्य तम् । 30
काकः प्रोवाच न सखे युक्तोऽयं ते समुद्यमः ॥ १४ ॥

D 809 पुष्पोपमा विपत्काले कृतार्थाः कुलिशोपमाः ।
कृतमेते न मन्यन्ते स्वकार्यसुहृदः खलाः ॥ १५ ॥

इत्यसौ वार्यमाणोऽपि काकेन करुणाकुलः ।
अवतीर्याशु सरितं सरलस्तमतारत(?) ॥ १६ ॥

5 विमुच्य बन्धनान्यस्य स शृङ्गाभ्यामशङ्कितः ।
तं पादपतितं दीनमवदद्गन्तुमुद्यतम् ॥ १७ ॥

न त्वया कथनीयोऽहमत्रस्थः कस्यचित्सखे ।
प्रार्थयन्ते सुवर्णं मां चर्मलुब्धा हि लुब्धकाः ॥ १८ ॥

इत्युक्तस्तेन विनयात् तत्तथेत्यभिधाय सः ।
10 ययौ कुटिलकाख्यस्तं प्रणम्य प्रस्तुतस्तुतिः ॥ १९ ॥

अत्रान्तरे नरपतेः पत्नी चन्द्रप्रभा निशि ।
स्वप्ने ददर्शासनस्थं मृगं सद्धर्मवादिनम् ॥ २० ॥

सत्यस्वप्नाथ सा देवी प्रबुद्धा नृपमब्रवीत् ।
सुवर्णहरिणः स्वप्ने देव दृष्टो मयाद्भुतः ॥ २१ ॥

15 तमहं द्रष्टुमिच्छामि साक्षादुपगतं मृगम् ।
अङ्कादिव मृगाङ्कस्य निर्गतं राहुशङ्कया ॥ २२ ॥

D 811 इत्युक्तः प्रणयात्प्रीतो देव्या च पृथिवीपतिः ।
मृगग्रहाय व्यसृजत् लुब्धकान् द्रविणप्रदः ॥ २३ ॥

ततः प्रतिनिवृत्तास्ते वनमन्विष्य लुब्धकाः ।
20 निष्फलागमनक्रुद्धं सकम्पा जगदुर्नृपम् ॥ २४ ॥

इयती जगती देव विचिता निचिताचलैः ।
भ्रान्ता वयमविश्रान्ता न लभ्यस्तद्विधो मृगः ॥ २५ ॥

आश्चर्यरचनाकृष्टलोचनश्चारुलोचनः ।
स्वप्नसंपन्नरूपोऽसौ हिरण्यहरिणः कुतः ॥ २६ ॥

25 मनो विनोदने तस्मिन् यदि देव प्रसीदति ।
कुर्वन्तु काञ्चनमृगं कुशलाः केऽपि शिल्पिनः ॥ २७ ॥

इति श्रुत्वा स नृपतिर्ददद्बहुतरं धनम् ।
मृगान्वेषणसंकल्पे बभूवाभिनिवेशवान् ॥ २८ ॥

ततः कुटिलकोऽभ्येत्य नृपं श्रुत्वा बहुप्रदम् ।
30 उवाच द्रविणादाने लुब्धकेभ्योऽपि लुब्धधीः ॥ २९ ॥

प्रसादः क्रियतां देव मृगं संदर्शयाम्यहम्।
दृष्टः कनकसाराङ्गः सारङ्गः स मया वने ॥ ३० ॥ D 813

इत्याकर्ण्य क्षितिपतिः प्रहर्षोत्फुल्ललोचनः।
भद्र संदर्शय क्वासौ क्वासावित्यवदन्मुहुः ॥ ३१ ॥ 5

तमेवाग्रेसरं कृत्वा मृगमार्गप्रदर्शकम्।
ससैन्यः स ययौ स्वच्छच्छत्रचन्द्रोदयाचलः ॥ ३२ ॥

दीर्घदृष्टिर्ददर्शाथ काकस्तरुशिरःस्थितः।
गजवाजिव्रजोदीर्णरेणुप्रावरणं वनम् ॥ ३३ ॥

सुवर्णपार्श्वमभ्येत्य जगाद मृगयूथपम्। 10
हितमुक्तं मया पूर्वं न श्रुतं न कृतं त्वया ॥ ३४ ॥

स एष पुरुषः प्राप्तः संनद्धैः सह धन्विभिः।
मया निवारितेनापि संहारेण न तृप्यते ॥ ३५ ॥

अधुना क्व नु गन्तव्यं किं कर्तव्यं भयोद्भवे।
हितं किमनुवर्तव्यं तुल्यं मर्तव्यमेव वा ॥ ३६ ॥ 15

कृतघ्नः क्रूरचरितः क्षुद्रोऽयं संघपातकः।
त्वयैवात्मविनाशाय रक्षितो विषपादपः ॥ ३७ ॥

स्वशरीरप्रदस्यापि संहारेण न तृप्यते।
ससत्त्वसागरग्रासी कृतघ्नो वाडवानलः ॥ ३८ ॥ 20

उपकारः कृतघ्नेषु विश्वासः कुटिलात्मसु। D 815
उपदेशश्च मूर्खेषु कर्तुर्दोषाय केवलम् ॥ ३९ ॥

इति काकेन कथिते प्रत्यासन्ने च पार्थिवे।
अचिन्तयत् प्राप्तकालं हितं यूथस्य यूथपः ॥ ४० ॥

सुभटानामियं सेना विगाहेद्गहनं महत्। 25
करोति मत्प्रसङ्गेन मुहूर्तेनैव निर्मृगम् ॥ ४१ ॥

तस्मात्सैन्यप्रधानस्य गच्छामि स्वयमन्तिकम्।
एकस्यैव वधो मेऽस्तु सर्वे जीवन्त्वमी मृगाः ॥ ४२ ॥

इति निश्चित्य स ययौ समीपं भूपतेर्मृगः। 30
परप्राणपरित्राणे तृणं प्राणा महात्मनाम् ॥ ४३ ॥

तमायान्तं द्रुतं दृष्ट्वा हृष्टः कुटिलकः पुरः।
सोऽयमित्याशु पाणिभ्यां राज्ञे दूरे व्यदर्शयत् ॥ ४४ ॥

तत्क्षणे द्रोणशापेन वज्रेणेव निपातिना ।
करौ परिच्युतौ तस्य पापपादपपल्लवौ ॥ ४५ ॥

तद्वृत्तं विस्मितः श्रुत्वा मृगेण कथितं नृपः ।
अभूत्कृतघ्नचरिते धिक्कारमुखराननः ॥ ४६ ॥

D 817 5 ततः क्षितिपतिः प्रीत्या विभूत्या परया मृगम् ।
तं निनाय स्वनगरीं गौरवेण गरीयसा ॥ ४७ ॥

राजधानीमथासाद्य तस्मै रत्नासनं नृपः ।
दत्वा सान्तःपुरामात्यस्तस्याग्रे समुपाविशत् ॥ ४८ ॥

स बोधिसत्त्वो हरिणस्तस्यां पर्षदि दिव्यधीः ।
10 धर्मं दिदेश येनाभूज्जनः शिक्षापदान्वितः ॥ ४९ ॥

सुवर्णपार्श्वः सारङ्गः सोऽयमेवाभवं पुरा ।
योऽभवत् कुटिलः क्रूरो देवदत्तः स चाधुना ॥ ५० ॥

इति सुकृतचितं भगवता भवभीतिभिदा
कथितमुदारसत्त्वरुचिरस्य ततश्चरितम् ।
15 प्रशममयं निशम्य कुशलाय स भिक्षुगणः
किमपि बभूव पुण्यपरिपाकविवेकरुचिरः ॥ ५१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सुवर्णपार्श्वावदानं त्रिंशः पल्लवः ॥



# ३१ कल्याणकार्यवदानम् ।

D 819

प्रत्यक्षलक्षणपरीक्षित एष लोके
संलक्ष्यते सुजनदुर्जनयोर्विशेषः ।
अर्कः प्रकाशविशदं विदधाति विश्व-
मन्धीकरोति निखिलं जगदन्धकारः ॥ १ ॥ 5

सर्वज्ञः पूर्ववृत्तान्तमशेषमवलोकयन् ।
अस्मिन्नेव कथारम्भे भगवान् पुनरब्रवीत् ॥ २ ॥
नृपः पाटलिपुत्राख्ये पुरे भूमिपुरंदरः ।
अभूत्पुरंदरो नाम मन्दिरं पुण्यसंपदः ॥ ३ ॥
कल्याणकारी तस्याभूत् सूनुर्गुणगणोन्नतः । 10
अकल्याणाभिधानश्च द्वितीयो निर्गुणः सुतः ॥ ४ ॥
कल्याणकारी सर्वार्थिकरुणाकल्पपादपः ।
छत्रावशेषामकरोद् दानशीलः श्रियं पितुः ॥ ५ ॥
तस्मै मनोरमां नाम पुण्यसेनो महीपतिः ।
दूतं विसृज्य लेखेन स्वसुतां वचसा ददौ ॥ ६ ॥ 15
प्रत्यासन्नविवाहोऽथ नृपं राजसुतोऽभ्यधात् । D 821
प्राप्तः परिणयस्तात संप्रत्येष न मे मतः ॥ ७ ॥
वात्सल्यपेशलतया मदात्ताः प्रकृतिश्रियः ।
मया दानव्यसनिना कोषस्ते शुषिरीकृतः ॥ ८ ॥
तस्मात्प्रवहणेनाहं समुत्तीर्य महोदधिम् । 20
रत्नद्वीपं व्रजाम्येव दिव्यरत्नार्जनोद्यतः ॥ ९ ॥
दिव्यसंपदमासाद्य करिष्ये दारसंग्रहम् ।
कलत्रमकृतार्थस्य त्रासनं सुखसंपदाम् ॥ १० ॥
इत्युक्त्वा स पितुः प्राप्य शासनं चरणानतः ।
जगाहे जलधिं लोलकल्लोलालिङ्गिताम्बरम् ॥ ११ ॥ 25
भ्राता तमनुवव्राज सौजन्यव्यञ्जनोऽनुजः ।
निर्गुणः सगुणद्वेषद्रोहमन्तर्विचिन्तयन् ॥ १२ ॥
ज्येष्ठस्तमब्रवीद्वत्स समुद्रे कर्मविप्लवात् ।
अहं ग्राह्यस्त्वया स्कन्धे जाते प्रवहणक्षये ॥ १३ ॥
इति भ्रात्रा कृताश्वासस्तथेत्यूचे स तं शठः । 30
दोषोद्यतः प्रणयितां खलः समवलम्बते ॥ १४ ॥

D 823 ततः प्रवहणारूढः पवनैरनुकूलताम् ।
यातैः पुण्यैरिव प्राप्य रत्नद्वीपं नृपात्मजः ॥ १५ ॥
दिव्यरत्नानि संप्राप्य प्रत्यावृत्ते ततः शनैः ।
राजपुत्रे प्रवहणं द्रागभञ्जत् प्रभञ्जनः ॥ १६ ॥
5 भग्ने प्रवहणे तस्मिन् भ्रातरं पूर्वसंविदा ।
स जग्राह शठः कण्ठे तं भुजङ्ग इवानुजः ॥ १७ ॥
कर्मवातेरितस्तूर्णं कूलं प्राप्य नृपात्मजः ।
अवाप सहसा निद्रामान्ध्यप्रथमदूतिकाम् ॥ १८ ॥
तस्य सुप्तस्य रत्नानि दृष्ट्वा बद्धान्यथानुजः ।
10 प्रहर्तुं व्यसनच्छिद्रे क्रूरः समुपचक्रमे ॥ १९ ॥
उत्पाट्य गाढबद्धस्य स तस्य नयनाम्बुजम् ।
तं तारकं भयाम्भोधौ चकार गततारकम् ॥ २० ॥
आत्तरत्ने गते तस्मिन् वाजसूनुर्गतद्युतिः ।
मातङ्गोन्मूलिताम्भोज इवाभूत्कमलाकरः ॥ २१ ॥
15 स बभूव निरालोकः शोकतीव्रतमोवृतः ।
कृष्णपक्षक्षपारम्भ इव सूर्येन्दुवर्जितः ॥ २२ ॥
D 825 अत्रान्तरे समायातस्तं देशं गोकुलाधिपः ।
राजपुत्रं विलोक्यान्धमभूत् संक्रान्ततद्व्यथः ॥ २३ ॥
स तं नीत्वा स्वनिलयं परिचर्यापरः परः ।
20 तस्यासीद्गुणसौजन्यस्नेहावेशवशीकृतः ॥ २४ ॥
तत्र शोकरुजां शान्त्यै सदा चेतोविनोदिनीम् ।
वीणां स्वरप्रवीणोऽसौ पूर्वाभ्यस्तामवादयत् ॥ २५ ॥
सत्संगमः पृथुविवेककथाभियोगः
काव्यासवः प्रियसुहृत्प्रणयो विहारः ।
25 वीणास्वनः कुसुमकान्तवनान्तवासः
शोकाग्नितप्तमनसाममृतावगाहः ॥ २६ ॥
तस्य गोपपतेः पत्नी गीतवीणाविचक्षणा ।
पश्यन्ती राजतनयं प्रययौ साभिलाषताम् ॥ २७ ॥
कृतोपदेशा सततं कुटिला वीणयेव सा ।
30 मूर्च्छन्ती नवरागेण सोत्कण्ठा समचिन्तयत् ॥ २८ ॥
सुभगोऽयं ममातीव दृशि चित्ते च वर्तते ।
निवर्तते न मे तापः प्रेम्णि चेन्न प्रवर्तते ॥ २९ ॥

धन्येयं नखसंपातैः क्वणन्ती रागिणी मुहुः । D 827
यातास्य वल्लकी पुण्यैरङ्कारोहणयोग्यताम् ॥ ३० ॥

इति संचिन्त्य सा स्वैरं तमुवाच सविभ्रमम् ।
स्पृशन्ती तत्कराम्भोजं सकम्पकरपल्लवा ॥ ३१ ॥

ललनासुलभां लज्जां ममेदं त्वद्गतं मनः । 5
अकृतज्ञ इव प्रीतिं न संस्मरति मानद ॥ ३२ ॥

न शीलं न कुलाचारं नाभिमानं न संशयम् ।
अपेक्षन्ते स्मरक्षिप्ता वैलक्ष्यरहिताः स्त्रियः ॥ ३३ ॥

प्रणयान्मम सङ्कल्पं सफलं कर्तुमर्हसि ।
भवन्ति मानिताः प्रीत्यै देवता इव योषितः ॥ ३४ ॥ 10

इति तस्य वचः श्रुत्वा भिन्नस्वरविशृङ्खलम् ।
चपलां राजपुत्रस्तां त्रस्तान्तःकरणोऽवदत् ॥ ३५ ॥

नेयं मातः समुचिता सतः शीलपरिच्युतिः ।
धिक्किल्बिषविषस्पृष्टं नष्टशीलस्य जीवितम् ॥ ३६ ॥

पराङ्गनापरिष्वङ्गमङ्गैरङ्गीकरोति यः । 15
आलिङ्गति पतङ्गोऽयं नरकाग्निशिखां पुनः ॥ ३७ ॥

परोपकारनिरताः परदारनिरादराः । D 829
येऽप्यहिंसाव्यसनिनस्ते जीवन्ति मृताः परे ॥ ३८ ॥

इति तेनोक्तमाकर्ण्य साभूद्भग्नमनोरथा ।
निधनाभ्यधिकः प्रीतिप्रतिषेधो हि योषिताम् ॥ ३९ ॥ 20

ततः स्वपतिमभ्येत्य भुजङ्गी भङ्गमागते ।
मनोरथे मन्युविषं वमन्तीव जगाद सा ॥ ४० ॥

परवत्सलता साधो दोषाय सरलस्य ते ।
को ह्यविज्ञातशीलानां स्वाधीनीकुरुते गृहम् ॥ ४१ ॥

परेषु भृशमाश्वासं स्पृशतस्ते न शोभनम् । 25
गुप्तं चित्तं च वित्तं च जनो जानाति कस्य कः ॥ ४२ ॥

परदारसहस्राक्षस्त्वयान्धः स गृहे धृतः ।
दीनान्धजनवात्सल्यात् पश्य तस्योचितं फलम् ॥ ४३ ॥

अद्याहं तेन विजने संगमे भृशमर्थिता ।
यद्यस्य नयने स्यातां स्यात् कथं मे पलायनम् ॥ ४४ ॥ 30

इत्युक्तः स तया कोपात्तप्तो गोपपतिर्भृशम्।
दूरे निष्कास्य तं चक्रे गेहं चित्तं च शीतलम्॥ ४५॥

D 831 पिता त्यजति यत्पुत्रं सुहृन्मित्रं निहन्ति यत्।
बन्धुच्छेदासिधाराणां तद्दाराणां विजृम्भितम्॥ ४६॥

5 भ्रुवोर्दृशोर्यत्कौटिल्यं यत्तैक्ष्ण्यं यच्च चापलम्।
कुचयोर्यच्च काठिन्यं तत्सर्वं हृदि योषिताम्॥ ४७॥

कल्याणकारिसार्थेन पथः संतारितं शनैः।
पितरि त्रिदिवं याते शुश्राव भ्रातरं नृपम्॥ ४८॥

स पुरं पुण्यसेनस्य श्वशुरस्य महीपतेः।
10 कालेन प्राप दूराध्वक्लेशप्रशमबान्धवम्॥ ४९॥

अत्रान्तरे सुता तत्र महीभर्तुर्मनोरमा।
वाचा दत्ता पुरा यस्मै तस्मिन्नब्धिच्युते श्रुते॥ ५०॥

आहूतेषु नरेन्द्रेषु निविष्टेषु यथाक्रमम्।
आरुह्य रत्नशिबिकां स्वयंवरभुवं ययौ॥ ५१॥

15 विलोकयन्ती भूपालान् सा शनैश्चललोचना।
यदृच्छयागतं तत्र राजपुत्रं ददर्श तम्॥ ५२॥

अन्धोऽपि तस्याः सहसा स ययौ प्रियतां दृशोः।
ग्रहमध्ये कुमुद्वत्या मेघान्धोऽपि प्रियः शशी॥ ५३॥

D 833 नृपेषु प्रतियातेषु विलक्षेष्वफलागमात्।
20 महीपतिसुतान्तस्तं वव्रे गुणविनिर्गतम्॥ ५४॥

सापि हारं परिक्षिप्य कण्ठे तस्यायतेक्षणा।
शनकैर्मधुरालापा त्वद्वशास्मीत्युवाच तम्॥ ५५॥

स्त्रीवृत्तचकितः सोऽपि विजने तामभाषत।
प्रज्ञादरिद्रया नेदं स्त्रिया युक्तं कृतं त्वया॥ ५६॥

25 स्मरसौहार्दमित्रेषु पद्मनेत्रेषु राजसु।
स्थितेषु वन्ध्यजन्मान्धः कस्मादस्मि वृतस्त्वया॥ ५७॥

अन्यवक्त्रावलोकिन्यो जायाश्चक्षुष्मतामपि।
वधूः किं पुनरन्धस्य दिनेऽप्यन्याभिसारिका॥ ५८॥

ललनाभिर्न मे कृत्यं प्रत्ययस्तासु नास्ति मे।
30 कुलकूलनिपातिन्यो निम्नगाः कुटिलाः स्त्रियः॥ ५९॥

इत्युक्ता तेन परुषं लज्जालोला नृपात्मजा ।
तमूचे नाथ सर्वत्र न शङ्कां कर्तुमर्हसि ॥ ६० ॥

दृष्टदोषः क्वचिन्नार्यां यदि त्वमतिशङ्कितः ।
अदुष्टापि त्वया नाम तद्व्याप्ता क्रियते कथम् ॥ ६१ ॥

त्वय्येव यदि मे प्रीतिरनन्यशरणं मनः । 5 D 835
तेन सत्येन ते नेत्रमेकं भवतु निर्मलम् ॥ ६२ ॥

इत्युक्तमात्रे सुदृशा दक्षिणं तस्य लोचनम् ।
सत्यानुभावेनाभूत्तत्प्रफुल्लकमलोपमम् ॥ ६३ ॥

राजपुत्रः प्रहृष्टोऽथ तां प्रसाद्य सुलोचनाम् ।
उवाच तन्मुखाम्भोजलावण्यगुणविस्मितः ॥ ६४ ॥ 10

कल्याणकारी सुभगः स एवाहं नृपात्मजः ।
यस्मै पुरा त्वं गुरुणा वचसा प्रतिपादिता ॥ ६५ ॥

स एवाहं यदि परं निर्वैरः पाटने दृशः ।
तेन सत्येन नयनं स्वस्थं भवतु मेऽपरम् ॥ ६६ ॥

सत्योपयाचनेनेति सहसैवास्य लोचनम् । 15
द्वितीयमपि वैमल्यमवाप सह चेतसा ॥ ६७ ॥

ततो विदितवृत्तेन पुण्यसेनेन भूभुजा ।
कृतसाहाय्यकः प्राप स्वराज्यं स प्रियासखः ॥ ६८ ॥

कल्याणकारी यः सोऽहं देवदत्तः स चानुजः ।
तेन पूर्वानुभावेन तद्विधोऽद्यापि वर्तते ॥ ६९ ॥ 20

इत्युदारमुपकारनिर्मलं D 837
बोधिसत्त्वचरितं निशम्य ते ।
भिक्षवः खलविचेष्टितं च त-
त्तुल्यमप्रतिमविस्मयं ययुः ॥ ७० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां 25
कल्याणकार्यवदानमेकत्रिंशः पल्लवः ॥



# ३२ विशाखावदानम् ।

D 839

वामाः सज्जनवामाः प्रायेण भवन्ति नीरोगिण्यः ।
तिमिरोन्मुखी सरागा क्षिपति रविं भूधरात्संध्या ॥ १ ॥
देवदत्तस्य चरिते बहुजन्मान्तराश्रये ।
5 कथितेऽपि पुनः प्राह भगवान् ज्ञानसागरः ॥ २ ॥
पुरा कलिङ्गविषये नृपतिः शत्रुभङ्गकृत् ।
श्रीमानभूदशोकाख्यः प्रख्यातासंख्यविक्रमः ॥ ३ ॥
तस्य शाखः प्रशाखश्च चत्वारः सदृशाः सुताः ।
अनुशाखो विशाखश्चेत्यभवन् भुवि विश्रुताः ॥ ४ ॥
10 तारुण्यमत्तास्ते पित्रा सपत्नीकाः प्रवासिताः ।
सविकारनिकारेण पुत्रस्नेहोऽपि नश्यति ॥ ५ ॥
ते शनैः क्षीणपाथेया दुर्दशामिव दुःसहाम् ।
विकटामटवीं प्राप्य क्षुत्क्षामाः समचिन्तयन् ॥ ६ ॥
D 841 एताः स्त्रियो विपत्काले गुल्फबन्धनशृङ्खलाः ।
15 कृच्छ्रलब्धे च भागिन्यः स्थिताः पर्णाशनेऽपि नः ॥ ७ ॥
इति चिन्तयतामासीत् तेषां स्त्रीवधनिश्चयः ।
दुर्दशादग्धभाग्यानां घोरा संजायते मतिः ॥ ८ ॥
तेषां मध्याद्विशाखस्तु पापसंकल्पशङ्कितः ।
भार्यामादाय कृपया पलाय्य प्रययौ पृथक् ॥ ९ ॥
20 सा कलङ्कवती नाम भृशं वैक्लव्यमागता ।
दूराध्वधावनश्रान्ता मूर्छिता न्यपतद्भुवि ॥ १० ॥
ततः सा करुणार्द्रेण भर्त्रा प्राणक्षयक्षणे ।
शिरावेधसमुद्भूतं पायिता निजशोणितम् ॥ ११ ॥
तां रक्तपानसंप्राप्तजीवितां सत्त्वसागरः ।
25 स्वाङ्गं निष्कृत्य मांसेन प्राणवृत्तिमकारयत् ॥ १२ ॥
निर्जलं घोरकान्तारं समुत्तीर्य क्रमेण तौ ।
प्रच्छायपादपश्यामं प्राप्तौ गिरिनदीतटम् ॥ १३ ॥
विश्रान्तयोस्तयोस्तत्र कृत्तपादकरो नरः ।
तीव्राक्रन्दी नदीवेगेनोह्यमानः समाययौ ॥ १४ ॥
D 843 30 दृष्ट्वैव करुणाश्लिष्टः कष्टां विपदमाश्रितः ।
विगाह्य सरितं दोर्भ्यां विशाखस्तमतारयत् ॥ १५ ॥

ततः प्रत्यागतप्राणं तोयमूलफलादिभिः ।
स तं चक्रे दिनैरेव संरूढच्छेदनिर्व्यथम् ॥ १६ ॥
स्वस्थोऽपि गतिवैकल्यान्नैव गन्तुं क्वचित् क्षमः ।
स तस्थौ तत्र तत्पत्न्या काले कलितभोजनः ॥ १७ ॥
राजपुत्रस्तु जायायामभूद्विरलसंगमः । 5
सिंहाल्परतयः शूराः प्रायेण विजिगीषवः ॥ १८ ॥
दिव्यौषधिरसाहारपरिपूर्णतनुः शनैः ।
तत्पत्नी विकलायास्मै चकार सुरतस्पृहाम् ॥ १९ ॥
स्नेहेन नोपलिप्यन्ते न बध्यन्ते गुणेन च ।
गौरवे न च सज्जन्ति स्वेच्छास्पर्शसुखाः स्त्रियः ॥ २० ॥ 10
सा तेन निशि निःशब्दं रममाणा घनस्तनी ।
निःशङ्कसुरतातृप्ता पतिं विघ्नममन्यत ॥ २१ ॥
सा पत्युः स्वैरिणी तेन विदधे वधसंविदम् ।
पापेषु शिक्षाकुशलाः कलुषाः किल योषितः ॥ २२ ॥
सा शिरःशूलमतुलं वदन्ती स्वस्य छद्मना । 15 D 845
चक्रे लिखितपापास्या ललाटे पट्टबन्धनम् ॥ २३ ॥
तस्याः शिरोरुजां तीव्रां व्यतीतः पार्थिवात्मजः ।
कारुण्यात्तत्प्रतीकारे तां तां युक्तिमचिन्तयत् ॥ २४ ॥
विषादचिन्तास्तिमितं श्वसन्तं सा जगाद तम् ।
शीतार्तकूजद्भ्रमरा हिमम्लानेव पद्मिनी ॥ २५ ॥ 20
एवंविधं मे कन्यायाः शिरःशूलं पुराभवत् ।
पाषाणभेदलेपेन भिषग्भिश्च निवारितम् ॥ २६ ॥
पाषाणभेदव्याप्तोऽयं प्राग्भागोऽस्य महीभृतः ।
रज्ज्वावतीर्य भवता गृह्यतां यदि शक्यते ॥ २७ ॥
धारयिष्यामि पाणिभ्यामहमालम्बनं तव । 25
इत्युक्तः प्रणयात्पत्न्या तथेत्याह नृपात्मजः ॥ २८ ॥
तत्पाणिधृतरज्ज्वाथ विहितालम्बनः शनैः ।
सोऽवतीर्णः शिलास्फालगर्जद्गिरिनदीतटम् ॥ २९ ॥
भेषजादानसंसक्तः संत्यक्तालम्बनस्तया ।
स पपात महाश्वभ्रे स्त्रीचित्तचपलाम्भसि ॥ ३० ॥ 30
शुभस्य कर्मणः शेषादभग्नतनुरेव सः । D 847
उह्यमानः प्रवाहेण धीरश्चिरमचिन्तयत् ॥ ३१ ॥

नारीचित्ताभमावर्तं दर्शयन्त्या निजाशयम् ।
मम स्त्रीनियमे नूनमुपदेशः कृतोऽनया ॥ ३२ ॥

दुर्विज्ञेयाः प्रततमतिभिः स्वप्नसंकल्पकल्पा
रागद्वेषव्यसनविषमायासविन्याससक्ताः ।
5 कामात्कामी सकलजनतामोहने संप्रवृत्ताः
पातायैव क्षणपरिचितस्यापि मायाः स्त्रियश्च ॥ ३३ ॥

इति संचिन्तयन्नेव नदीवेगेन भूयसा ।
प्रापितः सुकृतेनेव स पुरीं पुष्करावतीम् ॥ ३४ ॥

तस्मिन्नवसरे तत्र निष्पुत्रे नृपतौ मृते ।
10 निमित्तज्ञैर्महामात्यैर्गृहीतः स सुलक्षणः ॥ ३५ ॥

अभिषिक्तः स तैस्तत्र विधिवन्मङ्गलोदकैः ।
अभूद्विवाहविद्वेषी दृष्टस्त्रीचरिताद्भुतः ॥ ३६ ॥

कलङ्कवत्यपि गिरौ बोधिसत्त्वविवर्जिते ।
मन्दवीर्यौषधिः काले वृत्तिच्छेदाकुलाभवत् ॥ ३७ ॥

D 849 15 स्कन्धे भग्नाङ्गमारोप्य सा ग्रामपुरवर्त्मसु ।
जनं पतिव्रतास्मीति गिरा भिक्षामयाचत ॥ ३८ ॥

पतिव्रतागौरवेण सर्वस्तस्यै ददौ बहु ।
मिथ्याशीलप्रवादोऽपि सूते विपदि संपदम् ॥ ३९ ॥

अटन्ती सा शनैः प्राप्ता नगरीं पुष्करावतीम् ।
20 सतीति वन्दिता सर्वैर्नृपद्वारान्तिके ययौ ॥ ४० ॥

राजा स्त्रीवृत्तविद्वेषी वन्दते तु पतिव्रताम् ।
इति संचिन्त्य तद्भक्त्या नृपं प्राह पुरोहितः ॥ ४१ ॥

दूरदेशान्तरादेव प्राप्ता कापि पतिव्रता ।
ययेयं चरणन्यासैर्भूतधात्री पवित्रिता ॥ ४२ ॥

25 हे देव पश्य तां साध्वीं स्कन्धारोपितभर्तृकाम् ।
पतिव्रताप्रणामेन पुंसामायुर्विवर्धते ॥ ४३ ॥

नृपः पुरोहितेनेति तत्संदर्शनमर्थितः ।
तमुवाच न जानीषे ब्राह्मणः सरलो भवान् ॥ ४४ ॥

स्निग्धा स्त्रीति प्रवादोऽयं निर्व्याजेति मतिभ्रमः ।
30 सतीति व्योमपुष्पाप्तिः पापा स्त्रीति न संशयः ॥ ४५ ॥

D 851 निष्फलाश्चाग्निरोहिण्यः सरला जनसंगमे ।
नार्यो वेतसवल्लर्य इव निर्मूलबन्धनाः ॥ ४६ ॥

भेदद्रोहैकशीलाभ्यो दुःशीलाभ्यः स्वभावतः ।
नमः स्त्रीभ्यो नमः स्त्रीभ्यो नमः स्त्रीभ्यो नमो नमः ॥ ४७ ॥

दृष्टस्त्रीवृत्तदोषाय तच्चिन्ताव्यथितात्मने ।
अप्येषा पृथिवी मह्यं रत्नपूर्णा न रोचते ॥ ४८ ॥

नगमृगवधूमुग्धास्तीक्ष्णाः परं परवञ्चने 5
तनुवितरणे सक्ताः पुंसां हरन्ति च जीवितम् ।
दधति च भयं पुष्पायाते पिबन्ति च पावकं
सरलकुटिला नैव ज्ञाता विचारशतैः स्त्रियः ॥ ४९ ॥

तथापि यदि निर्बन्धस्तव पश्यामि तां स्त्रियम् ।
इत्युक्त्वा हर्म्यमारुह्य तां ददर्श नरेश्वरः ॥ ५० ॥ 10

तामेव स परिज्ञाय पापां कृत्ताङ्गसङ्गिनीम् ।
सचिवेभ्यः क्षितिपतिस्तद्वृत्तान्तं न्यवेदयत् ॥ ५१ ॥

नृपं सापि परिज्ञाय पापा क्षणमधोमुखी ।
निरस्ता प्रययौ तूर्णं पिहितश्रवणैर्जनैः ॥ ५२ ॥

विशाखनामा नरनाथसूनुः 15 D 853
सोऽहं वधूः सास्य च देवदत्तः ।
श्रुत्वेतिवृत्तं कथितं जिनेन
भिक्षुव्रजस्तच्चरितं निनिन्द ॥ ५३ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
विशाखावदानं द्वात्रिंशः पल्लवः ॥ 20



D 855

# ३३ नन्दोपनन्दावदानम् ।

स कोऽपि पुण्यप्रशमानुभावः
शुद्धात्मनामस्त्यमृतस्वभावः ।
यस्य प्रभावेण भवन्ति सद्यः
5 क्रूरा अपि क्रोधविषप्रमुक्ताः ॥ १ ॥
पुरा तथागते जेतवनारामविहारिणि ।
तदाज्ञया भिक्षुगणे गिरिकाननचारिणि ॥ २ ॥
सुमेरुपरिषण्डायां स्थित्वा ध्यानपरायणाः ।
आययुर्भिक्षवः पाण्डुविच्छायवदनाः कृशाः ॥ ३ ॥
10 तेऽथ कृत्वा भगवतः पादपद्माभिवन्दनाम् ।
ऊचिरे भिक्षुभिः पृष्टा देहदौर्बल्यकारणम् ॥ ४ ॥
सुमेरुं त्रिगुणावृत्त्या वेष्टयित्वा व्यवस्थितौ ।
अदृष्टौ वैनतेयस्य नागौ नन्दोपनन्दकौ ॥ ५ ॥
तौ सदा त्रिविधोच्छ्वासं सृजतः कीर्णपावकम् ।
15 भवन्ति भस्म स्पर्शेन सहसैव शिला अपि ॥ ६ ॥
D 857
वयं तद्विषनिश्वासैर्निदग्धा ध्यानयोगिनः ।
विवर्णवदनच्छायाः केवलं कृशतां गताः ॥ ७ ॥
इति तैः कथिते शास्ता भिक्षुसंघार्थितः पुरः ।
नागयोर्दमने योग्यं मौद्गल्यायनमादिशत् ॥ ८ ॥
20 स सुमेरुं समासाद्य शृङ्गैरालिङ्गिताम्बरम् ।
सुप्तौ ददर्श नागेन्द्रौ योगेनान्तर्हिताकृतिः ॥ ९ ॥
योध्यमानौ शनैस्तेन बुबुधाते यदा न तौ ।
तदा महानागवपुर्भूत्वा स समवेष्टयत् ॥ १० ॥
प्रबुद्धौ पीडितौ तेन दृष्ट्वा तं भीषणाकृतिम् ।
25 विद्रुतौ नररूपेण तस्थतुर्भयविह्वलौ ॥ ११ ॥
नागरूपं परित्यज्य कृत्वा रूपं स्वकं ततः ।
पलायमानावन्योन्यं तौ मौद्गल्यायनोऽवदत् ॥ १२ ॥
नागौ क्व गम्यते तूर्णं भयं संत्यज्यतामिदम् ।
न स नागः स्थितस्तत्र येन विद्रावितौ युवाम् ॥ १३ ॥
30 सर्वथा यदि नास्त्येव तद्भयाद् युवयोर्धृतिः ।
क्रियते किं शरण्यस्य न बुद्धस्याभिवन्दनम् ॥ १४ ॥

इति तेनोक्तमाकर्ण्य विनयात्तौ तमूचतुः । D 859
प्रसादः क्रियतामार्य भगवद्दर्शनेन नौ ॥ १५ ॥
इति ब्रुवाणौ नागेन्द्रौ नीत्वा भगवतोऽन्तिकम् ।
स तद्वृत्तान्तमावेद्य प्रणम्य समुपाविशत् ॥ १६ ॥
भगवानथ नागेन्द्रौ बभाषे शरणागतौ । 5
प्रणामं चक्रतू रत्नप्रभाभूषितभूतलौ ॥ १७ ॥
शिक्षापदानि संप्राप्य सर्वभूताभयप्रदौ ।
शरणप्राप्तिसमयादधुना निर्भयौ युवाम् ॥ १८ ॥
इत्यालोकनमात्रेण दोषद्वेषविवर्जितौ ।
कृतौ भगवता सम्यक् जग्मतुस्तं प्रणम्य तौ ॥ १९ ॥ 10
संदर्शनेनैव महाशयानां
प्रभापदेशेन शरीरलग्नैः ।
हिंस्रा अपि द्वेषविषोष्मतप्ताः
शमामृतैः शीतलतां व्रजन्ति ॥ २० ॥
तत्पूर्वजन्मवृत्तान्तं भिक्षुभिर्भगवान् जिनः । 15
प्रभावविस्मयात्पृष्टः सर्वदर्शी जगाद तान् ॥ २१ ॥
कृकिर्नाम पुरा श्रीमान् वाराणस्यां नरेश्वरः । D 861
काश्यपाख्याद् भगवतः प्राप्तवान् धर्मशासनम् ॥ २२ ॥
अमात्ययोः स विन्यस्य राज्यं नन्दोपनन्दयोः ।
बभूव बोधिसंसक्तः सत्यदर्शननिर्वृतः ॥ २३ ॥ 20
धर्माधर्ममयं राज्यं कृत्वा तौ तस्य मन्त्रिणौ ।
सर्वोपकरणैर्युक्तं विहारं काश्यपाय च ॥ २४ ॥
कालेन जातौ नागेन्द्रावेतौ नन्दोपनन्दकौ ।
विहारार्पणपुण्येन पदं मेरुरभूत्तयोः ॥ २५ ॥

इति जिननिगदितफणिवरचरितं 25
परतनुपरिणतिपरिचितसुकृतम् ।
श्रुतवति शमनयमुनिपरिनिवहे
विषधरनियमनगुणनुतिरुदभूत् ॥ २६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
नन्दोपनन्दावदानं त्रयस्त्रिंशः पल्लवः ॥ 30



D 863

# ३४ गृहपतिसुदत्तावदानम् ।

दत्तः परहितभावनया यदि तनुधनकणशेषः ।
अपरिक्षयगुणकल्पनया भवति सुपुण्यविशेषः ॥ १ ॥
अथ व्यतीते कस्मिंश्चित् काले भगवतोऽन्तिके ।
5 नन्दोपनन्दयोर्धर्मदेशनां श्रोतुमाययौ ॥ २ ॥
राजा प्रसेनजिद्द्रष्टुं भगवन्तमुपागतः ।
ताभ्यामकृतसत्कारप्रणामः कोपमाययौ ॥ ३ ॥
स प्रणम्य जिनं गत्वा प्रदध्यौ निग्रहं तयोः ।
शस्त्रवृष्टिं संसृजन्तौ तौ च व्योम्ना समागतौ ॥ ४ ॥
10 सर्वज्ञप्रेषितस्तूर्णं मौद्गल्यायन एत्य ताम् ।
शस्त्रवृष्टिं नरपतेश्चक्रे पद्मोत्पलावलिम् ॥ ५ ॥
पुनर्गत्वा भगवतः समीपं पृथिवीपतिः ।
संप्राप्तौ क्षमयामास तस्यादेशात् फणीश्वरौ ॥ ६ ॥
D 865 अथार्थितः पार्थिवेन भगवान् राजमन्दिरम् ।
15 भक्तिपूतं ययौ भोक्तुं भक्तं भिक्षुगणैः सह ॥ ७ ॥
भक्ष्येषु पच्यमानेषु रात्रौ तत्राग्निविप्लवः ।
जातो जिनप्रभावेण सहसा शान्तिमाययौ ॥ ८ ॥
भुक्त्वा गते भगवति क्षितिपः स्वपुरेऽभ्यधात् ।
ज्वलनज्वालनं रात्रौ वारयन् दण्डसंविदा ॥ ९ ॥
20 अत्रान्तरे गृहपतिः सुदत्तस्यात्मजो युवा ।
मिथ्यादोषाद्द्विबलो नाम राज्ञाभिघातितः ॥ १० ॥
पूर्वं भगवतः शास्तुः शासनानुग्रहेण सः ।
लब्धज्ञानधृतिः पुत्रदुःखेऽप्यासीददुःखितः ॥ ११ ॥
अपुत्रः स्वधनं भूरि दीनेभ्यः प्रतिपाद्य सः ।
25 चकारातिरसादेकपणशेषं शनैः श्रियः ॥ १२ ॥
पणलाभकृताशेषधर्मः स्वल्पप्रदोऽथ सः ।
अभूद् गृही सुदत्ताख्यो गृहं हि स्वल्पमुच्यते ॥ १३ ॥
कदाचिद्दर्शनायातं भगवान् पुरतः स्थितम् ।
तं स्वल्पदाननाम्नैव लज्जितं दययावदत् ॥ १४ ॥
D 867 30 अल्पदानं गृहपतेर्न लज्जां कर्तुमर्हसि ।
याति श्रद्धार्पितो दानकणः कनकशैलताम् ॥ १५ ॥

पुरा बहुतरं दत्तं वेलमेन द्विजन्मना ।
श्रद्धाविरहसामान्यान्न तथा वृद्धिमाययौ ॥ १६ ॥
यः सर्वं भोजयेद्भक्त्या जम्बुद्वीपगतं जनम् ।
यश्चैकं बोधिसंयुक्तं तस्य पुण्यं ततोऽधिकम् ॥ १७ ॥
इति वाक्यं भगवतस्तथ्यं श्रुत्वाभिनन्द्य च । 5
निजगेहं गृहपतिः प्रययौ प्रणिपत्य तम् ॥ १८ ॥
दीपं दत्वा पठन् रात्रौ तत्र बुद्धानुशासनम् ।
दण्डाय राजपुरुषैः स नीतोऽग्निप्रवर्तनात् ॥ १९ ॥
दण्डस्य संभवाद्बद्धं बन्धनागारवर्तिनम् ।
तं द्रष्टुमाययुर्देवा रात्रौ शक्रब्रह्मादयः ॥ २० ॥ 10
स तैर्धनं गृहाणेति प्रार्थितो नाग्रहीद्यदा ।
तदा धर्मोपदेशोऽयं प्रवृत्तस्तस्य मन्दिरे ॥ २१ ॥
राजापि तत्प्रभावेण दृष्ट्वा प्रज्वालितं पुरम् ।
मुक्त्वा तं बन्धनागारान्न ददर्श जलं क्वचित् ॥ २२ ॥
स गतः सुगतं द्रष्टुं कदाचित्तत्पुरः स्थितः । 15 D 869
नृपं जिनप्रणामाय प्राप्तं पश्चाद् व्यलोकयत् ॥ २३ ॥
अग्रे भगवतश्चक्रे प्रणयं न स भूपतेः ।
जगत्पूज्यस्य पुरतः पूजामर्हति नापरः ॥ २४ ॥
जिनमामन्त्र्य नृपतिः प्रणतः स्वपुरं गतः ।
विवासनं गृहपतेरादिदेश निजात् पुरात् ॥ २५ ॥ 20
प्रसादिनी सुदत्तस्य देवता नृपतिं ततः ।
क्षुद्रजन्तुभिरुत्सृष्टैश्चक्रे दंशविपाकुलम् ॥ २६ ॥
स त्रस्तस्तैर्नृपः प्राप्तः सामात्यान्तःपुरानुगः ।
गत्वा प्रसादयामास सुदत्तं जिनशासनात् ॥ २७ ॥
इति स सततप्रत्यासत्त्या परामृतनिर्भरं 25
भगवदुदितं शान्तिं भेजे सुदत्तगृहाधिपः ।
स्वमिव लभते विघ्नायासप्रवासविवर्जितं
विमलमनसामन्तेवासी विवेकमहानिधिम् ॥ २८ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
गृहपतिसुदत्तावदानं चतुस्त्रिंशः पल्लवः ॥ 30

# ३५ घोषिलावदानम् ।

फलं समानं लभते स दातु-
यति क्षणं दानसहायतां यः ।
परोपकारप्रणयोद्यतानां
नापुण्यकर्मा सचिवत्वमेति ॥ १ ॥

रम्ये पुरा भगवति श्रावस्त्यां जेतकानने ।
अनाथपिण्डदारामविहाराधिरते जिने ॥ २ ॥

कौशाम्ब्यां वत्सनृपतिर्बभूवोदयनाभिधः ।
गायत्यद्यापि यत्कीर्तिर्विद्याधरवधूजनः ॥ ३ ॥

अभवद्विषये तस्य कर्मान्ताकरजीवनः ।
गृहस्थः सुधनो नाम धनाधानविचक्षणः ॥ ४ ॥

नृपः कदाचिदास्थाने तं कार्यार्थिनमागतम् ।
वचसैव परिज्ञाय जगाद विहितादरः ॥ ५ ॥

जानाम्यहं गृहपते हिरण्योपचितस्वरम् ।
विपुलः संचयज्ञस्य सुवर्णनिधिरस्ति ते ॥ ६ ॥

D 873

इत्युक्तः सस्मितं राज्ञा स तमूचे कृताञ्जलिः ।
सत्यमस्त्येव मे राजन् गृहे काञ्चनसंचयः ॥ ७ ॥

सद्वृत्तचिन्तानिरते देवे वात्सल्यपेशले ।
किं वा नास्ति जनस्यास्य पितरि त्वयि गोप्तरि ॥ ८ ॥

धनिनो यान्त्यधनतां निधनं यान्ति चाधनाः ।
व्याघ्रतां याति चेद्भूभृदामिषाघ्राणनिर्घृणः ॥ ९ ॥

निःशङ्कैरर्ज्यते वित्तमर्जितं च विभज्यते ।
विभक्तं भुज्यते स्पष्टं जनैर्धर्मधने नृपे ॥ १० ॥

उपपन्नं वचः श्रुत्वा धीमतस्तस्य भूपतिः ।
तमूचे दशनोद्योतैः प्रसादं दर्शयन्निव ॥ ११ ॥

मतिमान् कार्यसचिवस्त्वं मे भवितुमर्हसि ।
धीधुर्यैस्त्वद्विधैरेव धार्यते धरणीभरः ॥ १२ ॥

इति राजवचः श्रुत्वा सुधनस्तमभाषत ।
न वयं राजसेवासु सभामण्डलपण्डिताः ॥ १३ ॥

स्वाच्छन्द्योद्यानविच्छेदः सुनिद्रासुखविक्रयः ।
सेवा हि पुंसां संसारदुःखदैन्यभयंकरः ॥ १४ ॥

ईश्वरैर्मस्तकन्यस्तचरणः कृतकृत्यताम् ।        D 875
पादपीठ इवायाति सेवकोऽहं स्थितः सदा ॥ १५ ॥
सेवायासप्रयासेन प्राप्तानामपि संपदाम् ।
संभोगः पिशुनासङ्गी प्रभुभ्रूभङ्गभङ्गुरः ॥ १६ ॥
एताश्च नावतिष्ठन्ते प्रयत्नेन धृता अपि ।        5
दर्पोग्रदुर्ग्रहग्राहदुर्ग्रहा नृपसंपदः ॥ १७ ॥
क्षणं नवनवाश्लेषविशेषप्रणयोद्यताः ।
अवारवाररमणीरमणीया विभूतयः ॥ १८ ॥
इत्युक्तप्रतिषेधोऽपि स राज्ञा सचिवः कृतः ।
अतिक्रामति को नाम प्रभविष्णोः समीहितम् ॥ १९ ॥        10
प्राप्तप्रौढपदं राज्ञा नीतं सर्वाधिकारिताम् ।
विद्वेषदूषिताः सर्वे मन्त्रिणस्तं न सेहिरे ॥ २० ॥
धर्मजिज्ञासया राज्ञा पिशुनप्रेरितेन सः ।
नैवाकरोदसत्कार्यं नियुक्तोऽपि पुनः पुनः ॥ २१ ॥
आघातं प्रेक्षितः सोऽथ मिथ्याकोपेन भूभुजा ।        15
तथाप्यधर्मसंयुक्तं न शासनमतन्यत ॥ २२ ॥
एकजन्मसुखायैव बहुजन्मशतार्दितम् ।        D 877
न साधुनिन्दितं कर्म करोमीति जगाद सः ॥ २३ ॥
भयधर्मोपधाशुद्धः प्रतिमुक्तः स भूभुजा ।
दानसत्रमविच्छिन्नमकरोदखिलार्थिनाम् ॥ २४ ॥        20
सर्वत्र विश्रुते तस्य दानसत्रे यशस्विनः ।
कल्पवृक्षादरः पुंसां परं प्रतनुतां ययौ ॥ २५ ॥
अत्रान्तरे मुनिगणास्तीर्थार्थी दक्षिणापथात् ।
आगता कृच्छ्रकान्तारमविशन् निर्जनं वनम् ॥ २६ ॥
तत्र तृष्णातुराः सर्वे मूर्च्छिताः शयनाश्रिताः ।        25
अयाचन्त जलं मोहादुच्चैर्निश्चेतनानपि ॥ २७ ॥
देवगन्धर्वनागेभ्यः कश्चिद्योऽत्र दयाम्बुधिः ।
स्थितः प्रयच्छतु जलं सोऽस्माकमिति तेऽब्रुवन् ॥ २८ ॥
ततः स रत्नकेयूरक्वणत्कङ्कणसद्ध्वनिः ।
भुजस्थहेमभृङ्गारस्तरुमध्याद्विनिर्ययौ ॥ २९ ॥        30
ते तस्मादमृतास्वादं पाणिपद्मावनामितात् ।
आकण्ठं सलिलं पीत्वा जहृषुर्लब्धजीविताः ॥ ३० ॥

D 879

प्रार्थितः पुनरभ्येत्य पप्रच्छुस्ते सविस्मयाः ।
अदृश्यवृक्षनिलयादुद्भूतं को भवानिति ॥ ३१ ॥

सोऽब्रवीद्विश्रुतयशाः श्रावस्त्यामाशयः श्रियः ।
अनाथपिण्डदो नाम सर्वदोऽस्ति गृहाधिपः ॥ ३२ ॥

5 सौचिकेन मया पूर्वं तद्गृहान्तिकवासिना ।
भुजमुद्यम्य तद्वेश्म दर्शितं नित्यमर्थिनाम् ॥ ३३ ॥

तेन पुण्येन देवत्वं प्राप्तोऽत्र विहराम्यहम् ।
बाहुर्मम विभात्येष दक्षिणः सोऽर्थिदक्षिणः ॥ ३४ ॥

ते तमामन्त्र्य मुनयः पुनः संप्रस्थिता वने ।
10 क्षुधिताः स्निग्धसच्छायं ददृशुः पादपं परम् ॥ ३५ ॥

तमप्युच्चैरयाचन्त भोजनं तद्वदेव ते ।
उच्चचार च गम्भीरा वाणी विस्मयकारिणी ॥ ३६ ॥

अत्र पुष्करिणीतीरे द्रोण्यां दिव्यान्नभोजनम् ।
संपूर्णमस्ति तद्गत्वा भुज्यतां यदभीप्सितम् ॥ ३७ ॥

15 इति तेन समादिष्टं भुक्त्वा ते दिव्यभोजनम् ।
को भवानिति पप्रच्छुस्तं दिव्यतरुसंश्रयम् ॥ ३८ ॥

D 881

सोऽप्याचचक्षे श्रावस्त्यां गृहस्थोऽनाथपिण्डदः ।
अस्ति तस्याहमभवं ब्राह्मणः संघभोजने ॥ ३९ ॥

चतुरः परिचर्यायां दधिकुम्भप्रचारकः ।
20 तद्भोजनान्ते संप्राप्ते स्वल्पशेषान्नभोजनः ॥ ४० ॥

भिक्षूणां गौरवोच्चारं दृष्ट्वाहं राजभोजनम् ।
आत्मनश्चान्नमक्षारमभवं खिन्नमानसः ॥ ४१ ॥

अनाथपिण्डदगिरा भोजने गौरवाशया ।
ततो मयाष्टाङ्गयुक्तं गृहीतं पोषधं व्रतम् ॥ ४२ ॥

25 असमाप्तव्रतेनाथ भुक्तं लौल्यान्मया निशि ।
तेनाहमभवं लोके विज्ञातः खण्डपोषधः ॥ ४३ ॥

खण्डेनापि व्रतेनाहं देवपुत्रत्वमागतः ।
इति ते तद्वचः श्रुत्वा मुनयो विस्मिता ययुः ॥ ४४ ॥

अचिन्तयन् व्रजन्तस्ते तीव्रेण तपसा वयम् ।
30 सुचिरं केवलं क्लिष्टा नाद्यापि कुशलस्पृशः ॥ ४५ ॥

अधुना पोषधं प्राप्तुं व्रतमेव यतामहे ।
निरपायसुखोपाये स्वहिते कस्य नादरः ॥ ४६ ॥

इति संचिन्तयन्तस्ते कौशाम्बीमभितो गताः । D 883
सुधनस्य गृहं प्रापुर्विश्रुतं गृहमेधिनः ॥ ४७ ॥

तत्र तेन कृतातिथ्या निवेद्यास्मै तदद्भुतम् । 5
अनाथपिण्डदं द्रष्टुं तेनैव सहिता ययुः ॥ ४८ ॥

श्रावस्त्यां ते समासाद्य पूजितास्तेन सादरम् ।
अस्मै न्यवेदयन् सर्वं यथादृष्टं यथाश्रुतम् ॥ ४९ ॥

स तान् व्रतार्थिनः सर्वान् सुहृदं सुधनं च तम् ।
निनाय धर्मसचिवः प्रीतो भगवतोऽन्तिकम् ॥ ५० ॥ 10

भगवानपि तद्वाक्याच्चक्रे तेषामनुग्रहम् ।
सत्यदर्शनसंबुद्धा येन ते सुगतिं ययुः ॥ ५१ ॥

तेषु यातेषु सुधनं पक्षपातार्द्रया दृशा ।
विलोक्य भगवान् सम्यग् विदधे ज्ञानभाजनम् ॥ ५२ ॥

सत्यसंदर्शनावाप्तविशेषकुशलोदयः । 15
गत्वा जिनाय कौशाम्ब्यां स विहारमकारयत् ॥ ५३ ॥

यस्माद्भगवतादिष्टस्तस्मिन् यातः सहायताम् ।
भिक्षुश्चुन्दाभिधस्तस्मात् सोऽभूच्चुन्दविहारभूः ॥ ५४ ॥

राधाभिधा तदा दासी विहारपरिचारिका । D 885
दयया भगवानस्याः शीर्णवस्त्रं समग्रहीत् ॥ ५५ ॥ 20

अदासी स्यामिति श्रद्धाप्रणिधानार्पितस्तया ।
स चीवरो भगवतः प्रययावेकवर्णताम् ॥ ५६ ॥

सुधनस्योज्ज्वलं दृष्ट्वा पुण्यसंभारमद्भुतम् ।
भिक्षुभिर्भगवान् पृष्टस्तत्पूर्वोदयमभ्यधात् ॥ ५७ ॥

सुन्धानाख्यो गृहपतिर्वाराणस्यामभूत्पुरा । 25
नोदारकुञ्जरस्याभूद् यस्य दानपरिक्षयः ॥ ५८ ॥

अनावृष्टिहते काले तस्य द्वादशवार्षिके ।
अवारितमभूच्छत्रमविच्छिन्नान्नमर्थिनाम् ॥ ५९ ॥

तस्य पद्माकरो नाम कोषागारपतिर्गृहे ।
दानसाहाय्यकं चक्रे सहस्था हि समृद्धयः ॥ ६० ॥ 30

प्रत्येकबुद्धसंघस्य भक्तकालनिवेदकः ।
धर्मदूताभिधस्तस्य मन्त्री धीमानुपस्थितः ॥ ६१ ॥

कर्मव्याक्षेपतस्तस्य जाते कालव्यतिक्रमे ।
कदाचित् कुकुरस्तेषां कालसंज्ञां व्यधात्पुरः ॥ ६२ ॥

5 सुन्धानोऽद्य स एवाहं कोष्ठिकोऽनाथपिण्डदः ।
D 887 संघस्य धर्मदूतो यः स एवोदयनो नृपः ॥ ६३ ॥

संज्ञानिदेशको यश्च कुकुरः सुधनोऽपि सः ।
राज्ञा घोषेण विज्ञातो घोपिलापरनामभृत् ॥ ६४ ॥

चरितमित्युचितं भवभेदिना
10 भगवता कथितं किल भिक्षवः ।
सुकृतसौरभसारसुधारसं
सुमनसा श्रवणाञ्जलिभिः पपुः ॥ ६५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
घोपिलावदानं पञ्चत्रिंशः पल्लवः ॥



# ३६ पूर्णावदानम् ।

D 889

विबुधसरसि पद्मैः शोभिते पङ्कजिन्या
शुचिपरिसरजातं स्पृश्यते न स्थलेऽब्जम्(?) ।
सहजपरिचितानां नित्यमन्तर्गतानां
भवति सितगुणानां कारणं नैव जातिः ॥ १ ॥ 5

श्रावस्त्यां सर्वसत्त्वानां स्वस्तिध्यानपरायणे ।
जिनकल्पद्रुमे जेतवनारामस्थिते पुरा ॥ २ ॥

शूर्पारकाख्ये नगरे रत्नसंचयसागरः ।
भवो नामाभवत्सार्थपतिर्मतिमतां वरः ॥ ३ ॥

भविलो भवभद्रश्च भवनन्दी च विश्रुताः । 10
केतक्यां तस्य जायायां बभूवुस्तनयास्त्रयः ॥ ४ ॥

रोगयोगादुपगतः स कदाचिन्मुमूर्षुताम् ।
पारुष्याद् भृशमुद्विग्नैः पत्नीपुत्रैरुपेक्षितः ॥ ५ ॥

भक्त्या दासी तु तस्यैका परिचर्यापरा परम् ।
मल्लिकाख्याभवत्तस्याः सेवया स्वास्थ्यमाययौ ॥ ६ ॥ 15

स्नेहोपकारप्रणतः कृतज्ञः स तयान्वितः । D 891
ऋतौ संगममभ्येत्य तस्याः पुत्रमजीजनत् ॥ ७ ॥

यदा तज्जन्मनि पितुः सर्वार्थाः पूर्णतां ययुः ।
स तदा पूर्णनामाभूद्बालः पूर्णेन्दुसुन्दरः ॥ ८ ॥

ज्येष्ठास्त्रयः कृतोद्वाहा ययुरब्धिं धनार्थिनः । 20
पूर्णस्तु भाण्डशालायां पितुश्चक्रे धनार्जनम् ॥ ९ ॥

ततः प्रतिनिवृत्तास्ते प्राप्तार्थाः सागरात्पुनः ।
गणनां हेमलक्षाणां कृत्वा स्वमुदिरे पुरम् ॥ १० ॥

समुद्रगमने तेषां यावानासीद्धनागमः ।
पूर्णस्य स्वगृहे पण्यैर्बभूवाभ्यधिकस्ततः ॥ ११ ॥ 25

तद्दृष्ट्वा जनकस्तेषां वृद्धः पर्यन्तवासरे ।
तमूचे हितमायत्यां तृष्णा नैकक्षयोदयः ॥ १२ ॥

दृष्टं भवद्भिः सामुद्रलाभे कृतपरिश्रमैः ।
पूर्णेनोपार्जितं वित्तमक्लेशेन महीयसा ॥ १३ ॥

शुभकर्मविपाकेन भवन्त्यर्था धनार्थिनाम् । 30
हस्तात् पलायतेऽन्यस्य प्राप्नोति पतितं परः ॥ १४ ॥

D 893 सन्मार्गस्यापरित्यागाद् युक्तायुक्तविवेचनात् ।
देशकालपरिज्ञानात्सतां सर्वत्र संपदः ॥ १५ ॥
भवन्ति स्वगृहे धन्याः सुधियो धर्मभागिनः ।
गत्वा रत्नाकरं चान्ये लभन्ते प्राणसंशयम् ॥ १६ ॥
5 यत्नेन बोद्धव्या सद्भिः धनस्योपनिषत्परा ।
अद्रोहशुद्धबुद्धीनां स्वाधीनानां धनाच्छ्रियः ॥ १७ ॥
रक्षणीयो भवद्भिश्च भेदः सततसंहतेः ।
भिन्नात् स्खलति कल्याणं कुलात् कुम्भादिवोदकम् ॥ १८ ॥
अथाभिन्नेन्धनस्याग्नेर्नश्यन्ते सद्दशास्त्विषः ।
10 तथा विपुलवंशस्य भिन्नज्ञातेर्विभूतयः ॥ १९ ॥
भ्रातॄणां संततो भेदः कथं नाम निवर्तते ।
अध्यापितानां पत्नीभिर्द्वेपविद्यां सदा निशि ॥ २० ॥
उन्नतानां स्ववशानां द्वैधं तावन्न जायते ।
यावत्कुठारधारेव योषिद्विशति नान्तरम् ॥ २१ ॥
15 भ्रातुरर्थानुवादेन गुरुं पारुष्यकुत्सया ।
मित्रमेकाभिलाषेण नयन्ति द्वैधतां स्त्रियः ॥ २२ ॥
D 895 तद्वदन्ति हसन्त्योऽपि भ्रूविलासेन योषितः ।
यत्प्रयाति सुहृत्स्नेहमूलोन्मूलनहेतुताम् ॥ २३ ॥
हितमुक्त्वेति पुत्राणां भूतयेऽभिमतं भवः ।
20 अनित्यतापरियुक्तः काले निधनमाययौ ॥ २४ ॥
अविभक्ते धने शक्ता देशान्तरधनार्जने ।
ज्येष्ठा बभूवुः पूर्णस्तु गृहे वित्तमचिन्तयत् ॥ २५ ॥
कालेन गृहमाप्तानां वस्त्राशनविवादिनाम् ।
स्त्रीमन्त्रदत्तकर्णानां भेदस्तेषामजायत ॥ २६ ॥
25 वित्ते विभज्यमानेऽथ तैर्विद्वेषवशीकृतैः ।
दासीसुतोऽयमित्युक्त्वा नीतः पूर्णो निरंशताम् ॥ २७ ॥
सोऽपि पूर्णधनः काले शीतसंकुचितं पथि ।
ददर्श ग्रीष्मतापेऽपि विवशं दारुभारकम् ॥ २८ ॥
आदाय दारुमूल्येन स तस्माद्दारुभारकम् ।
30 दिव्यचन्दनमद्राक्षीद्दहनस्यापि शीतदम् ॥ २९ ॥
सुकृतेनैव महता तेन लब्धमहाधनः ।
स सेव्यः सार्थवाहानां पूज्योऽभूत्पृथिवीपतेः ॥ ३० ॥

रत्नाकरं स षट्कृत्वः प्रयातः सर्वदोऽर्थिनाम् । D 897
चकार सर्ववणिजां तरशुल्काद्यनुग्रहम् ॥ ३१ ॥
श्रावस्तीवासिभिः सार्थवणिग्भिः पुनरर्थितः ।
ययौ प्रवहणारूढः समुद्रद्वीपमाशु सः ॥ ३२ ॥
प्रत्यावृत्ते प्रवहणे सोऽथ शुश्राव गायताम् । 5
वणिजां स्थाविराः शैलगाथाः सुगतसंश्रयाः ॥ ३३ ॥
कस्यैता इति ते तेन पृष्टाः सर्वे बभाषिरे ।
एता भगवता गीता गाथा बुद्धेन धीमता ॥ ३४ ॥
इति बुद्धाभिधामेव श्रुत्वा हर्षमवाप सः ।
पुंसां स्ववासनारूढं व्यक्तिमायात्युदीरितम् ॥ ३५ ॥ 10
तैर्विस्तरेण कथितामाकर्ण्य भगवत्कथाम् ।
सोऽभवत्तद्गतमनास्तद्दर्शनसमुत्सुकः ॥ ३६ ॥
स शनैर्गृहमागत्य त्यक्त्वा सर्वपरिच्छदम् ।
अनाथपिण्डदं द्रष्टुं श्रावस्त्यां सुहृदं ययौ ॥ ३७ ॥
अभिलाषं निवेद्यास्मै प्रव्रज्यायां जितेन्द्रियः । 15
जगाम सहितस्तेन भक्त्या भगवतोऽन्तिकम् ॥ ३८ ॥
दृष्ट्वैव तत्र सर्वज्ञं मोहध्वान्तदिवाकरम् । D 899
तत्पाददर्शनेनैव मेने स कृतकृत्यताम् ॥ ३९ ॥
विज्ञाय तस्य भगवान् संकल्पं तमभाषत ।
दशनज्योत्स्नया कुर्वन् विवेकविमला दिशः ॥ ४० ॥ 20
एहि भिक्षो निराशङ्के निर्विपक्षे क्षयोज्झिते ।
आख्याते धर्मविनये ब्रह्मचर्यां चरेप्सितम् ॥ ४१ ॥
इति प्रसादशीलेन जिनेनोदीरिते पुरः ।
प्रव्रज्या सहसैवास्य पपातालक्षिता तनौ ॥ ४२ ॥
ततः स शत्रौ मित्रे च प्रशमात् समतां श्रितः । 25
शास्तुः शासनमादाय प्रणिपत्य जगाम तम् ॥ ४३ ॥
श्रोणापरान्तकं नाम देशं क्रूरजनाश्रयम् ।
स्वयं परीक्षितुं क्षान्तिं जनेन स समाययौ ॥ ४४ ॥
ततो दृष्ट्वा तमायान्तं मृगयायाममङ्गलम् ।
लुब्धकश्चापमाकृष्य हन्तुं क्रोधात् समाद्रवत् ॥ ४५ ॥ 30
निर्विकारं निरुद्वेगं स तं विगतसाध्वसम् ।
प्रहरेति ब्रुवाणं च दृष्ट्वैव शममाप्तवान् ॥ ४६ ॥

D 901

शाम्यतस्तस्य सहसा प्रसादी लुब्धकस्य सः।
धर्मं दिदेश येनासौ बोधिं प्राप सहानुगैः॥ ४७॥
स तत्र सुगतार्हाणां सर्वोपस्करसंपदाम्।
शतानि पञ्च रम्याणां विहाराणामकारयत्॥ ४८॥
5 पूर्णोऽपि ज्ञानसंपूर्णः प्राप्तस्त्रिदशपूज्यताम्।
वैराग्यलक्ष्म्या युक्तोऽभून्मुनीनां स्पृहणीयया॥ ४९॥
अथ तस्याग्रजो भ्राता भविलः क्षीणवित्तताम्।
कालेनोपगतः प्रायात् समुद्रं द्रविणाशया॥ ५०॥
ततः प्रवहणारूढः सोऽनुकूलैः समीरणैः।
10 गोशीर्षचन्दनवनं प्रापितः स्वल्पवासरैः॥ ५१॥
कुठारिकशतैस्तस्मिन् पञ्चभिश्छेत्तुमुद्यते।
तच्चन्दनवनं दिव्यं भुजङ्गगणसंकुलम्॥ ५२॥
तत्स्वामी यक्षसेनानां महेश्वर इति श्रुतः।
कोपादुदसृजद् घोरं कालिकाख्यं महानिलम्॥ ५३॥
15 मरुता महता तेन प्रापिताः प्राणसंशयम्।
चक्रन्दुर्वणिजः सर्वे शर्वशक्रमुखान् सुरान्॥ ५४॥

D 903

तानार्तरावमुखरान् भविलः सार्थनायकः।
उवाच संचिन्त्य चिरं पश्चात्तापसमाकुलः॥ ५५॥
पूर्णः कनीयान् भ्राता स हितैषी मां पुरावदत्।
20 बहुक्लेशो ह्यल्पसुखः क्व गन्तव्यस्त्वयाम्बुधिः॥ ५६॥
अकृत्वा धीमतस्तस्य वचनं सत्यदर्शिनः।
च्युतोऽहं धनलोभेन घोरेऽस्मिन् व्यसनार्णवे॥ ५७॥
श्रुत्वैतद्वणिजः सर्वे प्रभावं लोकविश्रुतम्।
पूर्णस्य मनसा ध्यात्वा तमेव शरणं ययुः॥ ५८॥
25 नमस्तुभ्यं जगत्क्लेशविषदोषापहारिणे।
पूर्णायोदीर्णकरुणासुधासंपूर्णचेतसे॥ ५९॥
इत्येकस्वररावेण तेषां संपूरितेऽम्बरे।
क्षणेन गत्वा तद्वृत्तं पूर्णः प्राह स्वदेवताः॥ ६०॥
श्रोणापरान्तकगतः श्रुत्वा तेषां स विप्लवम्।
30 व्योम्ना समाधिसंनद्धः प्राप प्रवहणं क्षणात्॥ ६१॥
तस्मिन् पर्यङ्कबन्धेन स्थितो मेरुरिवाचलः।
प्रलयोत्तालवेगस्य गतिं वायोर्जहार सः॥ ६२॥

पूर्णेन पवनं रुद्धं ज्ञात्वा यक्षगणाग्रणीः । D 905
तं प्रसाद्य ययौ त्यक्त्वा तेभ्यश्चन्दनकाननम् ॥ ६३ ॥
पूर्णप्रसादादादाय भविलश्चन्दनद्रुमान् ।
हृष्टस्तेनैव सहितः शूर्पारं स्वपुरं ययौ ॥ ६४ ॥
पूर्णोऽथ संमते भ्रातुस्तत्र गोशीर्षचन्दनैः । 5
चक्रे चन्दनमालाख्यं प्रासादं सुगतोचितम् ॥ ६५ ॥
तत्र पूर्णेन भगवान् ध्यातस्तूर्णं विहायसा ।
समाययौ जेतवनादुल्लङ्घ्य शतयोजनीम् ॥ ६६ ॥
आगच्छतो भगवतः पुरःप्रसृतया जगत् ।
देहकान्त्या कपिशितं सर्वं हेममिवाभवत् ॥ ६७ ॥ 10
पुरोपान्तनिवासिन्यस्तं विलोक्य गृहाङ्गनाः ।
तीव्रचित्तप्रसादेन प्रशमोन्मुखतां ययुः ॥ ६८ ॥
कुशलोपचितां तासां भगवान् सत्यदेशनाम् ।
चक्रे भवाद्दतां कान्तास्ताः प्रापुः कुशलं ययुः ॥ ६९ ॥
ऋद्ध्या भगवतस्तत्र चैत्यं पौराङ्गनाभिधम् । 15
ताभिर्विहितमद्यापि वन्दन्ते चैत्यवन्दकाः ॥ ७० ॥
मुनीनां भगवान् कृत्वा तथा वल्कलिनो मुनेः । D 907
प्रव्रज्यानुग्रहं शुद्धां विदधे धर्मदेशनाम् ॥ ७१ ॥
ततश्चन्दनमालाख्यं प्रासादं भगवान् जिनः ।
प्रविश्य स्फाटिकं चक्रे जनसंघभरक्षमम् ॥ ७२ ॥ 20
अथ रत्नासनासीनः स तत्र करुणानिधिः ।
विदधे सर्वसत्त्वानां शान्त्यै निर्वाणदेशनाम् ॥ ७३ ॥
अत्रान्तरे सानुचरौ मुनीन्द्रौ कृष्णगौतमौ ।
अभ्येत्य धर्मश्रवणे शास्तुः शासनमापतुः ॥ ७४ ॥
तत्र कृत्वाथ भगवान् प्रासादस्य प्रतिग्रहम् । 25
पुनर्जेतवनं गच्छन्नुद्ययौ सह भिक्षुभिः ॥ ७५ ॥
व्रजन् मारीचिलोकस्थां मौद्गल्यायनमातरम् ।
सद्गिरा चार्यसत्ये तां धर्ममार्गे न्यवेशयत् ॥ ७६ ॥
अथ जेतवनं प्राप्तं भगवन्तं सविस्मयाः ।
पूर्णस्य पुण्यं पप्रच्छुर्भिक्षवः सोऽप्यभाषत ॥ ७७ ॥ 30

काश्यपस्य पुरा सम्यक्संबुद्धस्यान्यजन्मनि ।
विहाराधिकृतः पूर्णः संघोपस्थायकोऽभवत् ॥ ७८ ॥

स कदाचिदसंमृष्टां दृष्ट्वा वैहारिकीं भुवम् ।
प्राह प्रव्रजितं तीव्रं क्रोधादुपधिवारिकम् ॥ ७९ ॥

D 909 5 दृप्तस्योपधिवारोऽद्य विहारोऽस्मिन्नमार्जितः ।
कस्य दासीसुतस्येति ब्रुवाणस्तमभर्त्सयत् ॥ ८० ॥

तेन पारुष्यपापेन भुक्त्वा नरकदुर्गतिम् ।
दासीसुतोऽभवत् पूर्णः पञ्च जन्मशतानि सः ॥ ८१ ॥

संघोपासनमेवास्य पुण्यायाभून्महीयसा ।
10 अर्हत्त्वं येन निःशेषभवक्लेशोज्झितं श्रितः ॥ ८२ ॥

इति प्रभावं कथितं जिनेन
पूर्णस्य पुण्योपचयप्रणीतम् ।
श्रुत्वाद्भुतं संसदि भिक्षुसंघः
पुण्यप्रशंसाभिरतो बभूव ॥ ८३ ॥

15 इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पूर्णावदानं षट्त्रिंशः पल्लवः ॥



## ३७ मूकपङ्ग्ववदानम् ।

D 911

आकिंचन्यसुखाय निःस्पृहतया वैराग्यलक्ष्मीजुषः
सर्वं यान्ति विहाय कायसचिवाः सन्तः प्रशान्त्यै वनम् ।
तत्रापि व्रतडम्बरे परिकरारम्भाय चेत् संचय-
स्तत्कः कोशपरिच्छदोपकरणैर्गेहेऽपराधः कृतः ॥ १ ॥ 5

जिने जेतवनारामविहाराभिरते पुरा ।
शाक्यराजकुमाराणां प्रव्रज्यासंजुषां पुरः ॥ २ ॥
चित्रचीवरसत्पात्रयोगपट्टादिसंचयम् ।
प्रभूततरमालोक्य भगवान् समचिन्तयत् ॥ ३ ॥
अहो बतैषां नाद्यापि बन्धहेतुर्निवर्तते । 10
अभिमानमयः काये प्रियः परिकरग्रहः ॥ ४ ॥
काये कायपरिष्कारस्तस्योपकरणावली ।
तस्याः परिकरादानमहो नु बन्धशृङ्खला ॥ ५ ॥
इति संचिन्त्य भगवान् नैकान्तविहितस्थितिः ।
कारुण्यादुपसन्नानां कुशलाय समुद्यतः ॥ ६ ॥ 15
मासत्रयमुपस्थानं कर्तव्यं येन केनचित् ।

D 913

अदर्शनाय भिक्षूणामकरोदिति संविदम् ॥ ७ ॥
प्रवृत्ते नियमे तस्मिन् भिक्षुरारण्यकव्रतः ।
आययावुपसेनाख्यः कार्यार्थं तनुचीवरः ॥ ८ ॥
प्रवारितः स संप्राप्य धन्यः सुगतदर्शनम् । 20
कृतकृत्यः क्षणं स्थित्वा प्रतस्थे प्रणिपत्य तम् ॥ ९ ॥
व्रजन्तमेत्य पप्रच्छुर्भिक्षवः परिवार्य तम् ।
तवार्य दर्शनमहो दत्तं भगवता कथम् ॥ १० ॥
मासत्रयं दर्शनेऽस्य नियमः शासनेन यः ।
स कथं भवता भग्नः संघस्योन्मार्गगामिना ॥ ११ ॥ 25
श्रुत्वा तद्वचनं तेषामुपसेनः स्मितोत्तरम् ।
तानूचे न मया कश्चित् कृतः समयविप्लवः ॥ १२ ॥
अहमुक्तो भगवता दर्शनावसरे स्वयम् ।
आरण्यकस्य मे भिक्षोर्निषेधो नास्ति दर्शने ॥ १३ ॥
परिच्छदोपकरणत्यागनिर्मुक्तबन्धनाः । 30
अवार्यदर्शना वृक्षमूलिकाः पांशुकूलिकाः ॥ १४ ॥

D 915 इदमद्य परं प्रातरिति ये संचये रताः ।
पात्रचीवरवर्गेषु तेषां नास्तीह दर्शनम् ॥ १५ ॥

पाथोभिः प्रसरत्तुषारशिशिरैस्तृष्णातुरास्ते परं
ते नित्यं च निधानधाम्नि विवृतेऽप्यन्यादलं दुर्गताः ।
5 तेषां चन्दनपादपादुपनतः संतापकः पावको
यैरेष प्रशमव्रतोपकरणे बद्धोऽभिमानग्रहः ॥ १६ ॥

इत्युक्तमुपसेनेन श्रुत्वा ते शाक्यभिक्षवः ।
वैलक्ष्यक्षयितोत्साहाः सहसैव व्यचिन्तयन् ॥ १७ ॥

एतद्भगवतादिष्टमस्मानुद्दिश्य नापरान् ।
10 विचित्रचीवरचयप्रावारा वयमेव यत् ॥ १८ ॥

विरतेच्छाः प्रियाः शास्तुर्महेच्छा वयमप्रियाः ।
तस्मादिच्छां परित्यज्य भवामस्तस्य संमताः ॥ १९ ॥

इति संचिन्त्य ते सर्वे चारुचीवरसंचयम् ।
प्रावृत्याभ्यधिकं त्यक्त्वा ययुर्भगवतोऽन्तिकम् ॥ २० ॥

15 इच्छाविरामे भगवान् व्यधात्तेषामनुग्रहम् ।
ज्ञानवज्रेण सत्कायदृष्टिशैलं बिभेद यः ॥ २१ ॥

D 917 शाक्यराजकुमाराणां स्रोतःप्राप्तिफलस्पृशाम् ।
भिक्षुभिः पूर्ववृत्तान्तं पृष्टः प्राह तथागतः ॥ २२ ॥

वाराणस्यामभूत्पूर्वं ब्रह्मदत्तो महीपतिः ।
20 दानार्द्रहस्तो यद्बाहुः क्ष्मामधाद्दिग्द्विपोपमः ॥ २३ ॥

तस्य ब्रह्मावती मुक्तालतेव गुणशालिनी ।
कीर्तिः सत्पुरुषस्येव विश्रुता वनिताभवत् ॥ २४ ॥

प्रतिबिम्बोपमं पत्युः सा सुतं विमलाशया ।
जलक्रीडागता काले सुषुवे दिव्यलक्षणम् ॥ २५ ॥

25 उदकाख्यः स बालोऽभूत् संजातः सलिलान्तरे ।
वर्धमानः पितुस्तुल्यं यौवराज्यमनोरथैः ॥ २६ ॥

शतानि पञ्चामात्यानां तस्य जन्मदिनं समम् ।
अवापुस्तुल्यरूपाणां पुत्राणां शतपञ्चकम् ॥ २७ ॥

निजं जातिस्मरः स्मृत्वा प्राग्वृत्तं स शिशुः शनैः ।
30 अचिन्तयत् प्राप्तकालं हितं सुकृतमात्मनः ॥ २८ ॥

षष्टिवर्षाणि कृत्वा तु यौवराज्यमहं पुरा ।
अभवं कृच्छ्रसंतप्तश्चिरं नरकसंकटे ॥ २९ ॥

D 919

जन्मन्यस्मिन्नपि पुनर्यौवराज्यमुपस्थितम् ।
सर्वथा प्रार्थ्यमानोऽपि न करिष्यामि पातकम् ॥ ३० ॥
इति संचिन्त्य स चिरं राजभोगपराङ्मुखः ।
पितुरुद्वेगजननीमग्रहीत् पङ्गुमूकताम् ॥ ३१ ॥
सर्वलक्षणयुक्तोऽपि राजवृत्तेरभाजनम् । 5
स मूकपङ्गुर्नामाभूद् बन्धूनां दुःखवर्धनः ॥ ३२ ॥
प्राप्तेषु मन्त्रिपुत्रेषु शस्त्रशास्त्रबलोदयम् ।
राजपुत्रः प्रवृद्धोऽपि नोदतिष्ठन्न चावदत् ॥ ३३ ॥
पृष्टास्ततः क्षितीशेन वैद्यास्तद्दोषभेषजम् ।
अवदन् वैकल्यं राजन् राजसूनोर्न दृश्यते ॥ ३४ ॥ 10
अभ्यासाद्यदि जातोऽस्य दोषोऽपि सुखसेविनः ।
तदेष भयसंवेगादुत्तिष्ठति च वक्ति च ॥ ३५ ॥
इति वैद्यैरभिहितं तथेत्युक्त्वा क्षितीश्वरः ।
मिथ्यैव वध्यवसुधां भयाय व्यसृजत्सुतम् ॥ ३६ ॥
स भर्त्स्यमानः पुरुषैस्तमुवाच रथस्थितम् । 15
अपि कश्चिद्वसत्यस्यां वाराणस्यां न वा जनः ॥ ३७ ॥

D 921

इति तद्वचनं श्रुत्वा तैर्नीतः स नृपान्तिकम् ।
तत्र पित्रार्थ्यमानोऽपि मूक एवाभवत् पुनः ॥ ३८ ॥
पुनर्वध्यभुवं नीतः शवं दृष्ट्वा जगाद सः ।
अस्त्येष जीवति शवः किं वा सर्वात्मना मृतः ॥ ३९ ॥ 20
श्रुत्वैतत् तैः पितुः पार्श्वे न्यस्तो मौनं व्यधात्पुनः ।
पुनर्वधभयाच्चैव नीतः प्रोवाच तान् पथि ॥ ४० ॥
राशिर्य एष धान्यस्य स हि भुक्तोऽनुभुज्यते ।
इत्युक्तवाक्योऽपि पुनर्नोचे किंचित् पितुः पुरः ॥ ४१ ॥
ततः ख्यातप्रतिक्षेपे तस्यादिष्टे महीभुजा । 25
सोऽवदद्वरदानेन वच्मि पद्भ्यां व्रजामि च ॥ ४२ ॥
अथास्य राज्ञा हृष्टेन वरदाने प्रतिश्रुते ।
स पद्भ्यां स्वयमभ्येत्य स्पष्टं पितरमब्रवीत् ॥ ४३ ॥
नाहं पङ्गुर्न मूकोऽहं नैव चाहं जडाशयः ।
किंतु जन्मान्तरक्लेशं स्मृत्वा वैह्वल्यमाश्रितः ॥ ४४ ॥ 30
यौवराज्यसुखं भुक्त्वा षष्टिवर्षाण्यहं पुरा ।
षष्टिवर्षसहस्राणि न्यवसं नरकोदरे ॥ ४५ ॥

D 923

राजभीत्या मया तस्मात् कृतेयं मूकपङ्गुता ।
प्रव्रज्यया ब्रह्मचर्यं चराम्येष वरो मम ॥ ४६ ॥

इति तेनोक्तमाकर्ण्य तमुवाच महीपतिः।
अमूक इत्याप्तधृतिर्विरक्त इति दुःखितः॥ ४७॥
धर्ममूलमिदं राज्यं पुत्र न त्यक्तुमर्हसि।
यज्ञदानप्रजात्राणैः पुण्यपूर्णा नृपश्रियः॥ ४८॥
5 एकपुत्रस्त्वया पुत्र परित्यागरसादहम्।
निद्रादरिद्रतां नीतः शोकशय्यासमाश्रयः॥ ४९॥
संपूर्णचन्द्ररुचिरां व्यक्तमौक्तिकहासिनीम्।
कथं संपदमुत्सृज्य प्रव्रज्याभिमता तव॥ ५०॥
कथं शय्याः परित्यज्य प्राज्यराज्यसुखोचिताः।
10 वनान्तवासव्यसनी सेवसे पांशुलाः स्थलीः॥ ५१॥
कान्तालीलामुकुरमणिमन्मन्दिरां राजधानी-
मेतां त्यक्त्वा ननु वनभुवः संपतद्व्याघ्रघोराः।
सर्वप्रीत्यै जरदजगराश्वासविप्लुष्टपत्राः
क्लिष्टच्छायाः प्रविरललतास्ताः कथं ते भवन्ति॥ ५२॥
D 925 15 पितुः श्रुत्वेति वचनं राजपुत्रस्तमब्रवीत्।
दन्तकान्ताधररुचिं वैराग्यं ग्राहयन्निव॥ ५३॥
शीतला निर्मलजलाः संतोषशशिशीतलाः।
वने वैराग्यसुभगा भुवः कस्य न वल्लभाः॥ ५४॥
परदारा इव क्षिप्रसुखावर्जितदुर्जनाः।
20 नरकप्रत्ययायामे सापाया न प्रियाः प्रियाः॥ ५५॥
ध्यानं मन्त्रः परिज्ञानमिन्द्रियाणां च निर्जयः।
राज्ञां हिंसाप्रयत्नेन योगोऽयं नरकप्रदः॥ ५६॥
हसन्त्यः संसारं कुसुमकलिलाः काननभुवः
स्वभावेन प्रीतिं विदधति बुधानां शममयीम्।
25 दृढं चिन्ताश्रान्ता व्यजनपवनोच्छ्वासबहुला
विभूतिर्भूपानां भवति खलु नेयं सुखसखी॥ ५७॥
अनुजानीहि मां तात व्रजाम्येष तपोवनम्।
जानीहि सर्वभावानां शिरःसक्तामनित्यताम्॥ ५८॥
इति पुत्रवचः श्रुत्वा तत्तथेति विचिन्तयन्।
उवाचोपचिताश्चर्यस्तं मनीषी महीपतिः॥ ५९॥
D 927 30 विवेकविमलं पुत्र त्वमिच्छसि स चेद्वनम्।
हित्वा मे संशयं तावत् पश्चाद्युक्तिं करिष्यसि॥ ६०॥
व्रजता वध्यवसुधां तिर्यगुक्तं त्वया वचः।
प्रचुरं तदभिप्रायं वक्तुमर्हसि तत्त्वतः॥ ६१॥

इति क्षितिभुजा पृष्टः सोऽब्रवीत्तन्मयोदितम्।
वसत्यत्र न कश्चित् त्वा मद्वधाद्यो निवर्तयेत्॥ ६२ ॥
सुकृती जीवति शवः स पापस्तु मृतोऽमृतः।
प्राक् पुण्यं भक्ष्यते मूलात् सधनैर्धान्यराशिवत्॥ ६३ ॥
इत्याशयान्मया तात तदुक्तं वचनं प्रियम्। 5
................................॥ ६४ ॥
इति श्रुत्वा क्षितिपतिस्तं परिष्वज्य सादरः।
उचितं क्रियतां पुत्र कुशलायेत्यभाषत ॥ ६५ ॥
ततः स पित्रानुज्ञातः साश्रुनेत्रेण काननम्।
प्रययौ मन्त्रिपुत्राणां सहितः पञ्चभिः शतैः॥ ६६ ॥ 10
महर्षेरन्तिके तत्र प्रव्रज्यां प्राप्य सानुगः।
तेषां कालेन सोऽपश्यत् कुण्डवल्कलसंचयम्॥ ६७ ॥
ततः स संचयद्वेषी तद्दर्शनसंविदा। D 929
एकाकी विजने तस्थौ कंचित् कालं महामतिः॥ ६८ ॥
दर्शनाभाषणे बद्धनियमोऽपि यदृच्छया। 15
प्राप्तं स्वागतमित्युक्त्वा पप्रच्छ कुशलं मृगम्॥ ६९ ॥
पुनश्च पूजितं दृष्ट्वा मुनिं तेन मृगव्रतम्।
अमात्यतनयाः सर्वे विलक्षाः समचिन्तयन्॥ ७० ॥
मृगो मृगव्रतश्चायं पूजितौ निष्परिग्रहौ।
एतावनजिनौ दण्डसंभाराडम्बरोज्झितौ॥ ७१ ॥ 20
एतदर्थमनेनास्मद्दर्शने नियमः कृतः।
व्रतोपकरणव्यग्रान्नूनमस्यापि वारयेत्॥ ७२ ॥
इति संचिन्त्य सर्वे ते व्रतोपचारसंचयम्।
नद्यां प्रक्षिप्य वारायां ययुः शुद्धास्तदन्तिकम्॥ ७३ ॥
त्यक्त्वा गृहभुवं तेषामाशयानुशयोचिताम्। 25
स धातुं प्रकृतिं ज्ञात्वा विदधे धर्मदेशनाम्॥ ७४ ॥
राजपुत्रः स एवाहं शाक्यास्ते मन्त्रिसूनवः।
पुनस्त्यागोपदेशोऽयमद्याप्येषां मया कृतः॥ ७५ ॥

इति शाक्यकुमारवृत्तमेतत् D 931
कथितं भिक्षुगणः स्वयं जिनेन। 30
अवधार्य परामपूजयत् तां
करुणामाश्रितवत्सलस्य तस्य॥ ७६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मूकपङ्ग्ववदानं नाम सप्तत्रिंशः पल्लवः॥



D 933

# ३८ क्षान्त्यवदानम् ।

ते जयन्ति धृतिशीलिनः परं
निर्विकाररुचिसूचिताद्भुताः ।
शेषवत् पृथुलभारनिर्व्यथाः
ये वहन्ति सुकृतक्षमाः क्षमाम् ॥ १ ॥

5

पुरा पुरा पुण्यविपर्ययेण
रिपुः प्रजानां जनितप्रकम्पः ।
उदुम्बनामा निबिडोपतापै-
र्यक्षः क्षयायैव कृतक्षणोऽभूत् ॥ २ ॥

10

अकालकालं तमनाथबन्धु-
र्लोकानुकम्पी भगवान् प्रसह्य ।
शिक्षोपदेशं शरणं प्रपन्नं
शमाभिधायी विनये न्ययुङ्क्त ॥ ३ ॥

तस्मिन् प्रशान्ते भुवनोपतापे
द्रष्टुं प्रहृष्टः सुगतं समेत्य ।

15

संचारिणं नाकपतिः प्रणम्य
तत्कालजातस्मितमित्युवाच ॥ ४ ॥

D 935

कस्मादकस्मात् स्मितचन्द्रलेखा
मुखाम्बुजे भाति तवाद्भुतेयम् ।

20

अकारणं सत्त्वसुधासमुद्रा
न लोकसामान्यतया हसन्ति ॥ ५ ॥

श्रुत्वेति वाक्यं त्रिदशेश्वरस्य तत्
तं सर्वदर्शी भगवान् बभाषे ।
अस्मिन् प्रदेशे निजपूर्ववृत्तं
स्मृत्वा स्मितं जातमिदं ममेन्द्र ॥ ६ ॥

25

पुरा मुनिः क्षान्तिरतिर्वनेऽस्मि-
न्नुवास निर्वासितरोषदोषः ।
योऽभूद्भवो रागरजःस्वभावे
विद्वेषवानिन्दुरिवारविन्दे ॥ ७ ॥

अथोत्तराशाधिपतिर्वसन्ते

30

वनान्तरालोकनकौतुकेन ।

सान्तःपुरः केलिसुखाय कामी
तदाश्रमोपान्तमहीमवाप ॥ ८ ॥

रागी कलिर्नाम स भूमिपालः
पादप्रहारैर्वदनासवैश्च ।
लेभे विलासेषु नितम्बिनीना- 5 D 937
मशोकशोभां बकुलश्रियं च ॥ ९ ॥

दिशस्तपोलोपपृथुप्रकोप-
भ्रूभङ्गवृन्दैरिव तापसानाम् ।
तत्र भ्रमद्भिर्भ्रमरैर्बभूवुः
कामाग्निधूमैरिव सान्धकाराः ॥ १० ॥ 10

लीलाविलोलाः पवनाकुलाली-
स्तनावनम्राः स्तबका लतानाम् ।
रक्ताधराः पाटलपल्लवानां
प्रापुर्विलासं ललना लतानाम् ॥ ११ ॥

राजाङ्गनाः कौतुकविभ्रमेण 15
वने चरन्त्यस्तमृषिं विलोक्य ।
अचञ्चलध्यानसमाधिसक्तं
विमुक्तरागं परिवार्य तस्थुः ॥ १२ ॥

तद्देशमभ्येत्य नरेश्वरोऽथ
दृष्ट्वा वधूभिः परिवारितं तम् । 20
ईर्ष्याप्रकोपानलदुर्निरीक्ष्यः
चिच्छेद तस्याशु स पाणिपादम् ॥ १३ ॥

छिन्नाङ्गवर्गोऽपि स निर्विकार- D 939
श्चुकोप भूपाय न नाम धीरः ।
न्यवारयत् क्रूरतरं च तस्मै 25
गन्धर्वयक्षोरगदेवसंघम् ॥ १४ ॥

ततः प्रयाते नृपतौ पुरं स्वां
समेत्य सर्वे मुनयो वनेभ्यः ।
तं तत्र कृत्तावयवं विलोक्य 30
क्षान्ता अपि क्रोधधुता बभूवुः ॥ १५ ॥

शापप्रदानाभिमुखान् निवार्य
क्षन्तव्यमित्येव स तानुवाच ।
क्षमासमालिङ्गितमानसानां
कोपक्रियाभिः क्रियते न सङ्गः ॥ १६ ॥

5 विकारवेगोऽपि न पाणिपाद-
च्छेदे ममाभूद् यदि वीतमन्योः ।
सत्येन तेनाक्षतदेह एव
स्यामित्यवादीत् स पुनः प्रसादी ॥ १७ ॥

ततः क्षणात् संगतपाणिपादं
10 रूढव्रणं प्रेत्य सदोदयेन ।
D 941 अपूजयत् क्षान्तिगुणं स्तवेन
तं देवता सत्त्वसितैश्च पुष्पैः ॥ १८ ॥

राजापि तत्किल्बिषकालकूट-
विस्फोटसंघट्टविनष्टचेष्टः ।
15 पूरोत्कटावर्तविवर्तमानः
संवर्तपाकं नरकं जगाम ॥ १९ ॥

योऽभूत्पुरा क्षान्तिरतिर्महर्षिः
सोऽहं कलिर्यश्च स देवदत्तः ।
अतीतवृत्तस्मरणेन शक्र
20 नाकारणं जातमिदं स्मितं मे ॥ २० ॥

इति भगवतः श्रुत्वा वाक्यं स विस्मयमानसः
प्रमदविकचव्यक्तोत्साहा वहन्नयनावलीः ।
तरणिकिरणस्पर्शेनेव स्फुटः कमलाकर-
स्त्रिदशवसतिं प्रीतः प्रायात् पतिस्त्रिदिवौकसाम् ॥ २१ ॥

25 इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
क्षान्त्यवदानमष्टत्रिंशः पल्लवः ॥

# ३९ कपिलावदानम् ।



अत्यन्तमुन्नतिमतां महतां विनाश-
दोषस्य दुर्जनसमागम एव हेतुः ।
कूलद्रुमाः किल फलप्रसवैः सहैव
सद्यः पतन्ति जलसंगतिभिन्नमूलाः ॥ १ ॥ 5

रुचिरागारशालिन्यां वैशाल्यां भगवान् पुरा ।
वल्गुमत्यास्तटे नद्या विचचार तथागतः ॥ २ ॥
तस्याः कैवर्तसार्थेन गम्भीरेऽम्भसि दुस्तरे ।
कदाचिद् घोरमकरः क्षिप्त्वा जालं समुद्धृतः ॥ ३ ॥
अष्टादशशिराः सिंहद्विरदव्यग्खरानननः । 10
नृणां सहस्रैराकृष्टः पर्वताकारविग्रहः ॥ ४ ॥
तं दृष्ट्वा तत्र वित्रस्ताः स्रस्ताकर्षणरज्जवः ।
आश्चर्यनिश्चलदृशो न तस्थुर्न ययुः क्षणम् ॥ ५ ॥
गणनां गहनाश्चर्यविशेषशतशालिनाम् ।
संसारे कर्मवैचित्र्ये विकाराणां करोति कः ॥ ६ ॥ 15
अत्रान्तरे तमुद्देशं भगवान् भूतभावनः ।



जिनः समाययौ सर्वजनत्राणकृतक्षणः ॥ ७ ॥
सवृद्धबाललललनं जनं कौतुकसंगतम् ।
दृष्ट्वा तत्राकरोत्तीरे भगवानासनग्रहम् ॥ ८ ॥
भिक्षुसंघैः परिवृतं दृष्ट्वा तत्र तथागतम् । 20
जनोऽभूदुन्मुखः सर्वः प्रत्यावृत्त इवोदधिः ॥ ९ ॥
तं विलोक्यैव विनताः कैवर्ताः प्राणिबन्धनम् ।
विशालजालं सहसा संसारमिव तत्यजुः ॥ १० ॥
मत्स्यकुम्भीरनक्रादिसंभारं तद्गिराम्भसि ।
त्यक्त्वा ते विरताटोपा बभूवुः किल्बिषद्विपः ॥ ११ ॥ 25
तैर्न्यस्तं भगवान् दृष्ट्वा महामकरमग्रतः ।
तं जगाद सृजन् दन्तकान्त्यैव करुणानदीम् ॥ १२ ॥
अपि त्वं कपिलः पुत्र किं न स्मरसि दुष्कृतम् ।
वचोदुश्चरितस्यायं परिपाकोऽनुभूयते ॥ १३ ॥
साप्यकल्याणमित्रं ते जननी क्वाद्य वर्तते । 30
सर्वज्ञेनेत्यभिहितः स्मृत्वा जातिमुवाच सः ॥ १४ ॥

D 947 विभो भवामि कपिलः स्मरामि निजदुष्कृतम् ।
वचोदुश्चरितस्यायं परिपाकोऽनुभूयते ॥ १५ ॥
याता मे नरकं माता नरकादेशिनी पुरा ।
इत्युक्त्वा मकरस्तत्र रुरोद परुषस्वरम् ॥ १६ ॥
5 तं शोकसागरे मग्नं बभाषे भगवान् पुनः ।
अकाले किं करोम्यद्य तिर्यग्योनिगतस्य ते ॥ १७ ॥
अपुण्यप्रारम्भे रभसहसितोल्लासविहिते
प्रमत्तानां याते नरकपरिपाकप्रणयिताम् ।
अशान्तेः संतापं रुदितशरणानि प्रतिनिशं
10 भृशं क्लेशावेशैर्दिशति विषतुल्यैरनुशयः ॥ १८ ॥
क्षणं दुःखक्षयायैव मयि चित्तं प्रसादय ।
प्रसन्नमानसः काले यास्यसि त्रिदशालयम् ॥ १९ ॥
शृणु वत्स हितं चेदं विचार्य कुरु चेतसि ।
अनित्याः सर्वसंस्काराः शान्तिनिर्वाणमक्षयम् ॥ २० ॥
15 इत्याज्ञया भगवतस्तस्मिन् याते प्रसन्नताम् ।
जनसंघः स सुचिरं बभूवाश्चर्यनिश्चलः ॥ २१ ॥
D 949 आर्यानन्दः प्रणयिना जनेनाभ्यर्थितस्ततः ।
तत्पूर्ववृत्तं पप्रच्छ भगवन्तं कृताञ्जलिः ॥ २२ ॥
स तेन पृष्टः प्रोवाच विमलज्ञानलोचनः ।
20 अस्याकुशलशीलस्य वृत्तान्तः श्रूयतामयम् ॥ २३ ॥
भद्रकाख्ये पुरा कल्पे वर्षायुतयुगायुषि ।
जने बभूव भगवान् काश्यपाख्यस्तथागतः ॥ २४ ॥
कृकिर्नाम महीपालः कल्पशाल इवार्थिनाम् ।
अभवत् समये तस्मिन् वाराणस्यां बहुप्रदः ॥ २५ ॥
25 कदाचिद्विबुधास्थाने सहस्राक्षमिवापरम् ।
आसीनं वादिसिंहाख्यस्तं विद्वानाययौ द्विजः ॥ २६ ॥
अविलम्बितसंप्राप्तदर्शनासनसत्कृतिः ।
स दत्ताशीर्नरपतिं शिष्यश्रेणिवृतोऽभ्यधात् ॥ २७ ॥
स्वस्ति स्वस्तिमते बुधाधिपसभासीनाय तुभ्यं विभो
30 लुब्धाः सच्चरितामृते तव परं संदर्शने रागिणः ।
सद्वेषाः परभूपनाम्नि मुखरास्ते सद्गुणोदीरणे
कस्मात्सर्वगुणाश्रयेण भवता दोषैर्वयं योजिताः ॥ २८ ॥

यद्याचका अपि निरन्तररत्नवर्षै D 951
नानार्थिसार्थपरिपूरकतां प्रयान्ति ।
सर्वं भवानुपमपुण्यनिधे वदान्य
निर्दैन्यदानविभवस्य विजृम्भितं ते ॥ २९ ॥
राजन् किंचित्परिचितगुणैः सेवया सद्गुरुभ्यः 5
प्राप्तोऽस्माभिर्विबुधविजयी कोऽपि विद्यांशलेशः ।
अस्यां विद्वत्कमलभरसौम्यप्रभायां सभायां
तस्योत्कर्षं कतिपयपदं प्रत्ययं दर्शयामः ॥ ३० ॥
निजगुणगणने धीर्लज्जते सज्जनानां
मुखरयति तथापि प्रौढवादाभिलाषः । 10
इयति जगति राजन् क्षिप्रमन्विष्यतां मे
प्रतिवचनरुचिश्चेदस्ति कश्चिद्विपश्चित् ॥ ३१ ॥
संदर्भगर्भगम्भीरमिति तस्योत्कटं वचः ।
श्रुत्वा क्षितिपतिः क्षिप्रं विलक्षः समचिन्तयत् ॥ ३२ ॥
अप्राप्तप्रतिमल्लोऽयं यदि यायान्मदोद्धतः । 15
तदेष मम देशस्य यशःखण्डनडिण्डिमः ॥ ३३ ॥
गुणापमानकृद् यत्र मूर्खो भवति भूपतिः । D 953
न करोति जनस्तत्र विद्यार्जनपरिश्रमम् ॥ ३४ ॥
विवेकविमलालोके धर्मारामे महीपतौ ।
लोके विद्याः प्रवर्तन्ते सदाचारक्रिया इव ॥ ३५ ॥ 20
तस्मादस्य प्रयत्नेन कर्तव्यो मदनिग्रहः ।
विद्यादरिद्रता देशे दोष एव विशांपतेः ॥ ३६ ॥
इति संचिन्त्य नृपतिर्विप्रं कर्वटवासिनम् ।
आनिनाय महामात्यैरन्विष्य विदुषां गुरुम् ॥ ३७ ॥
भूभृत्सभामुपाध्यायः प्रेत्य तं तर्ककर्कशम् । 25
चकार वादिसिंहस्य दर्पकेसरकर्तनम् ॥ ३८ ॥
तस्य तेन जितस्याशु विजिताशेषवादिनः ।
मौनसूत्रं समापेदे लज्जितेव सरस्वती ॥ ३९ ॥
आरूढाः शुभ्रमहसं नक्षत्राणामिवोदयाः ।
उपर्युपरि दृश्यन्ते गुणोत्कर्षा मनीषिणाम् ॥ ४० ॥ 30
वादिसिंहं विसृज्याथ दत्वा भूरि धनं नृपः ।
ददौ द्विजाय जयिने कर्वटं नगरोपमम् ॥ ४१ ॥

D 955

लब्धराजगजाश्वोऽथ चारुकेयूरकङ्कणः ।
उपाध्यायः स्वभवनं प्रविवेश सह श्रिया ॥ ४२ ॥
भुजैर्जिता भूमिभुजां वणिजां सागरार्जिताः ।
विद्यावतां विराजन्ते गुणोत्कर्षार्जिताः श्रियः ॥ ४३ ॥
5 कालेन श्रीमतस्तस्य पुत्रजन्मोत्सवोऽभवत् ।
सुखेऽपि सुखसंपत्तिर्लक्षणं पुण्यकर्मणाम् ॥ ४४ ॥
कपिलो नाम स शिशुस्तेजःपिङ्गशिरोरुहः ।
वर्धमानमतिर्विद्वान् पितुरभ्यधिकोऽभवत् ॥ ४५ ॥
कुले महति वैदुष्यं वैदुष्ये विभवोद्भवः ।
10 विभवे सत्सुतोत्कर्षः फलं सुकृतशाखिनः ॥ ४६ ॥
कदाचिद्व्याधिसंयोगात्प्रत्यासन्नतनुक्षयः ।
विजने पुत्रमाहूय सोऽवदत् पुत्रवत्सलः ॥ ४७ ॥
बाल्ये गुणार्जनं पुत्र तारुण्ये द्रविणार्जनम् ।
मया कृतं न तु पुनः परलोकसुखार्जनम् ॥ ४८ ॥
15 उत्तमर्ण इव प्राप्ते काले सुगणितावधौ ।
अधुना विवशः काहं क्व सा विद्या क्व तद्धनम् ॥ ४९ ॥

D 957

गुणपुष्पे सुखफले बद्धमूले धनैर्जने ।
वने वज्र इवाकालकालः पतति दुःसहः ॥ ५० ॥
क्षपयति सकलाभिर्जन्म विद्याकलाभिः
20 क्षणिकसुखनिमित्तं संनिधत्ते च वित्तम् ।
पशुशिशुषु मनुष्यः प्रीयते मोहशिष्यः
तनुविरहमुहूर्ते सर्वमन्यत् स चान्यः ॥ ५१ ॥
इदं तु ते हितं वच्मि स्नेहमोहवशीकृतः ।
संसारसारशरणं वत्स वेत्सि बहुश्रुतः ॥ ५२ ॥
25 सन्तः प्रणम्याः परुषं न वाच्यं
कार्यः प्रयत्नेन परोपकारः ।
पापावपाते सततं हि पुंसा-
मेतानि पुण्यान्यवलम्बनानि ॥ ५३ ॥
अलोभशोभाभरणा विभूति-
30 रद्वेषसक्तिः स्वसुखेष्वमोहः ।
मूलत्रयेऽस्मिन् कुशलद्रुमस्य
वसत्यशेषाखिलसत्फलश्रीः ॥ ५४ ॥

यावत्तपति तीक्ष्णांशुरस्मिन् भुवनमण्डले । D 959
तावत्त्वत्सदृशः पुत्र विद्वान् वादी न विद्यते ॥ ५५ ॥
भिक्षुभिस्तु न कर्तव्यस्त्वया वादः कदाचन ।
गम्भीरज्ञानदुर्बोधप्रबुद्धा बौद्धबुद्धयः ॥ ५६ ॥
पुरा भिक्षुर्मया पृष्टः पदस्यार्थं जहास माम् । 5
प्रश्नं कर्तुं न जानीषे विद्वानिति जगाद च ॥ ५७ ॥
तस्माद् भिक्षुविवादस्ते परं पाण्डित्यपीडनम् ।
बलप्रभावकामो हि गिरिं मूर्ध्ना न ताडयेत् ॥ ५८ ॥
इत्युक्त्वा तनयं विप्रः परलोकभुवं ययौ ।
कायावसथपान्थानां देहिनां न चिरस्थितिः ॥ ५९ ॥ 10
वाग्मी कालेन कपिलः खण्डिताखिलपण्डितः ।
नृपाद्बहुगुणं प्राप धनमानमहोदयम् ॥ ६० ॥
ततः कदाचिदेकान्ते कपिलं काचराभिधा ।
संप्राप्तं वादिसाम्राज्यं जगाद जननी शनैः ॥ ६१ ॥
वादिदर्पच्छिदा पुत्र दिग्द्वीपजयिना त्वया । 15
दुर्जनाः श्रमणाः कस्माद्दर्पान्धाः परिवर्जिताः ॥ ६२ ॥
परोत्कर्षाधिरूढस्य प्रतिपक्षे क्षमारतेः । D 961
अक्षमोऽयमिति व्यक्तं क्षणेन क्षीयते यशः ॥ ६३ ॥
इति मातुर्वचः श्रुत्वा सोऽवदद् विदुषो वचः ।
न वादः श्रमणैः कार्यः पित्राहमिति वारितः ॥ ६४ ॥ 20
इयं दुर्जीविकास्माकं पत्रालम्बनवादिनाम् ।
क्रियते गुणमान्यानां मानम्लानिर्मुखे यया ॥ ६५ ॥
धिगेतच्चण्डपाण्डित्यं गुरुविद्वेषदुःसहम् ।
महतां सुखभङ्गाय सदा यस्मिन् समुद्यमः ॥ ६६ ॥
यस्यां न माया सा बुद्धिः सा श्रीर्लोभं निहन्ति या । 25
दर्पो न यस्य विद्या सा शक्तिर्या च क्षमावती ॥ ६७ ॥
एवमेव न कर्तव्यः परैर्विद्वेषविग्रहः ।
किं मातर्जगतां पूज्यैर्भिक्षुभिः ख्यातलक्ष्मभिः ॥ ६८ ॥
विजेतुं न च ते शक्याः प्रमाणपरिनिष्ठिताः ।
प्रतिपक्षैरविक्षिप्तं येषां नैरात्म्यशासनम् ॥ ६९ ॥ 30
इति पुत्रवचः श्रुत्वा कुपिता तमुवाच सा ।
अभूत्तव पिता नूनं पापश्रमणचेटकः ॥ ७० ॥

D 963 महति ब्राह्मणकुले जातः प्राज्ञो बहुश्रुतः ।
भिक्षुपक्षे निपतितः कथं त्वमपि तादृशः ॥ ७१ ॥

पृथुप्रमाणखड्गेन कुरु श्रमणनिग्रहम् ।
अविदार्याभ्रसंघातं तीक्ष्णांशुर्न विराजते ॥ ७२ ॥

5 इति स प्रेरितो मातुर्गिरा तद्भक्तियन्त्रितः ।
भिक्षूणामाश्रमपदं शनैर्गन्तुं समुद्ययौ ॥ ७३ ॥

व्रजन् स संमुखायातं भिक्षुं जिज्ञासया पथि ।
ग्रन्थसारं प्रमाणं च पप्रच्छ समयोचितम् ॥ ७४ ॥

स तेन पृष्टः प्रोवाच गाढशब्दार्थनिर्णयम् ।
10 लक्षत्रयप्रमाणं नः शास्त्रं तीर्थिकदुर्लभम् ॥ ७५ ॥

कुतः पारेऽतिवर्तन्ते क्व च वर्त्मातिवर्तते ।
सुखदुःखे च लोकस्य क्वचित् समभिबध्नतः ॥ ७६ ॥

इति गम्भीरशब्दार्थं शास्तुर्भगवतो वचः ।
अनुपासितसर्वज्ञैर्ज्ञायते न यथा तथा ॥ ७७ ॥

15 एतदाकर्ण्य कपिलः श्लोकगाम्भीर्यविस्मितः ।
ययौ भगवतः पुण्यं काश्यपस्य तपोवनम् ॥ ७८ ॥

D 965 तथा भिक्षुगणं दृष्ट्वा प्रसन्नहृदयाननः ।
अचिन्तयत् तदश्रद्धां विहाय गतमत्सरः ॥ ७९ ॥

एतेषां द्वेषकालुष्यात् क्रौर्यं कः कर्तुमर्हति ।
20 येषां संदर्शनेनैव वैमल्यं लभते मनः ॥ ८० ॥

इति संचिन्त्य स चिरं तद्विवादपराङ्मुखः ।
दूराध्वखिन्नः स्वगृहं गत्वा प्रोवाच मातरम् ॥ ८१ ॥

मिथ्यैवाहं त्वया मातः प्रेरितः कलिकर्मणि ।
अजयाः श्रमणा लोके गूढार्थग्रन्थवादिनः ॥ ८२ ॥

25 श्लोकमात्रं मया श्रुत्वा भिक्षोरेकस्य वर्त्मनि ।
अज्ञातार्थेन वैलक्ष्यात् सुचिरं वीक्षिता क्षितिः ॥ ८३ ॥

तद्ग्रन्थेष्वकृताभ्यासस्तान् वक्तुं कः प्रगल्भते ।
कथयन्ति स्वशास्त्रं ते न हि प्रव्रजितादृते ॥ ८४ ॥

इति तेनोदितं श्रुत्वा जननी तमभाषत ।
30 आयासिताहं भवता गर्भभारेण केवलम् ॥ ८५ ॥

संघर्षामर्षशून्येन दैन्यात् सर्वप्रणामिना।
धर्षणानिर्विमर्षेण क्रियते पुरुषेण किम्॥ ८६॥

लोके सकलरत्नानां तेजसैव महार्घता। D 967
को ह्यर्थः पुरुषप्राणैस्तेजोजीवनवर्जितैः॥ ८७॥

मिथ्या तद्ग्रन्थलाभाय प्रव्रज्या गृह्यते न किम्। 5
मूर्ध्नि कृत्तेषु जायन्ते किं केशेषु कुशाः पुनः॥ ८८॥

इति मातुर्गिरा तस्य मनः कलुषतां ययौ।
सहसा कालवातालीरजोरुद्धमिवाम्बरम्॥ ८९॥

ततः स कूटप्रशमप्रणयी भिक्षुकाननम्।
गत्वा गृहीत्वा प्रव्रज्यां शास्त्रं सौगतमाप्तवान्॥ ९०॥ 10

कालेन धर्मकथकः स विद्वान् गुणगौरवात्।
सिंहासनं समारुह्य विदधे धर्मदेशनाम्॥ ९१॥

जनन्या प्रेरितस्तस्यां देशनायां क्रमेण सः।
भिक्षुधर्मविरुद्धार्थं वक्तुं समुपचक्रमे॥ ९२॥

धर्मप्रहारव्यथितैर्भिक्षुभिः स पदे पदे। 15
निवार्यमाणस्तानूचे कृत्वा विकृतमाननम्॥ ९३॥

अज्ञात्वा दर्पमुखरैरयथा बहुवादिभिः।
भवद्भिः स्थूलदन्तोष्ठैर्व्याख्या मम विसूदिता॥ ९४॥

यूयं गर्दभमर्कटोष्ट्रवदना द्वीप्यास्यपश्वानना D 969
मार्जारैणवराहकुक्कुरमुखा दुर्दर्शवक्त्राः परम्। 20
सह्या मौनजुषोऽपि नैव विकटाटोपं रटन्तः किमु
भ्रूभङ्गैरिति भिक्षुसंघमसकृन्निर्भर्त्सयन् सोऽभ्यधात्॥ ९५॥

तस्य वाक्यशरैस्तीक्ष्णैर्विकृत्ता इव भिक्षवः।
अनुक्त्वैव प्रतिवचस्त्यक्त्वा तं ययुरन्यतः॥ ९६॥

तेन वाक्पातकेनाथ पश्चात्तापमुपागतः। 25
तत्याज जननीमेव प्रव्रज्यां न तु तां द्विजः॥ ९७॥

श्रमणैर्मे हृतः पुत्र इति सा विप्रलापिनी।
उन्मादिनी तनुं त्यक्त्वा प्रपेदे नरकस्थितिम्॥ ९८॥

ततः कालेन कपिलः स्वयं कलितकिल्बिषः।
देहान्ते वाक्यपारुष्यादिमां मकरतां गतः॥ ९९॥ 30

तान्येतानि मुखान्यस्य यान्यूचे भिक्षुभर्त्सने ।
फलं सदृशरूपं हि कर्मबीजात् प्रजायते ॥ १०० ॥

इत्युक्त्वा तत्र भगवान् धर्ममादिश्य शाश्वतम् ।
जनस्यानुग्रहं चक्रे नानाबोधिविधायकम् ॥ १०१ ॥

5 ततः प्रयाते स्वपदं जिने तन्मयमानसः ।
मकरः प्रोज्झिताहारस्त्यक्त्वा देहं दिवं ययौ ॥ १०२ ॥

चातुर्महाराजिकेषु देवेषु विशदद्युतिः ।
श्रीमान् स जातः सुगते क्षणं चित्तप्रसादनात् ॥ १०३ ॥

ततः पूर्णेन्दुवदनः स्रग्वी रुचिरकुण्डलः ।
10 स साकार इवानन्दः सुगतं द्रष्टुमाययौ ॥ १०४ ॥

प्रकीर्णदिव्यकुसुमः किरीटस्पृष्टभूतलः ।
प्रभापूरितदिक्चक्रस्तं भक्त्या प्रणनाम सः ॥ १०५ ॥

चक्रे तस्योपविष्टस्य भगवान् धर्मदेशनाम् ।
यया स्रोतःफलं प्राप्य सत्यदर्शी जगाम सः ॥ १०६ ॥

15 तृणमिव गुरुकायोऽप्युद्धृतः पापपङ्का-
दिति स जननिकायः सोऽपि दुःखाज्जिनेन ।
व्यसननिपतितानां लीलया पुण्यशीला
निखिलमतुलमूलं क्लेशमुन्मूलयन्ति ॥ १०७ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
20 कपिलावदानं नाम एकोनचत्वारिंशः पल्लवः ॥

# ४० उद्रायणावदानम् ।

D 973

तुल्यमेव पुरुषेण भुज्यते
कायभाजनगतं शुभाशुभम् ।
देहिनां विविधकर्मजं फलं
न ह्यभुक्तमुपयाति संक्षयम् ॥ १ ॥

5

भगवान् सुगतः पूर्वं पुरे राजगृहाभिधे ।
कलन्दकनिवासाख्ये विजहार वनान्तरे ॥ २ ॥
बिम्बिसारः क्षितिपतिस्तत्राभूद्विश्रुतः श्रिया ।
आकरः सर्वरत्नानां रत्नाकर इवापरः ॥ ३ ॥
बभूव समये तस्मिन् रौरुकाख्ये पुरे नृपः ।

10

श्रीमानुद्रायणो नाम यशश्चन्द्रमहोदधिः ॥ ४ ॥
तस्य चन्द्रप्रभा नाम पत्नी चन्द्राननाभवत् ।
शिखण्डी युवराजश्च सूनुर्विक्रमकर्कशः ॥ ५ ॥
हिरुको भिरुकश्चेति तस्यामात्यौ बभूवतुः ।
गणनीयौ न विनये ययोः शुक्रबृहस्पती ॥ ६ ॥

15

जाता भूमिभुजः प्रीतिर्लेखैर्लेखविषस्तयोः ।

D 975

रवेर्दूरस्थितस्यापि कमलाकरयोरिव ॥ ७ ॥
अपूर्वरत्ननिचयप्रेषणैर्बहुशस्तयोः ।
परिपूर्णं परं प्राप सख्यं प्रेम विधानतः ॥ ८ ॥
दूरस्थापि परं प्रीतिः सतां कीर्तिरिवाक्षया ।

20

संसक्तापि खलप्रीतिस्तृणज्वालेव न स्थिरा ॥ ९ ॥
कदाचिद्दिव्यरत्नाङ्कं कवचं काञ्चनोज्ज्वलम् ।
प्राहिणोद् बिम्बिसाराय सारमुद्रायणो नृपः ॥ १० ॥
विषशस्त्राग्निरक्षार्हं विचित्ररत्नकं च तत् ।
सुहृत्प्रेषितमादाय प्रोवाच सचिवान् नृपः ॥ ११ ॥

25

इदं मे प्रहितं तेन सौजन्यमिव भूभुजा ।
सर्वरक्षाक्षमं वर्म गाढप्रेमनिवेदकम् ॥ १२ ॥
न पश्याम्यस्य सदृशं प्रतिदेयं तथाधिकम् ।
अल्पप्रतिक्रिया शल्यमुपकारापकारयोः ॥ १३ ॥
उचितं चिन्त्यतां किंचित् प्रेषणीयमतोऽधिकम् ।

30

सर्वैर्भवद्भिरित्युक्त्वा नृपश्चिन्ताकुलोऽभवत् ॥ १४ ॥

D 977 अथ धीमान् महामात्यश्चिरं ध्यात्वा तमब्रवीत् ।
वर्षकाराभिधो विप्रः सर्वविद्यासु पारगः ॥ १५ ॥
अतो बहुगुणं राजन्नेकमेवास्त्युपायनम् ।
तस्य संप्रेषणे यत्नः क्रियतां यदि शक्यते ॥ १६ ॥
5 य एष भगवान् बुद्धः स्थितस्त्वद्विषयान्तिके ।
देवानामादरस्थानं पटस्तत्प्रतिमान्वितः ॥ १७ ॥
अशेषलोककल्याणकलिकाकल्पपादपः ।
चित्रे स्वप्नेऽथ संकल्पे पृथुपुण्यैः स दृश्यते ॥ १८ ॥
इति मन्त्रिवचः श्रुत्वा तथेत्युक्त्वा महीपतिः ।
10 गत्वा भगवते नम्रस्तमेवार्थं न्यवेदयत् ॥ १९ ॥
अनुज्ञातस्ततस्तेन नृपश्चित्रकरान् वरान् ।
आदिदेशाशु भगवत्प्रतिमोल्लेखकर्मणि ॥ २० ॥
जिनस्यालोकयन्तस्ते मूर्तिं रूपवशीकृताः ।
ययुः प्रमाणग्रहणे प्रगल्भा अप्यशक्तताम् ॥ २१ ॥
15 संक्रान्तां निर्मलपटे छायां भगवतस्ततः ।
सुवर्णभावनाभिख्यां ते शनैः समपूरयन् ॥ २२ ॥
D 979 प्राहिणोदथ भूपालस्तं बुद्धप्रतिमापटम् ।
जगन्नयनपुण्यानां मूर्तानामिव संचयम् ॥ २३ ॥
बिम्बिसारस्य हस्ताङ्कलेखामुद्रायणो नृपः ।
20 पटस्य पुरतः प्राप्तां हृष्टः स्वयमवाचयत् ॥ २४ ॥
सुगतचरणपद्मन्यासपुण्योपकण्ठात्
त्रिदशपुरविशेषान्मागधोदारदेशात् ।
कुशलकलितमूर्तिर्भूपतिर्बिम्बिसारः
क्षितितलतिलकं त्वां धर्मबन्धुर्ब्रवीति ॥ २५ ॥
25 एतत्ते प्रहितं हितं भवमहामोहामये भेषजं
रागद्वेषविषापहं भगवतो बिम्बं शशाङ्कत्विषः ।
तृष्णापच्छमनं प्रसन्नमधुरं त्वन्नेत्रपात्रार्पितं
धन्यः पुण्यरसायनं पिब हठादाकण्ठमुत्कण्ठितः ॥ २६ ॥
सन्मार्गे विनियोजनं गुणगणाधाने सदाध्यापनं
30 दुर्व्यापारनिवारणं स्थिरसुखप्राप्तौ परिप्रेरणम् ।
निर्व्याजोपकृतौ निरन्तरतया सर्वात्मना वर्तनं
कर्तव्यं किमतः परं प्रियहितं कल्याणमित्रैः सताम् ॥ २७ ॥

इति लेखार्थमास्वाद्य सुहृत्प्रेमामृतोचितम् ।  D 981
राजा गजाधिरूढस्य पटस्य प्रययौ पुरः ॥ २८ ॥
अभिनन्द्य तमानन्दात् सामात्यः सपुरोहितः ।
हेमसिंहासनोत्सङ्गे स प्रसार्य न्यवेशयत् ॥ २९ ॥
लावण्यपुण्यनिलयं दृष्ट्वा तत्सौगतं वपुः ।  5
नमो नमः प्रबुद्धायेत्यवदज्जगतीजनः ॥ ३० ॥
बुद्धाभिधानं श्रुत्वैव पुलकालंकृताकृतिः ।
पुष्पवर्षे सुरैर्मुक्ते विस्मितोऽभून्महीपतिः ॥ ३१ ॥
पुण्यं भगवतः श्रुत्वा स तत्र चरितामृतम् ।
पयोदानादसोत्कण्ठनीलकण्ठतुलां ययौ ॥ ३२ ॥  10
द्वादशाङ्गं पटस्याधः सानुलोमविपर्ययम् ।
प्रतीत्यसमुत्पादं च दृष्ट्वा मोहं मुमोच सः ॥ ३३ ॥
स्रोतःप्राप्तिफलेनैवं दृष्टसत्योऽथ भूपतिः ।
दिदेश प्रतिसंदेशं सख्युर्भिक्षुविसर्जनैः ॥ ३४ ॥
बिम्बिसारस्ततस्तस्मै कृत्वा भगवतोऽर्थनाम् ।  15
कात्यायनं च व्यसृजत् शैलाख्यां चापि भिक्षुणीम् ॥ ३५ ॥
उद्रायणस्य नृपतेरार्यः कात्यायनोऽथ सः ।  D 983
पूजाविधायिनस्तत्र विदधे धर्मदेशनाम् ॥ ३६ ॥
धर्मदेशनया तस्य संगतः सुमहान् जनः ।
स्रोतःसकृदनागामिफलार्हत्पदमाप्तवान् ॥ ३७ ॥  20
तस्मिन् गृहपती ख्यातौ तिष्यपुष्याभिधौ पुरे ।
शान्त्यै प्रव्रज्य तस्याग्रे परिनिर्वृतिमापतुः ॥ ३८ ॥
कालेन विहितौ स्तूपौ देहान्ते ज्ञातिभिस्तयोः ।
तन्नामचिह्नावद्यापि वन्दन्ते चैत्यवन्दकाः ॥ ३९ ॥
देव्याश्चन्द्रप्रभायाश्च शैलाख्या सापि भिक्षुणी ।  25
क्रमेणान्तःपुरे चक्रे सततं धर्मदेशनाम् ॥ ४० ॥
कदाचिदथ भूपालः क्रीडागारगतां प्रियाम् ।
तामज्ञासीन्निमित्तज्ञः सप्ताहावधिजीविताम् ॥ ४१ ॥
ज्ञातसंसारचरितस्ततस्तां वसुधाधिपः ।
अनुजज्ञे शुभपदं प्राप्तुं प्रव्रज्यया पुरः ॥ ४२ ॥  30
स्वाख्याते धर्मविनये भिक्षुक्त्या नृपतेर्गिरा ।
देवी प्रव्रजिता देहं दिने तत्याज सप्तमे ॥ ४३ ॥

D 985 चातुर्महाराजिकेषु देवेषु सहसैव सा ।
प्रयाता देवकन्यात्वं जगाम जिनकाननम् ॥ ४४ ॥
तत्र पूर्णेन्दुवदना दिव्याभरणभूषिता ।
दृष्ट्वा शाक्यमुनिं हृष्टा सा पपातास्य पादयोः ॥ ४५ ॥
5 प्रकीर्णदिव्यपुष्पायास्तस्याश्चक्रे तथागतः ।
धर्मोपपादनं येन दृष्टसत्या जगाम सा ॥ ४६ ॥
सा गत्वा नगरं पत्युर्व्योम्ना मूर्तिरिवैन्दवी ।
विबोध्य निशि सुप्तस्य चक्रे बोधिप्रकाशनम् ॥ ४७ ॥
यातायां स्वपदं तस्यां प्रभाते वसुधाधिपः ।
10 प्रव्रज्याभिमुखः पुत्रमभिषिच्य शिखण्डिनम् ॥ ४८ ॥
प्रजात्राणाय निक्षिप्य तं महामात्ययोस्ततः ।
नृपतेर्बिम्बिसारस्य सुहृदः स ययौ पुरम् ॥ ४९ ॥
बिम्बिसारस्तमायातं विगतच्छत्रचामरम् ।
नृपोपचारैः प्रणतः प्रीतिपूतैरपूजयत् ॥ ५० ॥
15 विश्रान्तमासनासीनं स तमूचे सविस्मयः ।
हृष्टः संदर्शनेनास्य श्रीवियोगेन दुःखितः ॥ ५१ ॥
D 987 राजन्ननन्तसामन्तमौलिविश्रान्तशासनः ।
पाकशासनतुल्यस्त्वं कथमेवमुपागतः ॥ ५२ ॥
अभिन्नवक्त्रप्रकृतेर्गुप्तमन्त्रस्य धीमतः ।
20 परेण राज्यहरणं वीर संभाव्यते न ते ॥ ५३ ॥
इति पृष्टः स सुहृदा सस्मितस्तमभाषत ।
राजन् वृद्धविभूतिर्मे न प्रिया सर्वगामिनी ॥ ५४ ॥
विषयास्वादवैमुख्याद् वितृष्णेन मया स्वयम् ।
उत्सृष्टमिव संत्यक्तमैश्वर्यं भोगभाजनम् ॥ ५५ ॥
25 त्वया कल्याणमित्रेण सुगतप्रतिमापटः ।
योऽसौ हिताय प्रहितः स वैराग्यगुरुर्मम ॥ ५६ ॥
अधुना त्वत्प्रसादेन गत्वा भगवतोऽन्तिके ।
इच्छाम्यवाप्तुं प्रव्रज्यामगारादनगारिकः ॥ ५७ ॥
इति सख्युर्वचः श्रुत्वा तत्तथेति विचिन्त्य च ।
30 सादरस्तद्विवेकेन बिम्बिसारस्तमब्रवीत् ॥ ५८ ॥
धन्यो बहुमतश्चासि सतां त्वं पृथिवीपते ।
कथं संसारविमुखी जाता ते मतिरीदृशी ॥ ५९ ॥

संतोषविभवो भोगसुभगः शोभसे परम् । D 989
लक्षणं शुद्धसत्त्वानां वैराग्याभरणं मनः ॥ ६० ॥
किं साम्राज्यमहौजसा सरजसा दुःसाधनैः साधनैः
किं भोगैः क्षणभोजनैः कलुषदैः किं सत्त्वदुःखैः सुखैः ।
संसारोपरमाय चेतसि सतां जन्मान्तरोपार्जितं 5
वैराग्यं कुरुते पदं यदि महामोहप्ररोहापहम् ॥ ६१ ॥
येन प्राणमनःप्रिया वसुमती संत्यज्यते लीलया
त्रैलोक्याभिमतेऽपि यः स्मरसुखे वैमुख्यदीक्षागुरुः ।
संमोहव्यसनातुरं जगदिदं येनानुकम्पास्पदं
पुण्यैः कोऽपि स जायते मतिमतां संसारवामः शमः ॥ ६२ ॥ 10
इत्युक्त्वा बिम्बिसारस्तं नीत्वा वेणुवनाश्रमम् ।
सप्रणामं भगवते तद्वृत्तान्तं न्यवेदयत् ॥ ६३ ॥
उद्रायणोऽपि सुगताकारं सुचिरचिन्तितम् ।
विलोक्य हर्षादात्मानं कृतकृत्यममन्यत ॥ ६४ ॥
प्रणामव्यग्रशिरसा संसारच्छेदिनि तनौ । 15 D 991
पपात भगवद्दृष्टिस्तस्य प्रव्रज्यया सह ॥ ६५ ॥
भिक्षुभावमथासाद्य पात्रपाणिः स चीवरी ।
नगरे पिण्डपातार्थी चकार जनविस्मयम् ॥ ६६ ॥
प्रजाः शिखण्डी धर्मेण पालयित्वा प्रसन्नधीः ।
यातः कालेन कालुष्यमधर्माभिरतोऽभवत् ॥ ६७ ॥ 20
कलुषं काञ्चनरुचिव्यक्तविद्युद्विलासिनी ।
न कस्य कुरुते लक्ष्मीर्मेघमालेव मानसम् ॥ ६८ ॥
अनायत्तं महामात्यौ हिरुको भिरुकश्च तम् ।
अधर्मकर्मनिरतं क्रुद्धौ तत्यजतुः प्रभुम् ॥ ६९ ॥
तत्पदे विहितौ राज्ञा सचिवौ दण्डमुद्गरौ । 25
चित्तानुवृत्तिकुशलौ स्वैरं सक्तं तमूचतुः ॥ ७० ॥
प्रजारञ्जनसंसक्ता राजदौर्जन्यवादिनः ।
स्वयशःख्यापनायैव जायन्ते धूर्तमन्त्रिणः ॥ ७१ ॥
न धर्मं न सुखं नार्थं न कीर्तिं न च जीवितम् । D 993
गणयन्ति प्रभोरर्थे ते भृत्या भव्यभक्तयः ॥ ७२ ॥ 30
नाखण्डिता नाक्षयिता नातप्ता नाप्यपीडिताः ।
कुर्वन्त्यर्थक्रिया राज्ञस्तिलतुल्याः किल प्रजाः ॥ ७३ ॥

इति ब्रुवाणौ तौ राज्ञा नियुक्तौ राज्यचिन्तने ।
लोभात् प्रवृत्तौ दुर्नीतौ हन्तुं निःशरणाः प्रजाः ॥ ७४ ॥
निर्विचारे दुराचारे कुमतौ पृथिवीपतौ ।
लुप्तसत्ये महामात्ये प्रजानां जीवितं कुतः ॥ ७५ ॥
5 उद्रायणोऽथाचिरेण कदाचिद् वणिजं पथि ।
निजदेशागतं वार्तां पप्रच्छ नृपराष्ट्रयोः ॥ ७६ ॥
सोऽवदद्देव कुशली सुतस्तव महीपतिः ।
किं तु सन्मन्त्रिरहितः कुमन्त्रिवशमागतः ॥ ७७ ॥
तत्र प्रजानां विततोपतापः
10 कोऽपि प्रवृत्तः प्रभुशासनेन ।
येनाद्य तत्कुत्सितदेशजन्म
दिवानिशं शोचति पौरलोकः ॥ ७८ ॥
D 995 यत्र ध्वान्तं सृजति तरणिर्यत्र चन्द्रोऽग्निवर्षी
यत्रोदेति प्रकटममृतादुत्कटः कालकूटः ।
15 यत्र त्राता हरति नृपतिर्जीववृत्तिं प्रजानां
तत्राक्रन्दं प्रसृतविपुलोपप्लवं कः शृणोति ॥ ७९ ॥
इत्यासक्तनृपायासखिन्नस्यार्तिमयं वचः ।
दुःसहं वणिजः श्रुत्वा स तमूचे कृपानिधिः ॥ ८० ॥
मद्गिरा त्वमितो गत्वा तूर्णमाश्वासय प्रजाः ।
20 स्थापयिष्याम्यहं धर्मे स्वयमेत्य शिखण्डिनम् ॥ ८१ ॥
इत्युक्तस्तेन सानन्दः स्वदेशं शनकैर्वणिक् ।
गत्वा प्रजानां विदधे स्वैरमाश्वासनं पुरः ॥ ८२ ॥
प्रवादे प्रसृते तस्मिन्नमात्यौ दण्डमुद्गरौ ।
अतीतभूपागमनत्रस्तौ भूपतिमूचतुः ॥ ८३ ॥
25 सर्वत्र श्रूयते देव प्रवादः साधुनिन्दितः ।
वृद्धः प्रव्रजितो राजा राज्यार्थी यत्नवानिति ॥ ८४ ॥
तीव्रव्रतपरिक्लिष्टः संभोगाभिमुखादरः ।
लज्जां प्रव्रज्यया सार्धं त्यक्त्वा स पुनरेष्यति ॥ ८५ ॥
D 997 राजन्नपक्ववैराग्यास्त्यजन्ति सहसैव यत् ।
30 तत् पूर्वाभ्यधिकं तेषां प्रयाति प्रियतां पुनः ॥ ८६ ॥
लोकस्थितिविरुद्धेषु विषयेषु विशेषतः ।
स्पृहा संजायते जन्तोरपथ्येष्विव रोगिणः ॥ ८७ ॥

सुखोत्सेकात्परित्यक्तं परहस्तमुपागतम् ।
प्रायः सर्वं भवत्येव जडस्याप्रमिव प्रियम् ॥ ८८ ॥
तस्माद्भवन्तमुत्सार्य प्रतापनिधिमासनात् ।
क्षीणः शशीव स्थविरः स राज्यं भोक्तुमिच्छति ॥ ८९ ॥
चीवरोद्विग्नगात्रस्य वरवस्त्राभिलाषिणः । 5
जातास्य मुण्डिते मूर्ध्नि रत्नाङ्कमुकुटस्पृहा ॥ ९० ॥
रत्नहर्म्येषु नवतासंभोगविभवोद्भवम् ।
त्यक्त्वा विलासमायासं वनवासं सहेत कः ॥ ९१ ॥
मृदुशयनसुखार्हा ये कथं शेरते ते
हरिणखरखुरोद्यत्कण्टकासु स्थलीषु । 10
मधु विधुकरशीतं यैर्निपीतं कथं ते
वनजगजमदोष्णं तिक्तमम्भः पिबन्ति ॥ ९२ ॥
अधुनैव तवासन्नप्रवेशविषमस्थितेः । D 999
आद्यं मतं न्यायविदां राजपुत्र निपातनम् ॥ ९३ ॥
तस्मादनागतो राजा पूर्वं वध्यस्तव प्रभो । 15
दीपं हन्ति पतङ्गो हि न दग्धश्चेत्समापतन् ॥ ९४ ॥
तयोरिति गिरा क्षिप्रमभूद् भूपतिराकुलः ।
खलमेघैः कलुषतां नीतं कस्य न मानसम् ॥ ९५ ॥
स तौ बभाषे साशङ्कः क्रकचक्रूरतां गतः ।
बाधः साधारणश्चायं युवयोर्मम चाग्रतः ॥ ९६ ॥ 20
भवद्भयामेव विनयोपायविश्रान्तया धिया ।
विचार्य कार्यतात्पर्यं यद् युक्तं तद्विधीयताम् ॥ ९७ ॥
इति राज्ञा कृतोत्साहौ तौ विसृज्याशु घातकान् ।
उद्रायणस्याग्रपथं वधायैव बबन्धतुः ॥ ९८ ॥
सोऽपि प्रज्ञापरित्राणे नियोक्तुं पुत्रमुद्यतः । 25
भगवन्तं समभ्येत्य व्रजामीति व्यजिज्ञपत् ॥ ९९ ॥
सर्वज्ञेनाभ्यनुज्ञातः स्वकृतं भुज्यतामिति ।
कर्मपाशसमाकृष्टः स ययौ रोरुकं पुरम् ॥ १०० ॥
तस्माद्व्रजन्तं निर्व्याजमाचारमिव दुर्जनाः । D 1001
दुष्टामात्यप्रयुक्तास्ते जघ्नुर्वर्त्मनि घातकाः ॥ १०१ ॥ 30
तस्य चीवरपात्रादीन् गृहीत्वा निहतस्य ते ।
न्यवेदयन् कृतं प्रीत्यै राजकार्यममात्ययोः ॥ १०२ ॥

ततः पापप्रहृष्टाभ्यां नृपस्ताभ्यां प्रदर्शितम् ।
दृष्ट्वा मुमोह सहसा रक्ताक्तं चीवरं पितुः ॥ १०३ ॥
स लब्धसंज्ञः शनकैः शुशोच न तथा गुरुम् ।
यथा पतितमात्मानं घोरे नरकगह्वरे ॥ १०४ ॥
5 सोऽवदद्वत्स संप्राप्तं फलं खलजनान्मया ।
ऐश्वर्यमधुलुब्धेन पापपातमपश्यता ॥ १०५ ॥
अहो बत निरालम्बे घोरे नरकसंकटे ।
उन्नतारोहिणां सद्यः पातकं खलसंगतम् ॥ १०६ ॥
कृतमेतन्महत्पापं दुष्टामात्यधिया मया ।
10 पतितस्य ममेदानीं पावकोऽपि न पावकः ॥ १०७ ॥
तुल्यं पितुश्चार्हतस्य वधे का मम निष्कृतिः ।
पीतं यत्र मयैकस्मिन् पात्रे सदहनं विषम् ॥ १०८ ॥
D 1003 वृद्धे पितरि निःशङ्कं शमं प्रव्रज्ययाश्रिते ।
स्वचित्तं निशितं शस्त्रं लोभाद्व्यापारितं मया ॥ १०९ ॥
15 यत्संचिन्तितमेव कम्पजनकं श्रोतुं न यत् शक्यते
दृष्टं यच्च करोति शोककलनां निश्चेतनानामपि ।
यत्र क्रौर्यमपि प्रयाति मृदुतां तीव्रानुतापाग्निना
तत्रापि प्रसरन्ति निर्घृणधियां निस्त्रिंशतीक्ष्णाः क्रियाः ॥ ११० ॥
इत्युक्त्वा दुःखसंतप्तः प्रलापमुखराननः ।
20 न्यवारयत्तयोः कोपात्प्रवेशं दुष्टमन्त्रिणोः ॥ १११ ॥
गुणान्तरं परिज्ञाय भिरुकं हिरुकं च सः ।
आनिनाय प्रसाद्याशु पुराणौ सचिवौ पितुः ॥ ११२ ॥
ततश्चिन्ताकृशे राज्ञि शोकात् पाण्डुरतां गते ।
स्वैरं तज्जननीमेत्य दुष्टामात्याववोचताम् ॥ ११३ ॥
25 देवि त्वत्तनयः श्रीमान् स्वभावसरलाशयः ।
राज्यरक्षां न जानाति स्वजनोच्छेदकर्कशाम् ॥ ११४ ॥
पिता प्रव्रजितोऽप्यस्य राज्यं हर्तुमुपागतः ।
आवाभ्यां प्रशमं नीतस्तत्र का नाम वाच्यता ॥ ११५ ॥
D 1005 नीचतन्त्रोपपन्नश्चेत् क्रमोऽयमशुभक्रमः ।
30 राज्याभिलाषिणो भिक्षोस्तस्यापि स कथं क्रमः ॥ ११६ ॥
आवां पितृवधक्रोधाद् वारितौ भूभुजा पदात् ।
स्वयमद्यापि शोकेन किं मिथ्या परिशुष्यते ॥ ११७ ॥

सुकृतं कृतमावाभ्यां प्रभोर्दुःखकृशाङ्गता ।
भवन्ति सर्वभावेषु भृत्या एवापराधिनः ॥ ११८ ॥
गतं शोचति किं राजा यत्कृतं कृतमेव तत् ।
उपेक्ष्यते त्वया देवि कस्माच्चिन्ताकृशः सुतः ॥ ११९ ॥
ताभ्यामित्युदितं श्रुत्वा सा राजजननी शनैः । 5
ऊचे तरलिका नाम तद्वाक्यविहितादरा ॥ १२० ॥
आनन्तर्यमिदं कर्म द्वयोर्नरकपातकम् ।
युष्मन्मतादुपनतं राज्ञः पूर्वकृतेन वा ॥ १२१ ॥
अहं तु वारयाम्यस्य शोकं पितृवधोद्भवम् ।
अर्हद्वधोद्भवं दुःखं भवद्भ्यामपि वार्यताम् ॥ १२२ ॥ 10
इति तौ स्वैरमादिश्य सा गत्वा पार्थिवान्तिकम् ।
तमुवाच शुचाक्रान्तं परिक्षीणमिवोडुपम् ॥ १२३ ॥
धर्माधर्ममयं पुत्र राज्यं राज्ञां बहुच्छलम् । D 1007
पापानां शङ्कया तस्मिन् किं शुचा परिशुष्यसि ॥ १२४ ॥
पितुर्वधात् प्रतप्तोऽसि यदि नाम गुरुप्रियः । 15
तत्रोच्यते समुत्सृज्य लज्जां त्वद्दुःखसंकटे ॥ १२५ ॥
स्वैरं जातस्त्वमन्येन न स तद्धर्मतः पिता ।
स्वेच्छाहारसुखाः पुत्र स्त्रियो हि निरपत्रपाः ॥ १२६ ॥
इत्यप्रियमपि श्रुत्वा राजा तद्वचनं रहः ।
पितृवैशसपापोग्रदुःखसंतापमत्यजत् ॥ १२७ ॥ 20
प्रकुर्वन्त्यस्ताद्रेरुदयगिरिणा क्लेशकलनां
क्षणात् क्षोणीक्ष्माभृद्विघटनविनोदं विदधति ।
सृजन्त्येता वह्निं सपदि सलिलात्तच्च दहना-
दसाध्यं नारीणां न हि भवति किंचित्त्रिभुवने ॥ १२८ ॥
अथ सोऽर्हद्वधेनैव शल्यतुल्येन पीडितः । 25
नृपः पप्रच्छ धर्मज्ञान्निष्कृतिं तस्य कर्मणः ॥ १२९ ॥
ततस्तौ दुष्टसचिवौ तिष्यपुष्याख्यचैत्ययोः ।
मार्जारपोतौ धृत्वान्तःसक्तावामिषशिक्षया ॥ १३० ॥
निषिद्धावपि धार्ष्ट्येन प्रविश्य नृपतेः सभाम् । D 1009
तमूचतुस्तीव्रतापसंतापप्रशमार्थिनम् ॥ १३१ ॥ 30
देव मिथ्यैव भवता चित्तमायास्यते भृशम् ।
सर्वकल्याणा लोकेऽस्मिन् नार्हन्तः सन्ति ते मताः १३२ ॥

यदि सत्यं भवेयुस्ते नभसो राजहंसवत्।
ऋद्धिमन्तः कथं तेषामन्येन वधसंभवः॥ १३३॥
न सन्ति तस्मादर्हन्तः कुतस्तद्वधपातकम्।
सीमाविवादः कस्तत्र यत्र ग्रामो न विद्यते॥ १३४॥
5 तिष्यपुष्यौ गृहपती यावर्हत्पदमापतुः।
मार्जारावन्तरे जातौ तावेवाद्य स्वचैत्ययोः॥ १३५॥
प्रकटौ तौ च दृश्येते प्रत्यक्षं कस्य संशयः।
प्रत्ययो यदि नास्त्येव स्वयं किं न निरीक्ष्यते॥ १३६॥
इत्युक्त्वा भूपतेः कृत्वा खलौ दोलाकुलं मनः।
10 जग्मतुः सहितौ तेन चैत्यसंदर्शनाय तौ॥ १३७॥
अपूर्वकौतुकावेशात् तत्र संघटिते जने।
विलोकनोद्यते राज्ञि सामात्ये दुष्टमन्त्रिणौ॥ १३८॥
D 1011 आमिषाभ्याससंबद्धतिष्यपुष्याभिधानयोः।
धूर्तौ चक्रतुराह्वानं शनैर्वाल्विडालयोः॥ १३९॥
15 तौ तिष्यपुष्यावर्हन्तौ मार्जारौ स्थो युवां यदि।
प्रदक्षिणं वा क्रियतां तेन सत्येन चैत्ययोः॥ १४०॥
मांसदानक्षणे ताभ्यामिति वाचमुदीरितौ।
तूर्णं निर्गत्य मार्जारौ चक्रतुस्तौ प्रदक्षिणम्॥ १४१॥
तद्दृष्ट्वा सहसावाप्तप्रत्यये सानुगे नृपे।
20 याते दुर्जनमायैव जगज्जयमहीं ययौ॥ १४२॥
मुष्टौ वायुं दृषदि कमलं चित्रमाकाशदेशे
जिह्वाग्रे च प्रचुररचनासृष्टिसंहारलीलाः।
किं वा नान्यत् पशुशिशुधियां मोहनायेन्द्रजालं
मूर्तं धूर्ताः क्षणपरिचितप्रत्ययं दर्शयन्ति॥ १४३॥
25 निष्प्रत्ययपरो राजा ततः सौगतदर्शने।
आर्यकात्यायनस्याग्रे श्रद्धापूजामवारयत्॥ १४४॥
राजधान्यां निषिद्धोऽथ बहिरेव स सानुगः।
विनेयकृपया तत्र तस्थौ शैला च भिक्षुणी॥ १४५॥
D 1013 ततः कदाचिदायान्तं दृष्ट्वा कात्यायनः पुरः।
30 नृपतिं जनसंपातादवमानभयाद् ययौ॥ १४६॥
प्रेषितं पूर्वमन्त्रिभ्यां व्रजन्तमवलोक्य तम्।
दुष्टामात्यौ नरपतिं दीर्घवैरावबोचनाम॥ १४७॥

राजन्नमङ्गलनिधिर्मुण्डोऽयं विशिरः पथि।
दृष्टोऽद्य भिक्षुरस्माभिर्न विघ्नः किं भविष्यति १४८॥
न पश्यामि मुखं राज्ञः पापस्येति भणत्यसौ।
तथा हि क्षणमेकान्ते गत्वा दूरमितः स्थितः॥ १४९॥
श्रुत्वैतद्दुर्जनामर्षादुवाचानुचरान् नृपः। 5
एष दूरस्थितः पांशुमुष्टिभिः पूर्यतामिति॥ १५०॥
पूर्यमाणः स तैः पांशुमुष्टिभिर्दुष्टचेटकैः।
दिव्यां कुटीं प्रवेशेन परिहाराय निर्ममे॥ १५१॥
अमर्षकोपिताः सर्पाः व्याघ्रा वा पीतलोहिताः।
शान्तेरायान्ति मृदुतां न तु भूपतिचेटकाः॥ १५२॥ 10
ततः प्रयाते नृपतौ पांशुराशिशतावृतम्।
दुःखादूचतुरभ्येत्य हिरुको भिरुकश्च तम्॥ १५३॥ D 1015
आर्य कृच्छ्रमवाप्तोऽसि राज्ञा क्रूरेण दुष्कृतैः।
लोचनानि धिगस्माकं यैरिदं दृश्यते पुरः॥ १५४॥
मोहान्धः पातकश्वभ्रे दुर्जनैः पातितो नृपः। 15
कर्मणो वयमप्यस्य दर्शनात् पापभागिनः॥ १५५॥
भूरियं भूरिपापार्ता त्याज्या प्राज्यमतेस्तव।
दुःसहः खलसंवासः त्यागः कस्य न संमतः॥ १५६॥
प्रयाति न शमः शमं क्षयमुपैति नैव क्षमा
भवन्ति न च बुद्धयः परुपरोषदोषस्पृशः। 20
वसन्ति न विमानना मनसि शल्यतुल्याः सतां
न दुष्टजनवर्जनादपरमस्ति लोके सुखम्॥ १५७॥
ऐश्वर्यं गुणिनामधोनिपतनायासप्रयासप्रदं
गाम्भीर्यं तिमिराकरं प्रविशतां प्राणापहं प्राणिनाम्।
नष्टा सापि निकृष्टदुष्टकुटिलव्यालैरुपादेयता 25
कूपस्येव खलस्य नास्ति तदहो दोषालियुक्तं यतः॥ १५८॥
तयोरिति वचः श्रुत्वा महाकात्यायनोऽब्रवीत्।
न निकारेऽपि मे कोपः कर्मणो गतिरीदृशी॥ १५९॥
एतावदेव मे दुःखं यन्मूढस्य महीपतेः। D 1017
खलसंगमदोषेण भयं महदुपस्थितम्॥ १६०॥ 30
प्रथमे हि महावायुः पुरेऽस्य निपतिष्यति।
द्वितीये पुष्पवृष्टिश्च वज्रवृष्टिस्ततः परे॥ १६१॥

रूप्यवृष्टिश्चतुर्थे च हेमवृष्टिश्च पञ्चमे ।
रत्नवृष्टिस्ततः षष्ठे पांशुवृष्टिश्च सप्तमे ॥ १६२ ॥
तया सबन्धुराष्ट्रोऽसौ न भविष्यति भूपतिः ।
तस्माद् भवद्भ्यां गन्तव्यं रत्नान्यादाय भूयसे ॥ १६३ ॥
5 इति तद्वचनं श्रुत्वा विनिश्चित्य तथेति तौ ।
हिरुकः श्यामकं पुत्रं तस्योपस्थापकं व्यधात् ॥ १६४ ॥
भिरुकश्च सुतां श्यामावतीमादाय पाणिना ।
अभ्येत्य भिक्षुकीं शैलां प्रणयादिदमब्रवीत् ॥ १६५ ॥
आर्ये भवत्या मे कन्या घोपिलस्य गृहप्रभोः ।
10 गृहे समर्पणीयेयमासन्नप्रतिपन्नया ॥ १६६ ॥
एवमुक्त्वार्पयित्वा तावमात्यौ जग्मतुर्गृहम् ।
शैलापि कन्यामादाय प्रययौ घोपिलालयम् ॥ १६७ ॥
D 1019 ततः क्रमेण तद्भूद्यथोक्तं भिक्षुणा पुरे ।
ज्ञानदीपवती प्रज्ञा यथातत्त्वं हि पश्यति ॥ १६८ ॥
15 षष्ठेऽह्नि रत्नवर्षेऽथ पतिते रत्नपूरिताम् ।
ययतुर्नावमादाय तावमात्यावलक्षितौ ॥ १६९ ॥
तौ दक्षिणां दिशं गत्वा चक्रतुर्नगरद्वयम् ।
हिरुको हिरुकाख्यानं भिरुकाख्यं तथापरः ॥ १७० ॥
परेऽह्नि पांशुवर्षेण महता पतता नृपः ।
20 सबन्धुराष्ट्रः प्रलयं प्रययौ नरकातिथिः ॥ १७१ ॥
सदण्डिमुद्गरे राज्ञि याते किल्बिपशेपताम् ।
तं मन्त्रिपुत्रमादाय व्योम्ना कात्यायनो ययौ ॥ १७२ ॥
तमेवानुगता प्रीत्या नभसा पुरदेवता ।
तदाज्ञया खरवनीकर्वटे विदधे स्थितिम् ॥ १७३ ॥
25 भिक्षुपुण्यानुभावेन भाग्यैर्मन्त्रिसुतस्य च ।
अधिष्ठानेन देव्याश्च श्रीमत्तदभवत् पुरम् ॥ १७४ ॥
तत्राथ देवता चक्रे चैत्यं कात्यायनस्य सा ।
सुरवत्यां यदद्यापि वन्दन्ते चैत्यवन्दकाः ॥ १७५ ॥
D 1021 मन्त्रिसूनुमथादाय लग्नं चीवरकर्णिके ।
30 लम्बनं स ययौ व्योम्ना देशं कात्यायनः परम् ॥ १७६ ॥
लम्बते लम्बते कोऽयमित्युक्ते विस्मयाज्जनैः ।
बभूवुस्ते जनास्तत्र लम्बका इति विश्रुताः ॥ १७७ ॥

अत्रान्तरे दिवं याते तत्रापुत्रे महीपतौ ।
स कृतः श्यामको राजा लक्षणज्ञैस्तदाज्ञया ॥ १७८ ॥
गत्वा भोक्कानकं नाम दिशा कात्यायनस्ततः ।
जनन्यास्तत्र संशुद्धां विदधे धर्मदेशनाम् ॥ १७९ ॥
सा दृष्टसत्या पुत्रस्य यष्टीमादाय सादरम् ।    5
वन्द्यमद्यापि महती यष्टिचैत्यमकारयत् ॥ १८० ॥
श्रावस्तीमथ सोत्कण्ठः प्राप्य कात्यायनः शनैः ।
जिनं विलोक्य सानन्दश्चक्रे तत्पादवन्दनम् ॥ १८१ ॥
उद्रायणसुतकथां तत्र तेन निवेदिताम् ।
आकर्ण्य भिक्षुभिः पृष्टः सर्वज्ञस्तानभाषत ॥ १८२ ॥    10
लुब्धकः कालपाशाख्यः कर्वटोपान्तकानने ।
सकूटां मृगबन्धाय निदधे वागुरां पुरः ॥ १८३ ॥
यन्त्रं पाशावृतं दत्वा याते तस्मिन् यदृच्छया ।    D 1023
प्रत्येकबुद्धस्तं देशं प्राप्य विश्रान्तिमाप्तवान् ॥ १८४ ॥
तस्य पुण्यानुभावेन बन्धं न विविशुर्मृगाः ।    15
न हि शुद्धात्मनामग्रे प्राप्नोत्यकुशलं जनः ॥ १८५ ॥
लुब्धकोऽपि ततोऽभ्येत्य पाशानालोक्य निर्मृगान् ।
प्रत्येकबुद्धं क्रोधान्धो विषदिग्धेषुणावधीत् ॥ १८६ ॥
तस्य सायकविद्धस्य ज्वलज्ज्वलनतेजसः ।
प्रभावमद्भुतं दृष्ट्वा पादयोर्निपपात सः ॥ १८७ ॥    20
अकार्यकरणोद्वेगसंतापादथ लुब्धकः ।
निनिन्द शोचन्नात्मानं संत्यज्य शरवागुराः ॥ १८८ ॥
परिनिर्वाणमाप्तस्य तस्यास्थीनि निधाय सः ।
छत्रध्वजादिसंभारैः स्तूपं चक्रे सदार्चितम् ॥ १८९ ॥
लुब्धकस्तेन पुण्येन बभूवोद्रायणो नृपः ।    25
वधात् प्रत्येकबुद्धस्य बहुशो वधमाप्तवान् ॥ १९० ॥
नन्दनाम्नो गृहपतेर्मदलेखाभिधा सुता ।
बभूव धनधान्यादिस्फीतिः कर्वटवासिनः ॥ १९१ ॥
सा कदाचिन्मदोत्सिक्ता गृहमार्जनरेणुभिः ।    D 1025
प्रत्येकबुद्धमायान्तं पथि मोहादवाकिरत् ॥ १९२ ॥    30
तस्मिन्नेव दिने तस्याश्चिरचिन्ताभिरर्थितः ।
वरः स्तनभरार्ताया वरणार्थी समाययौ ॥ १९३ ॥

मूर्ध्नि प्रत्येकबुद्धस्य पांशुमुष्टिनिपातनात् ।
प्रत्यासन्नविवाहाहमिति भ्रातरमाह सा ॥ १९४ ॥

ततस्तस्याः प्रवादेन चिक्षिपुर्वरणाप्तये ।
मूर्ध्नि प्रत्येकबुद्धस्य रजांसि प्रौढकन्यकाः ॥ १९५ ॥

5 गुणाकारप्रवृत्तेन प्रत्ययेन विमोहिताः ।
निर्विचार्यं प्रवर्तन्ते विरुद्धेष्वपि वस्तुषु ॥ १९६ ॥

प्रवृत्तपातकाचारे तस्मिन् बुद्धबुधाभिधौ ।
निवारणं गृहपती कर्मणस्तस्य चक्रतुः ॥ १९७ ॥

सैव कन्या नरपतिः शिखण्डी पापभागभूत् ।
10 प्रवादकर्ता तद्भ्राता भिक्षुः कात्यायनोऽप्ययम् ॥ १९८ ॥

जातौ गृहपती रूढदुष्टाचारनिवारणात् ।
पुरोपतापान्निर्मुक्तौ हिरुको भिरुकश्च तौ ॥ १९९ ॥

D 1027 इति भगवतः श्रुत्वा वाक्यं विचार्य च भिक्षवः
फलपरिणतिं ज्ञात्वा चित्रां शुभाशुभकर्मणाम् ।
15 खलजनवचस्तुल्यं शत्रुं विचारसमं गुरुं
सुकृतसदृशं बन्धुं लोके न किंचन मेनिरे ॥ २०० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलताया-
मुद्रायणावदानं चत्वारिंशः पल्लवः ॥



## ४१ कपिलावदानम् ।

D 1029

यद्भूपालविशालदानविभवप्रोद्भूतपुण्याधिकं
दानस्यातिकृशस्य सत्फलभरमाप्नोत्यलं दुर्गतः ।
शुद्धस्यैव विवृद्धधर्मधवलश्रद्धासमृद्ध्यान्वितं
निःसंसारविजृम्भितं तदुचितं चित्तस्य वित्तस्य च ॥ १ ॥ 5

जिने जेतवनारामविहारिणि महाधनः ।
धीराभिधानः श्रावस्त्यामभूद् गृहपतिः पुरा ॥ २ ॥
तस्य पण्डितनामाभूत् पुत्रः सुकृतपण्डितः ।
अखण्डितयशःपुण्यदानालंकारमण्डितः ॥ ३ ॥
स बाल एव भिक्षूणां राजार्हैर्वस्त्रभोजनैः । 10
शारिपुत्रप्रधानानां चकारातिथिसत्क्रियाम् ॥ ४ ॥
ततः कदाचिदक्षीणदुर्भिक्षक्षयिते जने ।
याच्ययाचकतुल्यत्वे पिण्डच्छेदोऽर्थिनामभूत् ॥ ५ ॥
भिक्षूणां संकटे तस्मिन् काले परमदारुणे ।
पण्डितः सुगताहूतः प्रतस्थे जेतकाननम् ॥ ६ ॥ 15
तं व्रजन्तं तुरङ्गेण काञ्चनादामशोभिनम् । D 1031
ऊचुर्विटाः समभ्येत्य गुणोत्साहासहिष्णवः ॥ ७ ॥
अर्थिसार्थार्थनाकल्पवृक्षस्त्वं दिक्षु विश्रुतः ।
शतानि पञ्च संप्राप्तास्त्वामुद्दिश्याशया वयम् ॥ ८ ॥
अलंकारांशुकयुगं प्रत्येकं नः समीहितम् । 20
अधुनैवाविलम्बेन दीयतां यदि शक्यते ॥ ९ ॥
इत्युक्तस्तैः सदाचारः सोऽवतीर्य तुरङ्गमात् ।
साधु पूजां विधायैषां धीमान् क्षणमचिन्तयत् ॥ १० ॥
भगवन्तमदृष्ट्वैव गच्छामि स्वगृहं यदि ।
आसन्नामृतपानस्य तं विघ्नं कथमुत्सहे ॥ ११ ॥ 25
अदत्त्वा प्रियमर्थिभ्यो व्रजामि यदि निस्त्रपः ।
कथं करोमि दानस्य तां स्वयं व्रतखण्डनाम् ॥ १२ ॥
इति चिन्तयतस्तस्य भित्त्वा भूमिं समुद्गतः ।
नागराजः स्वयं शेषः प्रादादर्थिसमीहितम् ॥ १३ ॥
दत्तानि नागराजेन वस्त्राण्याभरणानि च । 30
स तेभ्यः प्रतिपाद्याशु ययौ निःशल्यतामिव ॥ १४ ॥

D 1033

तेऽपि दृष्ट्वा तदाश्चर्यं पुण्यां सुगतभावनाम्।
सर्वार्थसंपत्सिद्धीनां जननीमेव मेनिरे ॥ १५ ॥
जातचित्तप्रसादास्ते तेनैव सहितास्ततः।
भगवन्तं ययुर्द्रष्टुं विनष्टद्वेषकल्मषाः ॥ १६ ॥
5 भगवन्तमथालोक्य कुमारः प्रणताननः।
तत्पादपद्मरजसा धन्यश्चक्रे ललाटिकाम् ॥ १७ ॥
हारं पुनश्चरणयोः शास्तुः शशिकरोज्ज्वलम्।
विन्यस्य प्रणतानग्रे स तानस्मै न्यवेदयत् ॥ १८ ॥
धर्मदेशनया तेषां भगवान् ज्ञानवज्रभृत्।
10 भित्त्वा सत्कायदृष्ट्यद्रिं स्रोतःप्राप्तिफलं व्यधात् ॥ १९ ॥
दृष्टसत्येषु यातेषु ततस्तेषु प्रणम्य तम्।
कुमारं पण्डितं प्रीत्या भगवान् स्वयमभ्यधात् ॥ २० ॥
वत्स पुण्यैरवाप्तोऽसि पर्याप्तिं सुकृतश्रियाम्।
दुर्भिक्षेष्वपि भिक्षूणां कुरु भोज्याधिवासनाम् ॥ २१ ॥
15 परिग्रहो मे भिक्षूणां शतान्यर्धत्रयोदश।
अन्ये चान्विष्य कृच्छ्रार्ताः संविभज्यास्त्वया पुरे ॥ २२ ॥

D 1035

इति श्रुत्वा भगवतः पण्डितः प्रमदाकुलः।
भक्त्या संघस्य विदधे यावज्जीवं निमन्त्रणम् ॥ २३ ॥
ततः स्वगृहमभ्येत्य राजार्हैर्भिक्षुसंमतैः।
20 संबुद्धप्रमुखं संघं सदा भोज्यैरपूजयत् ॥ २४ ॥
दरिद्रानदरिद्रांश्च याच्यानपि च याचकान्।
अनुकम्प्यान् स विदधे दानेनान्यानुकम्पिनः ॥ २५ ॥
शेषान् कृपणसंघातान् सोऽन्विष्य करुणाम्बुधिः।
रत्नराशिं ददौ तेभ्यो दौर्गत्यतिमिरापहम् ॥ २६ ॥
25 स रत्ननिकरस्तेषां जगामाङ्गारराशिताम्।
नृणां भाग्यानि रत्नानि मणयः प्रस्थजातयः ॥ २७ ॥
ते तमूचुः समभ्येत्य स्वप्नदृष्टधना इव।
रत्ननाम्ना त्वयास्माकं स दत्तोऽङ्गारसंचयः ॥ २८ ॥
धनलाभेन महता सद्यः प्राप्तोन्नतिर्जनः।
30 तत्संक्षयात् क्षणेनैव परिभ्रष्टो न जीवति ॥ २९ ॥
इति तेषां वचः श्रुत्वा पण्डितः करुणानिधिः।
तानूचे पुण्यहीनानां रत्नान्यायान्त्यरत्नताम् ॥ ३० ॥

युष्माभिर्न कृतः पूर्वं मोहात् सुकृतसंचयः । D 1037
तेनायं रत्नराशिर्वः प्रयातोऽङ्गारसारताम् ॥ ३१ ॥

रत्नानि यत्ननिहितान्यपि यान्ति दूरं
पुण्यक्षयादुपनयन्ति च भाग्ययोगात् ।
वित्तार्जनं पतितशोकनिमित्तमेव 5
वित्तं हि चित्तमुचितं सुकृतप्रवृत्तम् ॥ ३२ ॥

तस्माद् भवद्भिर्भोज्याय भिक्षुसंघोऽधिवास्यताम् ।
भोगसंभारसंपत्तिमहं संपादयामि वः ॥ ३३ ॥

इत्युक्तास्तेन तद्दत्तवित्तभोजनसंपदा ।
ते बुद्धप्रमुखं संघं दिनमेकमपूजयन् ॥ ३४ ॥ 10

संघं यथावदभ्यर्च्य प्रणिधानमकारि तैः ।
मा कदाचन दारिद्र्यं स्यादस्माकमिति क्षणम् ॥ ३५ ॥

ततस्ते पण्डितगिरा गत्वा ददृशुरग्रतः ।
तमेवाङ्गारनिकरं प्रयातं रत्नराशिताम् ॥ ३६ ॥

भवने पण्डितस्याथ कुमारस्य प्रभावतः । 15
विवृतानां निधानानां निर्विघ्नं शतमुच्चयौ ॥ ३७ ॥

स प्रसेनजिते राज्ञे धर्मज्ञः स्थितिरक्षणात् । D 1039
ददौ निधानषड्भागं स चास्याङ्गारतामगात् ॥ ३८ ॥

कुमारस्यैव सुकृतैर्भोग्योऽयं निधिसंचयः ।
इत्यन्तरीक्षाद्वचनं ततः शुश्राव भूपतिः ॥ ३९ ॥ 20

कुमारस्यैव वचसा तान्निधीन्निधितां[1] पुनः ।
प्राप्तां विलोक्य साश्चर्यः प्राहिणोत्तद्गृहं नृपः ॥ ४० ॥

ततस्तदखिलं वित्तं वितीर्य विपुलाशयः ।
कुमारः संपदां चक्रे स्थितिं दुर्गतवेश्मसु ॥ ४१ ॥

अथ निःसारसंसारविचारविरतस्पृहः । 25
अनित्यतां स संचिन्त्य धीरः पितरमब्रवीत् ॥ ४२ ॥

अनुजानीहि मां तावत् गन्तुं तात तपोवनम् ।
इमा जन्मशतोच्छिष्टाः क्लिष्टा मम विभूतयः ॥ ४३ ॥

त्रैलोक्यसंपत्संप्राप्तिर्यस्मिन् व्रजति भोग्यताम् ।
तदिदं सर्वभूतानामायुर्भाजनमल्पकम् ॥ ४४ ॥ 30

---

1 सांनिध्यात् in the original.

D 1041
शीते यस्य करोमि संततमृदुस्पर्शांशुकैर्गूहनं
संतापे रचयामि यस्य शिशिरश्रीखण्डचर्चार्चनम्।
यस्यार्थे विषशस्त्रवह्निभुजगत्रातात्परं मे भयं
प्राप्तः सोऽयमपायतः परिहृतोऽप्यायाति कायः क्षयम्॥ ४५॥

5
भोगाद्विरक्तः प्रव्रज्यामादाय दयितां वने।
विहरामि हरन् चिन्तां चिन्तातप्तस्य चेतसः॥ ४६॥
इत्युक्त्वा स परित्यज्य विषयस्नेहबन्धनम्।
कृताभ्युपगमः पित्रा शारिपुत्राश्रमं ययौ॥ ४७॥
तत्र प्रव्रजितस्तेन पात्रपाणिः सचीवरः।
10
तस्यैवानुचरो भूत्वा विचचार यतव्रतः॥ ४८॥
स दृष्ट्वा कर्षकैर्धारां क्षेत्रात् क्षेत्रप्रवर्तिताम्।
निर्दिष्टेन पथा यान्तीं विस्मयादित्यचिन्तयत्॥ ४९॥
अहो विहितमार्गेण गच्छतामप्यचेतसाम्।
जलानां कर्मसंसिद्धिर्दृश्यते न तु देहिनाम्॥ ५०॥
D 1043
15
संचिन्त्येति व्रजन्नग्रे दृष्ट्वा यष्टीकृतं शरम्।
प्रतप्तमिषुकारेण प्रदध्यौ धीमतां वरः॥ ५१॥
तापात् प्रगुणतामेते यान्ति निश्चेतनाः शराः।
न तु संसारसंतप्ता अपि वक्राः शरीरिणः॥ ५२॥
इति ध्यायन् विलोक्याग्रे तक्ष्णा शकटचक्रताम्।
20
नीतानि दृढरूपाणि पुनश्चिन्तां समाययौ॥ ५३॥
अहो नु घटनायोगाद् यान्ति कर्मण्यतां क्षणात्।
निश्चेतनानि दारूणि न चित्तानि शरीरिणाम्॥ ५४॥
इति संचिन्त्य संयातः सुधर्मनियमादरः।
वत्सलं पितरं पुत्र इवाचार्यमुवाच सः॥ ५५॥
25
आर्य एव प्रयात्वद्य पिण्डपाताय मत्कृते।
अहं तु भवतादिष्टं चिन्तयामि निजव्रतम्॥ ५६॥
इत्युपाध्यायमभ्यर्थ्य भक्तकृत्याय पण्डितः।
तस्मिन् याते तदादिष्टं विहारागारमाविशत्॥ ५७॥
तत्र यष्टीकृततनुः कृत्वा प्रतिमुखीं स्मृतिम्।
30
स प्रदध्यौ निजं धर्मं बद्धपर्यङ्कनिश्चलः॥ ५८॥
D 1045
तस्मिन् समाधिसंनद्धे वसुधा सधराधरा।
विचचालाखिलाम्भोधिजललोलदुकूलिनी॥ ५९॥

शक्रस्तं ध्याननिरतं ज्ञात्वा निर्विघ्नसिद्धये ।
दिदेश दिक्षु रक्षायै दिक्पालान् सेन्दुभास्करान् ॥ ६० ॥
भगवानथ सर्वज्ञस्तस्य सिद्धिमुपस्थिताम् ।
पाकात् कुशलमूलानां ज्ञात्वा क्षणमचिन्तयत् ॥ ६१ ॥
आसन्नार्हत्पदस्यास्य शारिपुत्रः समेत्य चेत् । 5
द्वारमुद्घाटयेन्मध्ये विघ्न एव न संशयः ॥ ६२ ॥
तस्मादागच्छतस्तस्य गत्वा स्वयमहं पुरः ।
करोमि कालहाराय नानाप्रश्नाश्रयाः कथाः ॥ ६३ ॥
इति संचिन्त्य भगवान् स्वयं तद्दिशमागतः ।
भिक्षोरागच्छतस्तस्य विलम्बं कथयाकरोत् ॥ ६४ ॥ 10
सुरप्रभावान्निःशब्दे नभोगतविहंगमे ।
लोके निर्वातदीपस्य तुल्यतां प्राप पण्डितः ॥ ६५ ॥
स्रोतःप्राप्तिफलादूर्ध्वं सकृदागाम्यवाप्य सः ।
अनागामिफलं प्राप्य ततोऽर्हत्फलमाप्तवान् ॥ ६६ ॥
ततः कथान्ते सुगते प्रयाते निजमाश्रमम् । 15 D 1047
शारिपुत्रः प्रविश्यार्कमिव शिष्यं व्यलोकयत् ॥ ६७ ॥
तं दृष्ट्वा सहसोत्तीर्णं विशीर्णभवबन्धनम् ।
सिद्धिं युगशतप्राप्यां तस्य तां प्रशशंस सः ॥ ६८ ॥
तां तस्यार्हत्पदप्राप्तिं श्रुत्वा जगति विश्रुताम् ।
भिक्षुभिर्भगवान् पृष्टस्तत्कथामब्रवीज्जिनः ॥ ६९ ॥ 20
भगवान् काश्यपः पूर्वं वाराणस्यां तथागतः ।
सह भिक्षुसहस्राणां विंशत्या पुरवासिभिः ॥ ७० ॥
श्रद्धाप्रणीतैः शुचिभिः सर्वभोग्यैर्मनोनुगैः ।
उवास पूजितः कंचित् कालं सत्त्वहितोद्यतः ॥ ७१ ॥
भिक्षुपूजापरे तत्र वर्तमाने गृहे गृहे । 25
अचिन्तयद्विनिःश्वस्य दुर्गतो नाम दुर्गतः ॥ ७२ ॥
धिङ् मामतीव दारिद्र्यात् नीचं निष्कुशलक्रियम् ।
नैकोऽपि मन्दभाग्येन येन भिक्षुर्निमन्त्रितः ॥ ७३ ॥
त्याज्या जनस्य सकलव्यवहारबाह्याः
वाक्यप्रमाणपदसंधिषु नैव योग्याः । 30

---

1 °निमृते in the original.

D 1049

नष्टक्रिया विगतकारकतर्कहीनाः
शब्दा इवार्थरहिताः पुरुषा भवन्ति ॥ ७४ ॥
इति चिन्तानलाक्रान्तं निर्न्दितं धनहीनतः।
तं समाहूय कोऽप्येत्य सुकृतप्रेरकोऽभ्यधात् ॥ ७५ ॥
5 क्षीणार्थेनापि भवता जन्मान्तरशुभाप्तये।
यथाकथंचिदेकोऽपि भिक्षुः किं न निमन्त्रितः ॥ ७६ ॥
इत्युक्तस्तेन संसक्तशल्यः पुनरिवाहतः।
भिक्षुभोजनवैकल्यात् स भृशं व्यथितोऽभवत् ॥ ७७ ॥
कथंचित्क्षुत्परिक्षामः स गत्वा श्रेष्ठिमन्दिरम्।
10 यत्नेन प्राप मूल्यांशं दारुपाटनकर्मणा ॥ ७८ ॥
कृत्वा तत्रैव तद्भार्या शुद्धतण्डुलखण्डनम्।
तदंशभृतिमूल्याप्तं भक्त्या भर्त्रे न्यवेदयत् ॥ ७९ ॥
समुद्यतस्य तस्याथ भिक्षुभोजनसिद्धये।
शुद्धये शुद्धसत्त्वस्य शक्रोऽभूदनुसाधकः ॥ ८० ॥
15 दिव्यवर्णरसामोदे भोज्ये शक्रेण साधिते।
प्रीत्या प्रच्छन्नरूपेण भिक्षुं लेभे न दुर्गतः ॥ ८१ ॥

D 1051

विभूतिमोहितैर्गूढैः पूर्वं पुरनिवासिभिः।
संघे निमन्त्रिते दुःखात् दुर्गतो मर्तुमुद्ययौ ॥ ८२ ॥
कृपया तस्य भगवान् स्वयमभ्येत्य काश्यपः।
20 शुद्धिसिद्धिं परिज्ञाय चक्रे भोज्यप्रतिग्रहम् ॥ ८३ ॥
अहोऽहं भवतो भोज्यं प्रयच्छामीति भूभुजा।
प्रयत्नात् प्रार्थितोऽप्यर्थं नैवामन्यत दुर्गतः ॥ ८४ ॥
गुणद्रविणसंपूर्णः स्यां दरिद्रप्रसादनः।
भगवन्तमथाभ्यर्च्य प्रणिधानं चकार सः ॥ ८५ ॥
25 स्वाश्रमं काश्यपे याते सुरेन्द्रे च दिवं गते।
दुर्गतस्य गृहं सर्वं दिव्यरत्नैरपूरयत् ॥ ८६ ॥
विश्वकर्मा ततस्तस्य विदधे शक्रशासनात्।
भवनं रुचिरोद्यानं रत्नस्तम्भविभूषितम् ॥ ८७ ॥
संप्राप्तविमलैश्वर्यः सहितं सर्वभिक्षुभिः।
30 सप्ताहं विभवैर्भोगैः स काश्यपमपूजयत् ॥ ८८ ॥

---

१ निर्दग्धम् in the original.

क्षुत्क्षामाङ्गनमर्थिभिः परिहृतद्वारं रुदद्दारकं
गेहं निश्चलकज्जलान्यपि स्थलीकोणस्खनन्मक्षिकम् (?)।
चुल्लीसुप्तबिडालबालमपरं यस्याभवद्रौरवं
श्रीस्तस्यैव नृपस्पृहास्पदतयाश्चर्यं न कस्य स्वयम् ॥ ८९ ॥

D 1053

तेन दानप्रभावेण सुधाशुद्धेन दुर्गतः।
जन्मान्तरे पण्डिततामवाप्यार्हत्त्वमागतः ॥ ९० ॥

5

इति पण्डितपूर्वजन्मवृत्तं
कथितं सर्वविदा गुणादरेण।
अवधार्य विशुद्धदानपुण्यं
कुशलार्हं प्रशशंस भिक्षुसंघः ॥ ९१ ॥

10

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कपिलावदानं नामैकचत्वारिंशः पल्लवः ॥



D 1055

# ४२ कनकवर्णावदानम् ।

सत्त्वेन सूर्यरुचयस्तमसि स्फुरन्ति
धर्मेण रत्ननिचया नभसः पतन्ति ।
धैर्येण सर्वविपदः प्रशमं व्रजन्ति
5 दानेन भोगसुभगाः ककुभो भवन्ति ॥ १ ॥
भगवान् सुगतः पूर्वं श्रावस्त्यां जेतकानने ।
कुशलानां प्रपन्नानां विदधे धर्मदेशनाम् ॥ २ ॥
पूर्वकल्पान्तरजने वत्सराष्टायुतायुषि ।
श्रीमान् कनकवर्णाख्यो बभूव पृथिवीपतिः ॥ ३ ॥
10 कनकाख्या पुरी तस्य शक्रस्येवामरावती ।
सर्वलोकेश्वरस्यापि वसतिर्वल्लभाभवत् ॥ ४ ॥
नायकार्हं यशःशुभ्रं चारुवृत्तगुणोचितम् ।
हृदये यः प्रजाकार्यं मुक्ताहारमिवावहत् ॥ ५ ॥
प्रजाकर्मविपाकेन पुरे परमदारुणा ।
15 अवृष्टिरभवत् तत्र सर्वभूतभयप्रदा ॥ ६ ॥
D 1057
सा धैर्यहारिणी सर्वलोकसंतापकारिणी ।
अवृष्टिः प्रययौ भूभृन्मानसायासहेतुताम् ॥ ७ ॥
कुण्ठसर्वप्रतीकारः स चिन्तास्तिमितं पुरः ।
उवाच सुचिरं ध्यात्वा प्रधानामात्यमण्डलम् ॥ ८ ॥
20 अवर्षोपनिपातोऽयं प्रजानां निष्प्रतिक्रियः ।
करोति मे यत्नकृतं निष्फलं परिपालनम् ॥ ९ ॥
निवृत्तवर्षाः ककुभो भवन्त्यभ्राश्च स्वच्छकाः ।
प्रवृत्तबाष्पवर्षाश्च प्रजाः पापेन भूभुजाम् ॥ १० ॥
त्राणं महाभयाद्राजा प्रजानां न करोति यः ।
25 तस्य स्पष्टं नटस्येव किरीटमुकुटग्रहः ॥ ११ ॥
तदा कृतयुगं लोके यदा राजा प्रजाहितः ।
तदा किल कलिर्लोके यदा राजा प्रजाहितः ॥ १२ ॥
दुर्भिक्षक्षयिता विपक्षपतनप्रत्यक्षलक्ष्ये क्षये
रोगोद्वेगसमाहिताः पृथुतरक्लेशावलीविह्वलाः ।
30 हाहाकारविशृङ्खलाः खलतरैरत्यर्दिता वल्लभैः
शोचन्त्यः प्रलयं प्रयान्त्यशरणाः पापैर्नृपाणां प्रजाः ॥ १३ ॥
तस्मात्समस्तकोषेण रक्षणीया मया प्रजाः ।
D 1059
राज्ञां प्रजापरित्राणपुण्यं रत्नमयो निधिः ॥ १४ ॥

इत्युक्त्वा सर्वलोकस्य संचिन्त्य कोष्ठकोषयोः ।
स निनाय निजं सर्वं सदा भोग्योपभोग्यताम् ॥ १५ ॥
ततः कालेन तस्योग्रदुर्भिक्षेणान्नसंचयः ।
ययौ महाव्ययादेकपुरुषाशनशेषताम् ॥ १६ ॥
तस्मिन्नवसरे व्योम्ना समभ्येत्य रविप्रभः । 5
प्रत्येकबुद्धस्तस्याथ विदधे भोजनार्थनाम् ॥ १७ ॥
नियमे संशये तस्मिन्नात्मनः प्राणधारणे ।
निर्विकल्प्य स तत्सर्वं ददौ तस्मै प्रसन्नधीः ॥ १८ ॥
स्वप्राणवृत्तिं तेनासौ कृत्वातिथ्यप्रसादिना ।
प्रययौ नभसा तस्य प्रशंसन् सत्त्वशीलताम् ॥ १९ ॥ 10
अथोद्ययौ व्योममहाद्विपस्य
नीलालिमालेव सदम्बुलेखा ।
मेघावली पश्चिमदिक्प्रलम्बा
कपोलकालागुरुमञ्जरीव ॥ २० ॥
ततः समस्तं गगनान्तराल- 15 D 1061
मुत्फुल्लनीलोत्पलकाननाभम् ।
आच्छाद्यमानं सरसैर्बभासे
भृङ्गप्रबन्धैरिव मेघसंघैः ॥ २१ ॥
ततः पपाताखिलभोज्यवृष्टि-
रिष्टा प्रजानां भुवि सप्त रात्रीः । 20
धान्यादिवृष्टिस्तदनन्तरं च
रत्नादिवृष्टिश्च ततः क्रमेण ॥ २२ ॥
इति स कनकवर्णः क्ष्मापतिर्भूपतीनां
मुकुटमणिरिवोच्चैर्भ्राजमानः प्रजानाम् ।
अकृत सुकृतसंपत्प्रीणितः प्राणरक्षां 25
प्रभवति हि परार्थे सज्जनानां प्रभावः ॥ २३ ॥
भूपतिः कनकवर्ण एष यः
सोऽहमेव वपुषात्मनाधुना ।
इत्युदीर्य भगवान् जिनः सतां
धीमतां व्यधित धर्मदेशनाम् ॥ २४ ॥
इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कनकवर्णावदानं नाम द्विचत्वारिंशः पल्लवः ॥

D 1063

# ४३ हिरण्यपाण्यवदानम् ।

सर्वोपकारप्रणयी प्रभावः
सर्वोपजीव्या महती विभूतिः ।
पुण्याङ्कुरार्हस्य फलं विशाल-
5 फलार्हमेतत् प्रथमं हि पुष्पम् ॥ १ ॥
जिने जेतवनारामविहाराभिगते पुरा ।
श्रावस्त्यां देवसेनाख्यः श्रीमानासीद्गृहाधिपः ॥ २ ॥
हिरण्यपाणिस्तस्याभूत्पुत्रः सत्पुत्रमानिनः ।
यस्य हेममयं जातं पाणिद्वितयमद्भुतम् ॥ ३ ॥
10 रूप्यलक्षद्वयं तस्य प्रातः प्रातः करद्वये ।
प्रादुरासीत्स तेनाभूदर्थिनां कल्पपादपः ॥ ४ ॥
तस्य व्यक्तविवेकेन परिपाकेण भूयसा ।
काले कुशलमूलानां जिने भक्तिरजायत ॥ ५ ॥
अथ जेतवनं गत्वा भगवन्तं तथागतम् ।
15 स दृष्ट्वा विदधे तस्य सानन्दः पादवन्दनम् ॥ ६ ॥
D 1065 भगवानपि संसारतापप्रशमचन्द्रिकाम् ।
सुधासखीं दिदेशास्मै दृशं कुशलदृतिकाम् ॥ ७ ॥
स शास्तुर्दर्शनेनैव संमोहतिमिरोज्झितः ।
बभासे सूर्यकिरणप्रबुद्धकमलोपमः ॥ ८ ॥
20 भगवान् विदधे तस्य ततः सद्धर्मदेशनाम् ।
यया धर्ममयं चक्षुरक्षुण्णालोकमुद्ययौ ॥ ९ ॥
प्राक्पुण्यपरिणामेन जातवैराग्यवासनः ।
प्रणम्य विमलप्रज्ञः स सर्वज्ञमभाषत ॥ १० ॥
शरण्य शरणाप्तस्य भगवन् भवहारिणी ।
25 अशेषक्लेशनाशाय प्रव्रज्या मे विधीयताम् ॥ ११ ॥
चपलं प्राणिनामायुस्ततोऽपि नवयौवनम् ।
विद्युद्विलासचपलास्ततोऽप्येता विभूतयः ॥ १२ ॥
इति तस्य ब्रुवाणस्य सुगतानुग्रहोदिता ।
पपात वीतरजसः प्रव्रज्या वपुषि स्वयम् ॥ १३ ॥
30 रक्तचीवरसुव्यक्तां बिभ्राणः स विरक्तताम् ।
पात्रग्रहेण तत्याज पुनः संसारपात्रताम् ॥ १४ ॥

D 1067

तस्य तामद्भुतां सिद्धिं प्रत्यक्षं वीक्ष्य भिक्षवः ।
तत्पूर्ववृत्तं पप्रच्छुर्भगवन्तं स चाब्रवीत् ॥ १५ ॥

वाराणस्यां पुरा राजा कृकिर्नाम तथागते ।
काश्यपाख्ये भगवति प्रयाति परिनिर्वृतिम् ॥ १६ ॥

शरीरमस्य सत्कृत्य स्तूपं रत्नमयं व्यधात् । 5
स्वर्गावगाहनप्रौढं मूर्तं पुण्यमिवोन्नतम् ॥ १७ ॥

तस्मिन्नारोप्यमाणायां यष्ट्यां पूजापरिग्रहे ।
कितवः कन्दलो नाम निदधे रूपकद्वयम् ॥ १८ ॥

चित्तप्रसादशुद्धेन तेन पुण्येन भूयसा ।
हिरण्यपाणिः प्राप्तोऽद्य महतां स्पृहणीयताम् ॥ १९ ॥ 10

भवति विभवस्त्यागोदारः समग्रगुणो भुवि
प्रसरति यशः शुक्लं लोके सुधांशुसहोदरम् ।
परिणतिपदे पुण्यं धत्ते यदल्पमनल्पतां
विमलमनसः श्रद्धाशुद्धं तदेव विजृम्भितम् ॥ २० ॥

इति प्रभावं कथितं जिनेन 15 D 1069
पुण्यानुभावस्य हिरण्यपाणेः ।
श्रुत्वैव हर्षादरविस्मयानां
स भिक्षुसंघः प्रणयी बभूव ॥ २१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
हिरण्यपाण्यवदानं त्रिचत्वारिंशः पल्लवः ॥ 20

D 1071

# ४४ अजातशत्रुपितृद्रोहावदानम् ।

दुर्जनदुःसहविषधरभीषणतरतिमिरपतितानाम् ।
आलम्बनजननं भवभयहरणं जिनस्मरणम् ॥ १ ॥
पुरे राजगृहाभिख्ये भगवान् भूभृतः पुरा ।
5 कटके गृध्रकूटस्य विजहार तथागतः ॥ २ ॥
तस्मिन्नवसरे राजा बिम्बिसारः सुतप्रियः ।
अजातशत्रुणा तत्र पुत्रेण क्रूरकारिणा ॥ ३ ॥
सुहृदः पावकस्येव देवदत्तस्य संमतम् ।
घोरान्धबन्धनागारं निःसंचारं प्रवेशितः ॥ ४ ॥
10 पत्न्या प्रवेशितं तस्य बन्धने गूढभोजनम् ।
ज्ञात्वा स तत्क्षयाकाङ्क्षी क्षुत्क्षामस्य न्यवारयत् ॥ ५ ॥
रूक्षः कृशोऽतिमलिनः सोऽभवत् पृथिवीपतिः ।
अकालकालमेघार्तः कृष्णपक्ष इवोडुपः ॥ ६ ॥
D 1073 संकीर्णवाससंतापात्प्रायः पेशलचेतसाम् ।
15 करोत्यालिङ्गनं प्रौढा गाढप्रणयिनी विपत् ॥ ७ ॥
स समुद्दिश्य शोकार्तः सुगताध्युषितां दिशम् ।
कृताञ्जलिर्नतशिराः क्षामस्वरमभाषत ॥ ८ ॥
नमस्तुभ्यं भगवते महार्हाय महार्हते ।
दीनोद्धरणसंनद्धसम्यक्संबोधिचेतसे ॥ ९ ॥
20 नमस्ते घोरसंसारमकराकरसेतवे ।
जिनाय जनताजन्मक्लेशप्रशमहेतवे ॥ १० ॥
नमो नित्यप्रबुद्धाय सर्वसत्त्वैकबन्धवे ।
विशुद्धधाम्ने बुद्धाय करुणामृतसिन्धवे ॥ ११ ॥
इति भक्तिसुधां सिक्त्वा सुगतश्रवणोचिताम् ।
25 पुण्यपुष्पप्रसविनीं स चक्रे स्तुतिमञ्जरीम् ॥ १२ ॥
सर्वज्ञस्तस्य विज्ञाय कायक्लेशमयीं दशाम् ।
बन्धनागारविवरालोकैराप्यायनं व्यधात् ॥ १३ ॥
अजातशत्रुस्तद्वृत्तं ज्ञात्वा शङ्काकुलः पितुः ।
न्यवारयद्बन्धगृहे सुसूक्ष्मविवराण्यपि ॥ १४ ॥
30 ततस्तस्य तदादेशात् चक्रुर्बन्धनरक्षिणः ।
क्षुरेण गाढबद्धस्य पादयोस्तद्विकर्तनम् ॥ १५ ॥

स तीव्रवैशसक्लेशव्यथितः पार्थिवः परम् ।
नमो बुद्धाय बुद्धायेत्यार्तसंक्रन्दनं व्यधात् ॥ १६ ॥
भगवानथ सर्वज्ञः पुरः प्रत्यक्षतां गतः ।
शक्रदत्तासनासीनः कारुण्यात्तमभाषत ॥ १७ ॥
राजन् किं क्रियते क्रूरकर्मणां गतिरीदृशी । 5
शुभाशुभसमुद्भूतं न भुक्तं क्षीयते फलम् ॥ १८ ॥
रागद्वेषविषासक्ते नानाव्यसनदुःसहे ।
एवंविधैव निःसारे संसारे दुःखसारता ॥ १९ ॥
संक्लेशकलिले काले विपत्संपद्विसंकटे ।
धैर्यमेव परित्राणं वैराग्यं च निराकुलम् ॥ २० ॥ 10
संसारघोरगहनान्तरवर्धमानैः
दुःखानलव्यतिकरप्रसृतैरसिक्ताः ।
धूमोद्गमैरिव पुनः सुकृतोचितानां
बाष्पाम्बुबिन्दुकलिला न दृशो भवन्ति ॥ २१ ॥
भजस्व धैर्यं दुःखेऽस्मिन् भोगाशां त्यज भूपते । 15 D 1077
परिणामविरोधिन्यः सर्वाः संसारवृत्तयः ॥ २२ ॥
अधुनैव तवासन्ना देहान्ते कुशलस्थितिः ।
इत्युक्त्वा तं समाश्वस्य भगवान् स्वपदं ययौ ॥ २३ ॥
बिम्बिसारोऽपि देहान्ते तस्मिन्नेव क्षणे दिवि ।
अभूज्जिनर्षभो नाम श्रीमान् वैश्रवणात्मजः ॥ २४ ॥ 20
अजातशत्रुर्जनकं ज्ञात्वा विगतजीवितम् ।
शरीरमस्य सत्कृत्य निनिन्द निजदुष्कृतम् ॥ २५ ॥
तस्यातितीव्रपापार्तं चित्तं दुर्वृत्तदूषितम् ।
पश्चात्तापाग्निपतनं प्रायश्चित्तमिवाकरोत् ॥ २६ ॥
सोऽवदद्धत संमोहादैश्वर्यमदलुब्धधीः । 25
दुर्वृत्तपातकश्वभ्रे पतितोऽहमधोमुखः ॥ २७ ॥
श्रुतप्रज्ञादरिद्राणां निजनिद्रासुखापहा ।
चिन्ता दहति गात्राणि खलमश्रानुवर्तिनाम् ॥ २८ ॥
पतितस्यावसन्नस्य पापपङ्के प्रमादिनः ।
अनालम्बस्य संत्राणं जिनसंस्मरणं मम ॥ २९ ॥ 30
इति संचिन्त्य सुचिरं स गत्वा सुगतान्तिकम् । D 1079
जुगुप्समानः कुकृतात्परं संकोचमाययौ ॥ ३० ॥

तत्रापवित्रमात्मानं मन्यमानः सपत्रपः ।
प्रणनाम जिनं दूरात् पापस्पर्शभयादिव ॥ ३१ ॥

साश्रुनेत्रः परित्राणं स सर्वज्ञं व्यजिज्ञपत् ।
सकम्पः कायसंसक्तं विधुन्वन्निव दुष्कृतम् ॥ ३२ ॥

5 भगवन् कृतपापोऽहमासन्ननरकानलः ।
उत्तप्तः करुणासिन्धुं त्वामेव शरणं गतः ॥ ३३ ॥

मामियं शोणपर्यन्ता दृष्टिस्ते पुष्करप्रभा ।
पुण्या स्पृशतु गङ्गेव मलप्रक्षालनक्षमा ॥ ३४ ॥

खलमन्त्रप्रवृत्तेन दुर्वृत्तेन प्रमादिना ।
10 मया विभवलुब्धेन पापेन निहतः पिता ॥ ३५ ॥

इति प्रलापिनस्तस्य वचः श्रुत्वा तथागतः ।
ससर्ज तत्पापरजःशुद्ध्यै पुण्यसरस्वतीम् ॥ ३६ ॥

राजन्न चिन्तितः पापः खलेनेव स्वकर्मणा ।
प्रेरितस्त्वं पितृवधे पतितः पापसंकटे ॥ ३७ ॥

D 1081 15 दुःखं तत्तेन भोक्तव्यं प्राप्तव्यं किल्बिषं त्वया ।
तव तस्य च भूपाल तुल्यैषा भवितव्यता ॥ ३८ ॥

निजकण्ठसमुत्कीर्णा ललाटतटवर्तिनी ।
शिलाशकलले्खेव निश्चला नियतिर्नृणाम् ॥ ३९ ॥

कुर्वता कलुषं कर्म खलप्रेरणया त्वया ।
20 प्रत्यासन्नामृतश्रेयः स्वहस्तेन तिरस्कृतम् ॥ ४० ॥

अद्यापि यदि ते पापं हन्तुं प्राप्तुं च संपदम् ।
वाञ्छास्ति तत्कुरु मतिं पुण्ये पापशमात्मनि ॥ ४१ ॥

दीपवृत्त्या सुखं सूते जीवयत्युज्ज्वलं यशः ।
अमृतस्य प्रकारोऽयं सुवृत्तः सत्समागमः ॥ ४२ ॥

25 पश्चात्तापाग्निपातेन साधुना संगमेन च ।
संकीर्तनेन दानेन पापं नश्यति देहिनाम् ॥ ४३ ॥

पात्रं पवित्रयति नैव गुणान् क्षिणोति
स्नेहं न संहरति नैव मलं प्रसूते ।
दोषावसानरुचिरश्चलतां न धत्ते
30 सत्संगमः सुकृतसद्मनि कोऽपि दीपः ॥ ४४ ॥

गुणिगणविपद्दीक्षादक्षः क्षपाक्षणसंनिभः  D 1083
सकलनयनव्यापाराणां जनेषु निरोधकः ।
असमविषमायासावासः प्रकाशपरिक्षयात्
सृजति हि महामोहाद्गाढं तमः खलसंगमः ॥ ४५ ॥
प्रत्येकबुद्धस्त्वं राजन् कालेन क्षीणकिल्बिषः ।  5
भविष्यसि विवेकेन कृतालोकः शनैः शनैः ॥ ४६ ॥
इति तस्य दयाश्वासं चकार भगवान् जिनः ।
पतितेष्वधिकं सन्तः करुणास्निग्धलोचनाः ॥ ४७ ॥
ततः प्रणम्य सुगतं प्रयातः स्वपदं नृपः ।
महतः पापभारस्य विवेद लघुतामिव ॥ ४८ ॥  10
तस्मिन् प्रयाते सर्वज्ञः पृष्टस्तत्कर्म कौतुकात् ।
भिक्षुभिः क्षितिपालस्य पूर्ववृत्तमभाषत ॥ ४९ ॥
वाराणस्यां निरायासविलासव्यवसायिनः ।
चत्वारः श्रेष्ठितनया बभूवुः श्रीविशृङ्खलाः ॥ ५० ॥
ते कदाचित् सुखक्षीबा मिथः कलिकथास्थिताः ।  15
प्रत्येकबुद्धमायान्तं ददृशुर्यौवनोद्धताः ॥ ५१ ॥
तं दृष्ट्वा जातविद्वेषाः शमसंयमनिन्दकाः ।  D 1085
ज्येष्ठः सुन्दरको नाम भ्रातॄन् प्रोवाच सस्मितः ॥ ५२ ॥
अयं चीवरपात्राङ्कः पानेन गतजीवितः ।
क्षीबो विधीयते भिक्षुरित्ययं मे मनोरथः ॥ ५३ ॥  20
इत्युक्ते चापलात् तेन द्वितीयः कुन्दराभिधः ।
उवाच भिक्षुं क्षिप्त्वेमं हन्तुमिच्छाम्यहं जले ॥ ५४ ॥
ततस्तृतीयोऽप्यवदत् पापः सुन्दरकाभिधः (?) ।
एष भिक्षुर्वरं तस्यां वीथ्यां निक्षिप्यते जवात् ॥ ५५ ॥
चतुर्थोऽप्यवदत् क्रूरमतिः कन्दरकाभिधः ।  25
भिक्षोः क्षुरेण क्रियते निश्चर्म चरणद्वयम् ॥ ५६ ॥
इति तेषां ब्रुवाणानां कलुषोऽभून्मनोरथः ।
येन जन्मान्तरे प्रापुस्ते स्वेच्छासदृशं फलम् ॥ ५७ ॥
धनं पश्यति लोभान्धः क्रोधान्धः शत्रुमेव च ।
कामान्धः कामिनीमेव दर्पान्धस्तु न किंचन ॥ ५८ ॥  30
धनोद्भूतविकाराणां प्रयात्यनियतात्मनाम् ।
मदमन्दविचाराणामानन्दः क्लेशबन्धताम् ॥ ५९ ॥

क्रुध्यन्त्यकारणमकारणमुत्पतन्ति
स्निह्यन्त्यकारणमकारणमामनन्ति।
D 1087 मोहाहताः खलु हिताहितनिर्विचाराः
तृप्ताः परं नृपशवः समदा भवन्ति॥ ६० ॥

5 ज्येष्ठः श्रेष्ठिसुतः पापात्स एवापरजन्मनि।
शार्यिानाभिधः शाक्यः पीत्वा मद्यं व्यपद्यत॥ ६१ ॥
द्वितीयोऽपि महान्नाम शाक्यस्तोये क्षयं गतः।
तृतीयश्च स्वपुत्रेण व्यस्तो राजा प्रसेनजित्॥ ६२ ॥

बिम्बिसारश्चतुर्थोऽसौ धृतः पुत्रेण बन्धने।
10 प्रयुक्तं धनवत्कर्म भुज्यते हि सवृद्धिकम्॥ ६३ ॥

मोहाहतैरिह हि सद्भिरसद्भिरेषां
निःशर्म कर्म सहसैव विडम्ब्यते यत्।
बाष्पाम्बुपूर्णनयनैरनयोपनीत-
मस्तोकशोकविवशैरनुभूयतेऽत्र॥ ६४ ॥

15 सुगतकथितमेतत् पूर्वजन्मप्रवृत्तं
विषविषमविपाकं बिम्बिसारस्य वृत्तम्।
विबुधसदसि भिक्षुः स्पष्टमाकर्ण्य मेने
व्यसनशतनिमित्तं दूषितं चित्तमेव॥ ६५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलताया-
20 मजातशत्रुपितृद्रोहावदानं नाम चतुश्चत्वारिंशः पल्लवः॥



## ४५ कृतज्ञावदानम् ।

D 1

अन्धीकृतोऽपि स्वदृशा तमसा खलेन
लक्ष्मीविहारविरहे विनिपातितोऽपि ।
कष्टां दशामिव निशामतिवाह्य पद्मः
स्वामेव संपदमुपैति पुनर्गुणाढ्यः ॥ १ ॥ 5

श्रावस्त्यां सुगते जेतवनोद्यानविहारिणि ।
देवदत्तः परिद्वेषव्याधिव्याप्तो व्यचिन्तयत् ॥ २ ॥

तुल्यः समानो मे भ्राता मनुष्यः शाक्यवंशजः ।
प्राप्तः पुण्यप्रभावेण त्रिजगत्पूज्यतां जिनः ॥ ३ ॥

जीवितोद्धृत्तये तस्मात् तस्य यत्नं करोम्यहम् । 10
न ह्यनस्तंगते भानौ परतेजः प्रकाशते ॥ ४ ॥

विज्ञानेनानुभावेन विद्यया तपसा श्रिया ।
परप्रकर्षं सहते न हि मानोन्नतं मनः ॥ ५ ॥

विषं निजनखाग्रेषु धृत्वा तस्य प्रणामकृत् ।
संचारयामि वपुषि नेदिष्ठः पादपीडनैः ॥ ६ ॥ 15

इति संचिन्त्य कलुषं विद्वेषविवशः खलः । D 1
स तिष्यप्रमुखानेत्य बान्धवानिदमभ्यधात् ॥ ७ ॥

क्रूरः कृतापकारोऽहं सुगतस्याद्य पादयोः ।
सरलस्य प्रसादाय पतामि गुरुपातकः ॥ ८ ॥

इति ब्रुवाणस्तैः सर्वैः सुदत्तानुमतैः सह । 20
जिनं जेतवनासीनं द्रष्टुं दुष्टमतिर्ययौ ॥ ९ ॥

भगवन्तं विलोक्याभूत्तत्र यावत्स सर्वशः ।
तावद्दग्धोऽहमित्युच्चैरुत्क्षिप्तचरणोऽवदत् ॥ १० ॥

हिंसासंकल्पपापेन वज्रेणेव समाहतः ।
सशरीरं क्षणे तस्मिन् नरकाग्नौ पपात सः ॥ ११ ॥ 25

सर्वज्ञः सहसा दृष्ट्वा तं घोरनरके च्युतम् ।
उवाच श्रुततद्वृत्तविस्मितां भिक्षुसंसदम् ॥ १२ ॥

एष किल्बिषदोषेण पतितः क्लेशसंकटे ।
तीव्रं हि तिमिरं सूते सर्वथा मलिनं मनः ॥ १३ ॥

नगर्यामतिघोषायां रतिसोमस्य भूपतेः । 30
कृतज्ञश्चाकृतज्ञश्च पुरा पुत्रौ बभूवतुः ॥ १४ ॥

D 1093 कृतज्ञः कृपयार्थिभ्यः कल्पवृक्ष इवानिशम् ।
निजं विमुच्य प्रददौ रत्नाभरणसंचयम् ॥ १५ ॥
अविभक्तं पितुर्द्रव्यं सर्वं साधारणं तयोः ।
वदन्नित्यकृतज्ञोऽपि तेन दत्तं जहार तत् ॥ १६ ॥
5 ततः श्लाघ्याय वचसा मतिघोषाभिधो नृपः ।
जनकल्याणिकां नाम कृतज्ञाय सुतां ददौ ॥ १७ ॥
स्वयमेवार्जितं वित्तं दातुं जातमनोरथः ।
आरुरोह प्रवहणं कृतज्ञोऽथ महोदधौ ॥ १८ ॥
रत्नार्जनोद्यतं यान्तं तं द्वेषस्पर्धितादरः ।
10 तमेवानुययौ लोभादकृतज्ञोऽपि दुर्जनः ॥ १९ ॥
संपूर्णं वणिजां सार्थैः ततः प्रवहणं शनैः ।
आनुकूल्येन मरुतामवाप द्वीपमीप्सितम् ॥ २० ॥
तस्मिन् प्रतिनिवृत्तेऽथ स्वदेशं गन्तुमुद्यते ।
रत्नराशिभिरापूर्णसंकल्पे वणिजां गणे ॥ २१ ॥
15 कृतज्ञः पृथिवीमूल्यं रत्नानां शतपञ्चकम् ।
आदाय ग्रन्थिपट्टेन बबन्धांशुकपल्लवे ॥ २२ ॥
D 1095 रत्नभारपरिश्रान्तं ततः प्रवहणं महत् ।
अभज्यत महावातैरैश्वर्यमिव दुर्नयैः ॥ २३ ॥
ततः फलकवाहस्तं कृतज्ञः प्राप्तजीवितः ।
20 अकृतज्ञं निमज्जन्तं पृष्ठेन समतारयत् ॥ २४ ॥
तारितः कृपया भ्रात्रा स घोरमकराकरात् ।
अपश्यदञ्चले तस्य रुचिरं रत्नसंचयम् ॥ २५ ॥
स तस्य रत्नलोभेन द्वेषेण च वशीकृतः ।
समुद्रतीरे श्रान्तस्य भ्रातुर्द्रोहमचिन्तयत् ॥ २६ ॥
25 तस्य निद्रानिलीनस्य शस्त्रेणोत्पाट्य लोचनम् ।
गृहीत्वा रत्ननिचयं कृतघ्नः स ययौ जवात् ॥ २७ ॥
क्रूरेणाङ्गीकृतस्तेन राहुणेव दिवाकरः ।
लोकोपकारविहतो दुःखितः सोऽप्यचिन्तयत् ॥ २८ ॥
अधुनार्थिप्रदानेऽर्थे व्यर्थीभूते मनोरथे ।
30 किं ममान्धस्य वन्ध्येन जीवितेन प्रयोजनम् ॥ २९ ॥
अप्राप्तविषयाः प्राणा न प्रयान्ति यदि क्षयम् ।
तदसंगतयो योगाः क्लेशयन्ति क्षयक्षमाः ॥ ३० ॥

क्षीणे धने जने द्वेषमानवैकल्यविह्वले । D 1097
पूज्ये पुंसां समेनैव शेषस्य च यशोऽव्ययः ॥ ३१ ॥
इति संचिन्त्य स शनैर्व्रजन् सार्थेन तारितः ।
अवाप नगरोपान्तं मतिघोषस्य भूपतेः ॥ ३२ ॥
गोपालभवने तत्र स कंचित्कालमास्थितः । 5
उद्यानयात्रागतया राजपुत्र्या विलोकितः ॥ ३३ ॥
तं दृष्ट्वान्धमपि व्यक्तराजलक्षणलक्षितम् ।
प्राग्जन्मप्रेमबन्धेन साभिलाषा बभूव सा ॥ ३४ ॥
ततः स्वयंवरविधिं सा कृत्वा शासनात्पितुः ।
राज्ञां मध्ये च मान्यानां वव्रे विगतलोचनम् ॥ ३५ ॥ 10
भूमिपालान् परित्यज्य वृतोऽन्धः पापया त्वया ।
उक्त्वेति पित्रा कोपेन निरस्ता शुशुभे न सा ॥ ३६ ॥
उद्याने सा निधायान्धं यत्नेनाहृत्य भोजनम् ।
सदा तस्मै ददौ प्रेमप्रणयोपचितादरा ॥ ३७ ॥
कदाचित्तां चिरायातामाहारावसरे गते । 15
उवाच राजतनयः परं म्लानाननः क्षुधा ॥ ३८ ॥
असमीक्षितकारिण्या त्वया केवलचापलात् । D 1099
वृतोऽहमन्धः संत्यज्य नृपान् विपुललोचनान् ॥ ३९ ॥
पश्चात्तापेन नूनं त्वं मयि पर्युषितादरा ।
अधुना ताण्डवं प्रेम्णः प्रदर्शयितुमुद्यता ॥ ४० ॥ 20
अन्धसंदर्शनोद्विग्ना सुरूपालोकनोन्मुखी ।
आहारकालेऽतिक्रान्ते चिरेणेह त्वमागता ॥ ४१ ॥
इत्युक्ता परुषं तेन कम्पमाना लतेव सा ।
उवाच गुञ्जन्मधुपश्रेणीमधुरवादिनी ॥ ४२ ॥
नाथ मिथ्यैव मे शङ्कां न कोपात्कर्तुमर्हसि । 25
वाग्बाणपातं सहते न चेतः प्रीतिपेशलम् ॥ ४३ ॥
त्वामेव देवतां जाने यद्यहं शुद्धमानसा ।
तेन सत्येन सालोकमेकं नयनमस्तु ते ॥ ४४ ॥
इत्युक्ते सत्त्वशालिन्या तया तस्याशु लोचनम् ।
उत्फुल्लकमलाकारमेकं विमलतां ययौ ॥ ४५ ॥ 30
तस्याः सत्यप्रभावेण संजातपृथुविस्मयः ।
सत्यप्रत्ययसोत्साहः कृतज्ञस्तामभाषत ॥ ४६ ॥

D 1101

भ्रात्रा तेनाकृतज्ञेन पाटिते लोचनद्वये ।
तस्मिन् विकारो वैरं वा न निकारोऽप्यभून्मम ॥ ४७ ॥

स्वच्छं तेनास्तु सत्येन द्वितीयमपि लोचनम् ।
इत्युक्ते तत्क्षणेनास्य स्पष्टं चक्षुरलक्ष्यत ॥ ४८ ॥

5 ततः कथितवृत्तान्तं कृतज्ञमुचितं पतिम् ।
प्रहृष्टा जनकल्याणी गत्वा पित्रे न्यवेदयत् ॥ ४९ ॥

पूजितः श्वशुरेणाथ स रत्नगजवाजिभिः ।
श्रियेव कान्तया सार्धं जगाम नगरं पितुः ॥ ५० ॥

स तत्र पित्रा हृष्टेन चरणालीनशेखरः ।
10 जनानुरागसुभगे यौवराज्ये पदे धृतः ॥ ५१ ॥

अकृतज्ञोऽपि निर्लज्जस्तं प्रसादयितुं शठः ।
विचिन्त्य पादपतने तस्य द्रोहं समाययौ ॥ ५२ ॥

उन्मना हन्तुमायातः स तं कुटिलचेष्टितः ।
हा हा दग्धोऽस्मि दग्धोऽस्मीत्युक्त्वैव नरकेऽपतत् ॥ ५३ ॥

15 स एव देवदत्तोऽसौ कृतज्ञोऽप्यहमेव च ।
जन्मान्तरानुबन्धेन द्वेषोऽस्य न निवर्तते ॥ ५४ ॥

सर्वज्ञभाषितमिति प्रचुरोपकारं
तद्देवदत्तचरितं परितापकारि ।
जन्मान्तरोपचितपातकसंनिबद्धं
20 श्रुत्वा बभूव विमना इव भिक्षुसंघः ॥ ५५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कृतज्ञावदानं पञ्चचत्वारिंशः पल्लवः ॥



# ४६ शालिस्तम्बावदानम् ।



दानैकतानमनसां पृथुसत्त्वभाजा-
मुत्साहमानगुणभोगविभूतिपूतः ।
प्राक्पुण्यसंचयमयः कुशलाभिधानः
काले फलत्यविकलः किल कल्पवृक्षः ॥ १ ॥ 5

कोसलेन्द्रस्य भूभर्तुः श्रावस्त्यां भगवान् पुरा ।
विजहार वरोद्याने सह भिक्षुगणैर्जिनः ॥ २ ॥

आदिमध्यान्तकल्याणं भवाभिभवसाधकम् ।
संदिदेश स सद्धर्मं त्रैलोक्यकुशलोद्यतः ॥ ३ ॥

अत्रान्तरे नागराजपुत्राः सागरवासिनः । 10
चत्वारः सुगतोदीर्णं सद्धर्मं परमामृतम् ॥ ४ ॥

अभिरत्याख्यया स्वस्रा प्रेरिताः श्रोतुमागताः ।
ते बलातिबल-श्वास-महाश्वासाभिधाः समम् ॥ ५ ॥

क्रकुच्छन्दस्य सुधियः काले भगवतः पुरा ।
कनकाख्यस्य च मुनेः काश्यपस्य च यत्नतः ॥ ६ ॥ 15

आजग्मुः श्रीसुखासक्ताः श्रोतुमप्रार्थिता अपि । D 1107
तत्पुण्यपरिणामेन प्राप्ताः शाक्यमुनेः पुरा ॥ ७ ॥

तेषु प्रणम्य शास्तारं चरणालीनमौलिषु ।
विधाय मानुषं रूपमुपविष्टेषु पर्षदि ॥ ८ ॥

सद्धर्ममाययौ श्रोतुं कोसलेन्द्रः प्रसेनजित् । 20
लक्ष्मीमन्दस्मितच्छायं निवार्य च्छत्रचामरम् ॥ ९ ॥

शास्तुः पादप्रणामाय विशतस्तस्य संसदि ।
अवकाशं नताश्चक्रुः सर्वे नृपतिगौरवात् ॥ १० ॥

तस्याभिनन्द्यमानस्य वर्णाश्रमगुरोर्नृभिः ।
नागराजसुताश्चक्रुर्नावकाशं न सत्कृतम् ॥ ११ ॥ 25

तेषां तदपमानेन जिनस्य विनयेन च ।
मानिनो नृपतेरन्तर्मन्युः प्रच्छन्नतां ययौ ॥ १२ ॥

स संज्ञया समादिश्य निजं परिजनं पुरः ।
गमने निग्रहं तेषां निर्विकार इवाभवत् ॥ १३ ॥

भगवानपि सर्वज्ञस्तस्य ज्ञात्वा च निश्चयम् । 30
धर्मोपदेशपर्यन्ते प्रोवाच रचितस्मितः ॥ १४ ॥

D 1109 न विद्वेषरजःपूर्णमनोमलिनदर्पणे।
भाति धर्मोपदेशस्य प्रतिबिम्बप्रतिग्रहः॥ १५॥

अविहितसमतानां कोपमोहाहतानां
कृशमपि कुशलांशं नोपदेशः करोति।
5 न हि बहुतरदोषे शुद्धिहीने शरीरे
व्रजति हतमतीनां भेषजं भेषजत्वम्॥ १६॥

इति युक्तं भगवता हितमुक्तं महीपतिः।
श्रुत्वापि न च तत्याज नागेषु विमनस्कताम्॥ १७॥

भगवन्तं प्रणम्याथ प्रयाते स्वपदं नृपे।
10 नागास्तत्सैनिकाबद्धमार्गे व्योमपथा ययुः॥ १८॥

ते विचिन्त्य स्वभवने क्ष्मासंक्षयकृतक्षणाः।
घोरनिर्घातमेघौघग्रस्तलोकाः समाययुः॥ १९॥

तेषां व्यवसितं ज्ञात्वा सर्वज्ञः पक्षपातिनाम्।
रक्षाक्षमं क्षितिपतेर्मौद्गल्यायनमादिशत्॥ २०॥

15 अथ नागगणोत्सृष्टा वज्रवृष्टिर्महीपतौ।
भूभर्तुस्तत्प्रभावेण प्रययौ पुष्पवृष्टिताम्॥ २१॥

D 1111 शस्त्रास्त्रवृष्टिर्निबिडक्षिप्ता तैरथ दुःसहा।
मौद्गल्यायनसंकल्पाद्ययौ राजार्हभोज्यताम्॥ २२॥

तत्प्रभावात्प्रयातेषु भग्नोत्साहेषु भोगिषु।
20 गत्वा ववन्दे सुगतं नृपतिर्वीतविप्लवः॥ २३॥

स मौद्गल्यायनस्यार्घ्यमुचितं भोगसंपदा।
भक्तिसंस्कारसुभगं विदधे जिनशासनात्॥ २४॥

ततः स्वर्गोचितां भिक्षुर्विभूतिं वीक्ष्य भूपतेः।
पप्रच्छ कौतुकवशात् सर्वज्ञं रचिताञ्जलिः॥ २५॥

25 भगवन् कस्य पुण्यस्य प्रभावेण प्रसेनजित्।
सर्वैर्विराजितं भोगैः प्राज्यं राज्यमवाप्तवान्॥ २६॥

इक्षुस्तम्बवदेतस्य शालिस्तम्बश्च जायते।
दिव्यपानान्नसंपत्तिः फलं तत्कस्य कर्मणः॥ २७॥

इति पृष्टः प्रणयिना भिक्षुणा भगवान् जिनः।
30 उवाच श्रूयतां राज्ञः कारणं भोगसंपदाम्॥ २८॥

कोसलेऽस्मिन् जनपदे खण्डाढ्यगुडकर्षकः ।
ददौ प्रत्येकबुद्धाय पूर्वमिक्षुरसौदनम् ॥ २९ ॥

भुक्तेनेक्षुरसान्नेन तेन वातगदार्दितः । D 1113
प्रत्येकबुद्धस्तत्पुण्यैः प्रसन्नः सुस्थतां ययौ ॥ ३० ॥

राजा प्रसेनजित् सोऽयं पुण्यवान् गुडकर्षकः । 5
तेन पुण्यप्रभावेण भोगभागी विराजते ॥ ३१ ॥

उपकारः कृतज्ञानां निकारः क्रूरचेतसाम् ।
सुकृतांशश्च साधूनामल्पोऽप्यायात्यनल्पताम् ॥ ३२ ॥

सर्वज्ञेनेति कथिते पूर्वपुण्ये महीपतेः ।
बभूव सुकृतोत्कर्षे भिक्षुराश्चर्यनिश्चलः ॥ ३३ ॥ 10

अथ भक्त्या भगवतः कृत्वा राजाधिवासनाम् ।
उपनिन्ये स्वयं तां तां सुरार्हां भोगसंपदम् ॥ ३४ ॥

परोपचारै रुचिरैरर्चिते काञ्चनासने ।
सुखोपविष्टं प्रोवाच नरनाथस्तथागतम् ॥ ३५ ॥

भगवन् मे भवद्भक्तिविभक्तसुकृतश्रियः । 15
चयः कुशलमूलानामनिर्मुक्त्यै भविष्यति ॥ ३६ ॥

विनयात्पार्थिवेनेति पूर्णपुण्याभिमानिना ।
पृष्टः स्मितसितालोकं जगाद सुगतः सृजन् ॥ ३७ ॥

राजन् संसारमार्गोऽयमनादिनिधनोद्भवः । D 1115
हेलालङ्घ्यः कथं पुंसामप्राप्य क्लेशसंक्षयम् ॥ ३८ ॥ 20

चिरपरिचितैश्चक्रावर्तैरसक्तगतागतिः
प्रकृतिगहनः संसारोऽयं सुखेन न लङ्घ्यते ।
असति हि विना योगाभ्यासं क्षये किल कर्मणां
स्फुटफलततिर्धर्मोऽप्यस्मिन्निबन्धनतां गतः ॥ ३९ ॥

सर्वतो विनिवृत्तस्य दानाभ्यासेन भूयसा । 25
ममापि धर्मसंसारो बभूव भूरिजन्मकृत् ॥ ४० ॥

धनिको नाम धनवान् वाराणस्यामभूत्पुरा ।
तापापहः फलस्फीतश्छायावृक्ष इवार्थिनाम् ॥ ४१ ॥

दुर्भिक्षक्षपिते लोके विषमक्लेशविह्वले ।
भोज्यं प्रत्येकबुद्धानां सोऽर्थितः पञ्चभिः शतैः ॥ ४२ ॥ 30

स तेषां परभोगार्हं दुर्भिक्षावधि भोजनम्।
अकल्पयदनल्पश्रीः कोष्ठागारी गतस्मयः ॥ ४३ ॥

शतपञ्चकसंघातैर्भोक्तुं तस्य गृहं ततः।
क्रमात्प्रत्येकबुद्धानां सहस्रद्वयमाययौ ॥ ४४ ॥

1117 5 तस्य तत्पुण्यवासेन जातो लब्धफलश्रिया।
दुर्भिक्षदानजनितो रत्नकोशस्तदाक्षयः ॥ ४५ ॥

सुखं सनातनं पुण्यभोग्यत्वं प्रणिधानतः।
शास्तुस्ततः परेणायं सम्यक्संबोधिमापितः ॥ ४६ ॥

पुण्येन पापेन च वेष्टितेयं
संसारिणां कर्मफलप्रवृत्तिः।
10 सितासिता बन्धनरज्जुरेषा
तत्संक्षये मोक्षपथं वदन्ति ॥ ४७ ॥

इति क्षितीशः कथितं जिनेन
मोहव्यपायेन निशम्य मोक्षम्।
15 क्लेशक्षयार्हं शममेव मत्वा
पुण्याभिमानं शिथिलीचकार ॥ ४८ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शालिस्तम्बावदानं नाम षट्चत्वारिंशः पल्लवः ॥



# ४७ सर्वार्थसिद्धावदानम् ।

D 1119

स्वार्थप्रवृत्तौ विगतस्पृहाणां
परोपकारे सततोद्यतानाम् ।
क्लेशेष्वभीता व्यसनैरनीता
विघ्नैरपीडाकरमेति सिद्धिः ॥ १ ॥ 5

श्रावस्त्यां भगवान् पूर्वं जिनो जेतवनस्थितः ।
धर्माख्यानप्रसङ्गेन भिक्षुसंघमभाषत ॥ २ ॥

आसीदखिलभूपालमौलिलालितशासनः ।
सिद्धार्थो नाम सुकृती सार्वभौमो महीपतिः ॥ ३ ॥

सागराख्यस्य नागस्य सूनुर्जलधिवासिनः । 10
सर्वार्थसिद्धः पुत्रत्वं प्रययौ तस्य भूपतेः ॥ ४ ॥

स भाद्रकल्पिको बोधिसत्त्वः सत्त्वोज्ज्वलप्रभः ।
जातमात्रः क्षितितलं चक्रे पूर्णं स्वऋद्धिभिः ॥ ५ ॥

तस्य प्रवर्धमानस्य धर्मस्येव समुद्ययौ ।
समस्तभुवनव्यापि विबुधाभ्यर्चितं यशः ॥ ६ ॥ 15

D 1121

स कदाचिद्वरोद्याने स्यन्दनेन युवा व्रजन् ।
ददर्श वृद्धपुरुषं देवतानिर्मितं पुरः ॥ ७ ॥

तं विलोक्य जराजीर्णं जातवैराग्यवासनः ।
संसारमिव निःसारं स शरीरममन्यत ॥ ८ ॥

उद्यानयात्राविरतः शनैः प्रतिनिवृत्य सः । 20
दारिद्र्यविद्रुतच्छायानद्राक्षीत् कृपणान् पथि ॥ ९ ॥

दृष्ट्वा तानसुखक्लिष्टान् करुणाकृष्टमानसः ।
अचिन्तयदहो दुःखं सहन्ते भुवि दुर्गताः ॥ १० ॥

अदानप्रभवं दुःखं वदन्तीति विसंगताः ।
पृथिव्यां रत्नपूर्णायां परपिण्डोपजीविनः ॥ ११ ॥ 25

इदमेवाविसंवादि चिह्नं कलुषकर्मणाम् ।
दीना यदेते याचन्ते पुरुषं पुरुषाः परम् ॥ १२ ॥

अहो दुष्कृतमेतेषामवधूताः पदे पदे ।
यदेते मार्गणोद्विग्ना भिक्षित्वापि बुभुक्षिताः ॥ १३ ॥

इति संचिन्त्य सुचिरं विश्वक्लेशक्षयोद्यतः । 30
अदरिद्रं जगत्कर्तुं रत्नार्थी जलधिं ययौ ॥ १४ ॥

D 1123

कथंचिदिव संसक्तः स पित्रा दृढनिश्चयः ।
समारुह्य प्रवहणं रत्नद्वीपमवाप्तवान् ॥ १५ ॥
तत्र प्रवहणारूढान् वणिजः सहयायिनः ।
सोऽब्रवीत्क्रियतां कामं युष्माभिर्मणिसंग्रहः ॥ १६ ॥
5 एतैः सामान्यरत्नैस्तु मम नास्ति प्रयोजनम् ।
कोशे महान्ति भास्वन्ति सन्ति रत्नोत्तमानि नः ॥ १७ ॥
किं तु चिन्तामणिप्राप्त्यै विपुलोऽयं ममोद्यमः ।
तेन विद्रुतदारिद्र्यां कर्तुमिच्छामि मेदिनीम् ॥ १८ ॥
श्रुतं मया नागराजः सागराख्यो महोदधौ ।
10 वसत्यस्ति गृहे तस्य चिन्तितार्थप्रदो मणिः ॥ १९ ॥
विलङ्घ्य विषमं मार्गं तमादातुं व्रजाम्यहम् ।
नास्ति धैर्यसहायानां दुर्गमं व्यवसायिनाम् ॥ २० ॥
न च मद्विरहे किंचिद् व्यसनं वो भविष्यति ।
सत्यमेव परार्थोऽयं यदि मे सुकृतोद्यमः ॥ २१ ॥
15 इत्युक्त्वा तान् समामन्त्र्य प्रतस्थे स्थिरनिश्चयः ।
महतीं धृतिमालम्ब्य सत्त्ववान् पार्थिवात्मजः ॥ २२ ॥

D 1125

गुल्फमात्रेण सप्ताहं गत्वा जङ्गमवर्त्मना ।
जानुदघ्नेन सप्ताहं सप्ताहं पौरुषेण च ॥ २३ ॥
चत्वारि सप्तरात्राणि ततः पुष्करिणीजलैः ।
20 गत्वा दृष्टिविषान् घोरान् ददर्श फणिनः पुरः ॥ २४ ॥
मैत्रीयुक्तेन मनसा कृत्वा तानथ निर्विषान् ।
क्रूरकोपैर्वृतं यक्षैर्यक्षद्वीपमवाप सः ॥ २५ ॥
तत्र मैत्रेण मनसा वीतक्रोधान् विधाय तान् ।
शुश्राव तैरभिहितं विपुलोत्साहविस्मितैः ॥ २६ ॥
25 कुमार स्फीतसत्त्वेन तथा वीर्येण चामुना ।
नागराजस्य भवनं समाहितमवाप्य तम् ॥ २७ ॥
कालेन सम्यक्संबुद्धः सर्वज्ञस्त्वं भविष्यसि ।
श्रावकाश्च भविष्यामो वयं त्वदनुयायिनः ॥ २८ ॥
प्रसन्नैरिति तैरुक्तमभिनन्द्य नृपात्मजः ।
30 रक्षोवरावृतं प्राप राक्षसद्वीपमुत्कटम् ॥ २९ ॥
तथैव विगतक्रूरविकारैस्तैः स पूजितः ।
भुजोत्क्षेपेण निक्षिप्तः क्षणान्नागेन्द्रसद्मनि ॥ ३० ॥

स तत्र दीप्तविभवे दिव्योत्साहसुखोचितः । D 1127
अशृणोद्दीर्घदुःखार्तिसूचकं रोदनध्वनिम् ॥ ३१ ॥
स तमाकर्ण्य सोद्वेगः प्रकृत्यैव दयार्द्रधीः ।
किमेतदिति पप्रच्छ दृष्ट्वाग्रे नागकन्यकाम् ॥ ३२ ॥
सा तं बभाषे संसक्तशोकोष्मपिशुनैर्मुहुः । 5
म्लानयन्तीं स्वनिश्वासैर्बिम्बाधरदलत्विषम् ॥ ३३ ॥
गुणवान् नागराजस्य पुत्रः कमललोचनः ।
ज्येष्ठः सर्वार्थसिद्धाख्यः प्रियः पञ्चत्वमागतः ॥ ३४ ॥
ततः प्रतिगतानन्दे विनिवृत्तसुखोत्सवे ।
घनेन रोदनेनास्मिन्न भवेद्भवने स्थितिः ॥ ३५ ॥ 10
इति तस्या वचः श्रुत्वा सोऽन्तः परिचितां वहन् ।
स्वदेशदर्शनप्राप्तो नागराजान्तिकं ययौ ॥ ३६ ॥
नागराजस्तमायान्तं परिज्ञाय प्रियासखः ।
एह्येहि पुत्रेति वदन् बभूवानन्दविह्वलः ॥ ३७ ॥
मर्त्यजन्मकथां तेन स्वं चागमनकारणम् । 15
श्रुत्वा निवेदितं नागः परिष्वज्य जगाद तम् ॥ ३८ ॥
चिन्तामणिरयं पुत्र मम मौलिविभूषणम् । D 1129
गृह्यतां तव संकल्पं न वन्ध्यं कर्तुमुत्सहे ॥ ३९ ॥
देयः कृतजगत्कृत्यो ममैवायं पुनस्त्वया ।
इत्युक्त्वास्मै ददौ दिव्यचूडं रत्नं विमुच्य सः ॥ ४० ॥ 20
चिन्तामणिं समादाय कुमारस्तरणिद्युतिः ।
हृष्टः प्रणम्य नागेन्द्रं ययौ प्रवहणान्तिकम् ॥ ४१ ॥
समुद्रदेवता तत्र तं दृष्ट्वा श्रुततत्कथा ।
उवाच कीदृशः साधो प्राप्तश्चिन्तामणिस्त्वया ॥ ४२ ॥
* * * * । 25
* * * * ॥ ४३ ॥
* * * * ।
* * * * ॥ ४४ ॥*
समुद्रे पतितं दृष्ट्वा रत्नं कृच्छ्रतरार्जितम् ।
स जगाद दृढोद्योगवैफल्योद्वेगनिश्चलः ॥ ४५ ॥ 30

---

* Not legible in the original Ms.

अहो गुणोचिताकारा प्रणयान्मृदुवादिनी ।
विद्वेषकलुषं कर्म कृत्वा त्वं न विलज्जसे ॥ ४६ ॥

D 1131 परोत्कर्षेषु संघर्षशोकक्लेशमुपैति यः ।
शीतला अपि तस्यैता ज्वालावलयिता दिशः ॥ ४७ ॥

5 परोत्साहः प्रियो यस्य तस्य सत्त्वमहोदधेः ।
कर्पूरधवलं धत्ते त्रिलोकीतिलकं यशः ॥ ४८ ॥

देवि प्रयच्छ मे रत्नमस्माद्विरम पातकात् ।
अपवादलतां कर्म न साधोरधिरोहति ॥ ४९ ॥

लोभात्प्रमादाद्द्वेषाद्वा रत्नं चेन्न प्रयच्छसि ।
10 शोषयाम्येष जलधिं तदिमं ते समाश्रयम् ॥ ५० ॥

इत्युक्ताप्यसकृत्तेन सा रत्नं न ददौ यदा ।
स तदा स्वप्रभावेण शोषायाब्धेः समुद्ययौ ॥ ५१ ॥

ध्यातमात्रं सहस्राक्षवचसा विश्वकर्मणा ।
निर्मितं सहसा तस्य पत्रमाविरभूत्करे ॥ ५२ ॥

15 स तेनागस्त्यचुलुकाकारेणाम्भः पयोनिधेः ।
अन्तरीक्षे समुत्क्षिप्य चिक्षेप क्षमणोद्यतः ॥ ५३ ॥

कृते भूभागशेषेऽब्धौ तेनात्यद्भुतकारिणा ।
सुरनिर्भर्त्सिता भीता देवतास्मै मणिं ददौ ॥ ५४ ॥

D 1133 निर्व्याजं साहसं दीप्तिं रत्नानामिव तत्त्वतः ।
20 प्रभावं वेत्ति महतां मन्त्राणां तपसां च कः ॥ ५५ ॥

स्फारस्तावदपारवारिविरसव्यापारहेलावलात्
कल्लोलावलियन्त्रिताम्बरतया रत्नाकरः श्रूयते ।
गम्भीरः पुनरप्रमेयमहिमा कोऽपि प्रभावः सतां
यस्मिन् विस्मयधाम्नि चिन्तनविधावन्ते प्लवन्ते धियः ॥ ५६ ॥

25 ततश्चिन्तामणिं बद्ध्वा निजसार्थेन संगतः ।
राजसूनुः स्वनगरं प्राप पूर्णमनोरथः ॥ ५७ ॥

कृतकृत्यः प्रहृष्टेन स पित्रा तत्र पूजितः ।
ध्वजाग्रे रत्नमाधाय जगाद जनसंसदि ॥ ५८ ॥

30 परार्थ एव यत्नोऽयं नात्मार्थो यदि मे क्वचित् ।
तेन सत्येन लोकोऽयं सर्वं यात्वदरिद्रताम् ॥ ५९ ॥

इत्युक्ते सत्त्वनिधिना तेन दीनदयालुना ।
रत्नवृष्टिरपर्यन्ता निपपात महीतले ॥ ६० ॥

तेन रत्नसमूहेन दिक्षु सर्वासु भास्वता ।
ययौ जनस्य दारिद्र्यमयं निःशेषतां तमः ॥ ६१ ॥

आशापाशवतां बलात्प्रविशतां बाह्याङ्गणं श्रीमतां 5 D 1135
द्वाःस्थाघातवतां मुहुर्विचलतां द्वारोदरे सीदताम् ।
दीर्घैर्निःश्वसितैः शुचा निपततां देहक्षयं काङ्क्षतां
दीनानां मणिराशिरश्मिशबलः श्रीसंगमः कोऽप्यभूत् ॥ ६२ ॥

तच्छासनादुरगनायकमेव याते
चिन्तामणौ विगतदैन्यजने च लोके । 10
सर्वत्र दानरसिकस्य जनस्य चेतः
सर्वार्थिसार्थविरताकुलितं बभूव ॥ ६३ ॥

सर्वार्थसिद्धः क्षितिपालसूनुः
योऽभूत्स एवाहमिहान्यदेहः ।
श्रुत्वेतिवृत्तं कथितं जिनेन 15
ते भिक्षवस्तन्मयतामवापुः ॥ ६४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सर्वार्थसिद्धावदानं सप्तचत्वारिंशः पल्लवः ॥



D 1137

# ४८ हस्तकावदानम् ।

मत्तेभकुम्भोच्चकुचाभिरामाः
कर्पूरहारांशुविलासहासाः ।
प्रीतिप्रदाः पुण्यवतां भवन्ति
5 प्रौढा युवत्यश्च विभूतयश्च ॥ १ ॥
तथागते भगवति श्रावस्त्यां वनचारिणि ।
अभवत्सुप्रबुद्धाख्यः श्रीमान् गृहपतिः पुरा ॥ २ ॥
बभूव हस्तको नाम तस्यातिदयितः सुतः ।
पूर्वार्जितानां पुण्यानां साकार इव संचयः ॥ ३ ॥
10 तस्य जन्मदिने जातश्चामीकरमयो महान् ।
एकीभूत इवाश्चर्यव्रजः प्रवरकुञ्जरः ॥ ४ ॥
स गजेन्द्रः कुमारश्च तत्पितुश्च मनोरथः ।
लोककौतुककोशाश्च पूर्णतां तुल्यमाययुः ॥ ५ ॥
स शशीव शिशुः काले कलानिलयतां गतः ।
15 रुरुचे रुचिमान् सर्वलोकलोचनबान्धवः ॥ ६ ॥
D 1139
स शनैः पूरिताभोगभुजस्तम्भविभूषणम् ।
लेभे मनोभवारम्भभवनं नवयौवनम् ॥ ७ ॥
कदाचिदथ भूभर्तुः स प्रसेनजितः सुताम् ।
तनुचीवरचिह्नेन सहजेन विराजिताम् ॥ ८ ॥
20 कन्यां चीवरकन्याख्यां लावण्यललिताननाम् ।
उद्यानदर्शनायातां ददर्शायतलोचनाम् ॥ ९ ॥
अक्लिष्टरूपामालोक्य तामपर्युषितद्युतिम् ।
विस्मयस्मरयोस्तुल्यमाययौ सहसा वशम् ॥ १० ॥
सोऽचिन्तयदहो कान्तमिदमत्यद्भुतं वपुः ।
25 यस्मिन् भाति मुखव्याजाददोषविशदः शशी ॥ ११ ॥
लावण्यमप्रतिममेव बिभर्ति तन्वी
बन्धूकबन्धुरधरो मधुरस्वभावः ।
द्रोहोद्यतः सरसविद्रुमपल्लवानां
बिम्बप्रभाप्रसभविभ्रमवन्ध्यकारः ॥ १२ ॥
30 वक्त्रं न क्षमते मदं शशभृतः क्लिश्नाति कान्तिः सुधा-
मुत्फुल्लोत्पलकाननस्य कुरुते दृष्टिः प्रभाभर्त्सनम् ।
D 1141
मन्ये मन्मथसंगमोचिततनोः सापत्न्यभीतिप्रदा
लीलास्याः सहसा विलासलहरीशोषं विधत्ते रतेः ॥ १३ ॥

उद्वृत्ते कठिने पयोधरयुगे नश्यद्विवेके चिरं
   यस्या दोषमयेऽप्यहो गुणवता हारेण बद्धा स्थितिः ।
यच्चास्मिन्नवलम्बतेऽम्बुजधिया रोलम्बरेखा मुखे
   लोलाक्ष्याः किमपि प्रशान्तनयने लीनं मुनीनां मनः ॥ १४ ॥
इति चिन्तयतस्तस्य वपुः पुष्पशरोपमम् ।  5
विलोक्य भूपतिसुता बभूवाश्चर्यनिश्चला ॥ १५ ॥
हृते लज्जांशुके तस्याः स्मरेण स्मितकारिणा ।
प्रत्यग्रपुलकाकीर्णं वपुः स्पष्टमदृश्यत ॥ १६ ॥
रुद्धा नवाभिलाषेण वैलक्ष्येण निवर्तिता ।
मनस्तत्रैव निक्षिप्य सा शून्येव शनैर्ययौ ॥ १७ ॥  10
राजधानीं समासाद्य लज्जाविस्मयमन्मथैः ।
मीलितेव निलीनेव प्रोषितेव बभूव सा ॥ १८ ॥
कुमारोऽपि स्वभवने समुद्भूतमनोभवः ।
तामेवेन्दुमुखीमग्रे संकल्पैरलिखन्मुहुः ॥ १९ ॥
स तां मानससर्वस्वं स्मरविद्यामिव स्मरन् ।  15  D 1143
प्रदध्यौ दुर्लभां मत्वा तनयां चक्रवर्तिनः ॥ २० ॥
जन्मान्तरे तनुर्यस्य तपःपरिचिता चिरम् ।
धन्यः स तामवाप्नोति लतां सुकृतशाखिनः ॥ २१ ॥
रम्यप्रदानपुण्येन तद्दर्शनमवाप्यते ।
न जाने तानि पुण्यानि येषां तत्संगमः फलम् ॥ २२ ॥  20
तद्वक्त्रशीतकिरणस्मरणोत्सवेन
   तस्याश्च दुर्लभतया विरहोष्मणा मे ।
नो वेद्मि किं धृतिरियं किमयं विमोहः
   किं जीवितं किमसुभिः सह विप्रयोगः ॥ २३ ॥
तद्वक्त्राब्जजितः प्रसह्य भजते क्षैण्यं क्षपावल्लभः  25
   तद्भ्रूविभ्रमलज्जितं च विनतिं धत्ते धनुर्मान्मथम् ।
तस्याः पल्लवपेशलद्युतिमुषा शोणाधरेणार्दितं
   नूनं प्राप्य पराजयं वनमहीं बिम्बं समालम्बते ॥ २४ ॥
इति पूर्णेन्दुवदनावदनध्याननिश्चलः ।
निशां निनाय संत्यक्तः सेर्ष्ययेव स निद्रया ॥ २५ ॥  30
कन्यादर्शनवृत्तान्तं ततस्तेन निवेदितम् ।  D 1145
श्रुत्वा पितास्य संक्रान्तचिन्तापरिचितोऽभवत् ॥ २६ ॥

स तमूचे वयं पुत्र राज्ञोऽस्य पुरवासिनः ।
स कथं ते दुहितरं चक्रवर्ती प्रदास्यति ॥ २७ ॥
अशक्यं नैव कुर्वन्ति समीहन्ते न दुर्लभम् ।
असंभाव्यं न भाषन्ते मानकामा मनीषिणः ॥ २८ ॥
5 चूतचम्पकवल्लीषु स्वाधीनासु निरादरः ।
चिन्तयन् पारिजातस्य लतां शुष्यति षट्पदः ॥ २९ ॥
तव तस्याश्च संबन्धः प्राग्जन्मविहितो यदि ।
तदवश्यं भवत्येव निष्प्रयत्नफलोदयः ॥ ३० ॥
आशापाशैरनाकृष्टं विचारैरकदर्थितम् ।
10 प्रयत्नभारैरश्रान्तं विधत्ते भवितव्यता ॥ ३१ ॥
इत्याकर्ण्य पितुर्वाक्यं तत्तथेति विचिन्तयन् ।
न चेतः कन्यकानीतं समानेतुं शशाक सः ॥ ३२ ॥
स गत्वा दन्तयुगलं ययाचे हेमकुञ्जरम् ।
नवसंदर्शने राज्ञः प्रीतियोग्यमुपायनम् ॥ ३३ ॥
D 1147 15 पुण्यबन्धेन करिणा दत्तं दन्तयुगं ततः ।
स हेममयमादाय द्रष्टुं भूमिपतिं ययौ ॥ ३४ ॥
स रत्नरुचिरं प्राप्य भवनं पृथिवीपतेः ।
प्रविश्य प्रणतः प्रीत्यै हेमदन्तद्वयं ददौ ॥ ३५ ॥
भूभुजा विश्रुतगुणः प्रसादेनाभिनन्दितः ।
20 वरं गृहाणेत्युक्तश्च स न जग्राह किंचन ॥ ३६ ॥
तस्यादीनद्युतेश्चक्रे मानमभ्यधिकं नृपः ।
औचित्यचारुचरितः प्रियः कस्य न निःस्पृहः ॥ ३७ ॥
स सदा दर्शने राज्ञः काञ्चनाङ्गानि दन्तिनः ।
पुनर्जातनवाङ्गेन दत्तानि प्रीतये ददौ ॥ ३८ ॥
25 तमुवाच महीपालः सेवाप्रणययन्त्रितः ।
दूतीं मनःप्रसादस्य वदनद्युतिमुद्वहन् ॥ ३९ ॥
प्रभूतहेमसंभारां गुर्वीं सेवामिमामहम् ।
न सहे पौरवर्गो हि भरणीयो महीभृताम् ॥ ४० ॥
संविभज्य जनानीतैः का प्रीतिर्मम काञ्चनैः ।
30 तवानर्घगुणा मूर्तिरियमेव मम प्रिया ॥ ४१ ॥
D 1149 लोभः पुरुषरत्नेषु भूषणार्हेषु शोभते ।
राज्ञां कोशेषु सीदन्ति हेमरत्नाश्मसंचयाः ॥ ४२ ॥

समीहिततमं तुभ्यं किं प्रयच्छामि कथ्यताम्।
निःशेषकोशदानेन न नामानुशयोऽस्तु मे ॥ ४३ ॥
राज्ञां दृक्पातपात्रेण प्राप्यन्ते यदि न श्रियः।
तदनर्थं गतार्थिन्या कोऽर्थः पार्थिवसेवया ॥ ४४ ॥
इत्युक्तः क्षितिपालेन कुमारः कलिताञ्जलिः। 5
तमभाषत भूपाल दातुमर्हति कोऽपरः ॥ ४५ ॥
अनर्थितेन रत्नानि विबुधेभ्यः प्रयच्छता।
तदुन्निद्रं समुद्रस्य मुद्रितं भवता यशः ॥ ४६ ॥
महतापि प्रयत्नेन पूर्यते न महाशयः।
अल्पकानां यदैश्वर्यं दारिद्र्यं तन्महीयसाम् ॥ ४७ ॥ 10
किं तु त्वद्भुजगुप्तानां धर्ममार्गेण जीवताम्।
जनानां नास्ति दारिद्र्यं द्रविणं येन मृग्यते ॥ ४८ ॥
धनार्थिनो न तु वयं न च सेवाधिकारिणः।
धनं धनं धनधियां मान एव मनस्विनाम् ॥ ४९ ॥
मीलद्गुणेन परमेश्वरसेवनेन 15 D 1151
निर्मूलतां सुमनसां सहसा गतानाम्।
दैन्यात्पुनः कृपणपण्यपथे च्युतानां
न स्पर्शमात्रमपि साधुजनः करोति ॥ ५० ॥
अर्थित्वान्मरणं वरं तनुभृतां दैन्यावसन्नात्मनां
अर्थी सर्वजनावमानवसतिः सत्कारयोग्यः शवः। 20
कुम्भस्तावदधः प्रयाति गुणवान् कूपावतारे परं
यावन्मोहतमःप्रवेशविवशः प्राप्तोऽर्थितां लम्बते ॥ ५१ ॥
सामान्या धनसंपदः क्रयकृषिप्राप्याः सदा धीमतां
संतोषो यदि नास्ति तत्किमपरा भूमिर्निधानावृता।
सन्त्येवातिशयप्रसादनिरतास्ता हेमरत्नक्रियाः 25
कस्येष्टः प्रियसंगमाय वपुषां सेवामयो विक्रयः ॥ ५२ ॥
इत्यपारधियस्तस्य वचः श्रुत्वा महीपतिः।
गृह्यतामपरं किंचिदित्यभाषत सादरः ॥ ५३ ॥
औचित्यचतुरालापः कर्कशोऽपि नृणां प्रियः।
कृपणश्चाटुकारोऽपि कर्णशूलाय केवलः ॥ ५४ ॥ 30
औदार्यपरितुष्टेन स राज्ञाभ्यर्थितः परम्। D 1153
तमूचे यदि तुष्टोऽसि सुता मह्यं प्रदीयताम् ॥ ५५ ॥

इत्युक्ते तेन नृपतिः संदेहान्दोलिताशयः।
प्रातर्वक्ताहमित्युक्त्वा क्षणं क्ष्मातलमैक्षत ॥ ५६ ॥
स कुमारं विसृज्याथ प्रधानामात्यमब्रवीत्।
प्रसादरभसेनैव कृतं वाक्चापलं मया ॥ ५७ ॥
5 चक्रवर्तिकुलोत्पन्ना कन्या पुण्यपणोचिता।
कथं सामान्यपौराय गुणमात्रेण दीयते ॥ ५८ ॥
ददामीति प्रतिश्रुत्य पश्चादनुशयाकुलः।
कथं सारधनो भूत्वा भविष्याम्यर्थिनिष्फलः ॥ ५९ ॥
कथं प्राप्तस्य तस्याहं प्रातर्द्रष्टा मुखं पुरः।
10 प्रियोऽप्यप्रियतां यातः स मे दुर्लभयेच्छया ॥ ६० ॥
नूनं गुणोपपन्नोऽपि प्रकृत्यैव शरीरिणाम्।
वक्ति यावन्न देहीति तावद्भवति वल्लभः ॥ ६१ ॥
इति भूमिपतेः श्रुत्वा वचो दोलावलम्बिनः।
तमुवाच महामात्यः संचिन्त्यावसरोचितम् ॥ ६२ ॥
D 1155 15 अनालोचितपर्यन्ताः प्रत्यग्रसरसादराः।
स्वभावरभसा एव भवन्ति प्रभुबुद्धयः ॥ ६३ ॥
अशक्यार्थनया तेन लुब्धेनेव गुणोदयः।
राजसेवाप्रवृत्तेन हेमहस्ती विनाशितः ॥ ६४ ॥
वाच्योऽसौ भवता स्वैरं कन्यार्थी पुनरागतः।
20 हेमहस्तिनमारुह्य प्राप्तः प्राप्स्यसि मे सुताम् ॥ ६५ ॥
तेनोत्कृत्तः स्वहस्तेन कुतस्तस्य स कुञ्जरः।
न चासौ तद्विरहितः पुनरायाति लज्जया ॥ ६६ ॥
इत्यमात्यस्य वचसा नृपतिर्युक्तिमाश्रितः।
प्राप्तं कुमारमन्येद्युस्तदेवाभिमुखोऽवदत् ॥ ६७ ॥
25 कुमारोऽपि गृहं गत्वा विवाहोचितमङ्गलैः।
हैमद्विरदमारुह्य स्वजनेन सहाययौ ॥ ६८ ॥
स्वर्णवारणसंरूढं तमायान्तं महीपतिः।
विलोक्याश्चर्यविभवं मेने पुण्यवतां वरम् ॥ ६९ ॥
कौतुकादथ भूपालस्तं गजं हेमविग्रहम्।
30 आरुरोह महोत्साहः सुमेरुमिव वज्रभृत् ॥ ७० ॥
D. 1157 आरूढे पृथिवीपाले न चचाल स कुञ्जरः।
प्रससर्प कुमारेण पुनश्चालंकृतासनः ॥ ७१ ॥

तं ज्ञात्वा नृपतिर्दैवं तत्प्रभावेण विस्मितः ।
धन्योऽस्मीति वदन् कन्यां ददौ तस्मै स्मरश्रियम् ॥ ७२ ॥
अभ्यर्च्य कन्यारत्नेन नृपतिः पुरुषोत्तमम् ।
हर्षोत्सवसमुद्भूतः सुधासिन्धुरिवाबभौ ॥ ७३ ॥
ततः कुमारे दयितामादाय स्वगृहं गते । 5
सफलोऽभूदनङ्गस्य कार्मुकाकर्षणश्रमः ॥ ७४ ॥
नवे वयसि भोगार्हे नवकान्तासमागमे ।
तस्याभूद्विभवोदारः सदा नवनवोत्सवः ॥ ७५ ॥
ततः कदाचिद्भूपालः कृतकृत्यः प्रसेनजित् ।
पुण्यप्रभावं जामातुः कलयन् समचिन्तयत् ॥ ७६ ॥ 10
अहो दिव्यः प्रभावोऽसौ कुमारस्य प्रदृश्यते ।
न हि सामान्यपुण्यानां पाको भवति तद्विधः ॥ ७७ ॥
कुलं लक्ष्मीर्हर्म्यं हृतशशिमदा रूपलहरी
वयः संभोगार्हं गुणपरिचयो भूषणचयः ।
यशः पुण्योद्यानप्रसृतकुसुमोल्लासरुचिरं 15 D 1159
न विद्मः कस्यायं कुशलपरिणामस्य विभवः ॥ ७८ ॥
इति संचिन्त्य सुचिरं स संजातकुतूहलः ।
सर्वज्ञदर्शनाबद्धमारुरोह मनोरथम् ॥ ७९ ॥
स जामातरमाहूय सुतां च सचिवैः सह ।
भगवन्तं ययौ द्रष्टुं मनसा प्रथमं गतः ॥ ८० ॥ 20
याते दृष्टिपथं जेतवने संत्यज्य वाहनम् ।
उपसृत्य नृपः पद्भ्यां भगवन्तं व्यलोकयत् ॥ ८१ ॥
स तं प्रणम्य तत्पादपद्मभूतिशिखामणिः ।
सुतां जामातरं चास्मै नम्रो नाम्ना न्यवेदयत् ॥ ८२ ॥
उपविष्टेषु सर्वेषु प्रणामानतमौलिषु । 25
पप्रच्छ राजा सर्वज्ञं भगवन्तं कृताञ्जलिः ॥ ८३ ॥
अयं गुणगणोपेतः कुमारः श्रीमतां वरः ।
हैमेन दन्तिनायातो भगवन् केन कर्मणा ॥ ८४ ॥
इयं चीवरकन्या च मत्सुतास्य नवा वधूः ।
केन पुण्यप्रभावेण जीवितादधिवल्लभा ॥ ८५ ॥ 30
इति पृष्टः क्षितीशेन सर्वविद्भगवान् जिनः । D 1161
तमूचे भूपते पुंसां पुण्योद्भूता विभूतयः ॥ ८६ ॥

यदुदारो यदुचितो यद् भ्राजिष्णु यदद्भुतम् ।
स्पृहणीयं च यल्लोके तत्तत्पुण्यसमुद्भवम् ॥ ८७ ॥
विपश्यी भगवान् पूर्वं सुगतः सह भिक्षुभिः ।
चचार लोककृपया राज्ञो बन्धुमतः पुरे ॥ ८८ ॥
5 तस्मिन्नवसरे तत्र कुमार्या सह दारकः ।
विक्रीडावर्त्मनि पुरः कृत्वा दारुमयं गजम् ॥ ८९ ॥
तौ विलोक्य समायान्तं ध्मातजम्बूनदद्युतिम् ।
फुल्लपद्मदलाकारकरुणास्निग्धलोचनम् ॥ ९० ॥
भगवन्तं समुद्भूततद्भक्तिसरसोन्मुखौ ।
10 क्रीडागजं निवेद्यास्मै प्रणतौ तस्थतुः पुरः ॥ ९१ ॥
भगवानपि सर्वज्ञस्तयोर्ज्ञात्वा मनोरथम् ।
दयया चरणस्पर्शं विदधे दारुदन्तिनः ॥ ९२ ॥
सम्यक् चित्तप्रसादेन दृष्टौ भगवताथ तौ ।
प्रणिधानं विवाहाय चक्रतुर्दारकौ मिथः ॥ ९३ ॥
D 1163 15 कुलप्रभावविभवैर्भूयाज्जन्म ममोचितम् ।
वाहनं हेमदन्ती च कुमारस्येत्यभून्मतिः ॥ ९४ ॥
दृष्ट्वा भगवतः कन्या संसक्ते चारुचीवरे ।
जन्मचीवरयुक्ता स्यामहमेतदचिन्तयत् ॥ ९५ ॥
स एष प्रणिधानेन जातस्तेनेह हस्तकः ।
20 इयं चीवरकन्या च तनुचीवरलक्षणा ॥ ९६ ॥
इति श्रुत्वा क्षितिपतिस्तद्वृत्तं सुगतोदितम् ।
मुकुटस्पृष्टतत्पादपद्मः स्वभवनं ययौ ॥ ९७ ॥
याते सविस्मयं राज्ञि कुमारः सह जायया ।
कथ्यमानं भगवता धर्मं शुश्राव शुद्धधीः ॥ ९८ ॥
25 ततस्तौ जातवैराग्यौ क्षीणसंसारवासनौ ।
प्रव्रज्यया जितक्लेशौ शुद्धां बोधिमवापतुः ॥ ९९ ॥
विततसुकृतपुण्याभ्यासयोगेन पुंसां
भवति कुशलभाजां धर्मकामार्थसंपत् ।
अभिमतमथ भुक्त्वा तत्फलं सादरास्ते
30 विघनगगनकान्तिं शान्तिमन्ते भजन्ते ॥ १०० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
हस्तकावदानमष्टचत्वारिंशः पल्लवः ॥

